नाद्यः , उपहितस्य वाच्यत्वस्य त्वदिष्टत्वात् । उपहितस्यावाच्यत्वसाधने स्वरूपस्यावाच्यत्वासिद्धिश्च । न द्वितीयः , तस्य स्वरूपमात्रतया उपहितस्य ततो भेदासिद्धेः । किंचिदुपाध्युपहितं उपाध्यन्तरोपहितापेक्षया भिद्यते ननु स्वरूपापेक्षयापि , तथा सति घटाकाशस्यानाकाशत्वापत्तेः । किंचैवमौपाधिकभेदे सत्यपि स्वाभाविकाभेदस्यानपायात् विशेष्यशक्तेरनपायाद्बाधः । किंच तात्पर्यविषयपदेनापि स्वरूपं लक्ष्यम् , अन्यथा योग्यताविरहात् । ब्रह्मपदेनैव च तत्सम्भवति । तस्माद्व्यर्थं विशेषणम् । किञ्च उपहितभिन्नस्यानुपहितस्य तात्पर्यविषयादिपदेन लक्षणीयतया त्वयोच्यमानस्य पक्षतयाभिमतस्यासिद्धेराश्रयासिद्धिः । वाक्यार्थत्वं च किं विवक्षितम् ? किं पदार्थसंसर्गत्वम् , उत वाक्य जन्यप्रतीतिविषयत्वम् ; वाक्यजन्यप्रतीतिविशेष्यत्वं वा ? नाद्यः स्वरूपासिद्धेः न द्वितीयः , पदार्थे व्यभिचारात् । न तृतीयः, स्वरूपासिद्धेः । सत्यादिवाक्यान्निष्प्रकारकस्वरूपमात्रविषयप्रतीतेस्त्वयाङ्गीकारात् । पदार्थे व्यभिचाराच्च । नच तदन्यत्वेन विशेषणम् , पदजन्यप्रतीतिविषयान्यत्वविवक्षायामसिद्धेः , पदानामेव वाक्यार्थबोधहेतुत्वात् । पदशक्तिविषयभिन्नविवक्षायां साध्याविशेषात् ।

नच स्वविषयत्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयपदमात्रघटितस्वप्रतिपादकवाक्यवत्वादिति हेतुः , वाक्यार्थप्रतीतौ हि तत्पदार्थान्वयानुभवत्वं तत्तत्पदजन्यतावच्छेदकमिति वाच्यम् ,—अधिकरणे अधिकरणत्वमित्यत्राधिकरणत्वस्य प्रकृतिप्रत्ययपदान्तररूपसकलप्रतिपाद्यत्वात् ; नीलमुत्पलमित्यत्र पदद्वयस्यापि विशेष्यवाचित्वेन विशेष्ये व्यभिचाराच्च । संयोगिदण्डवान् देवदत्त इत्यत्र व्यभिचाराच्च । घटान्यवान् घटः नित्यवदाकाशं प्रपञ्चो मिथ्येत्यादौ व्यभिचाराच्च । ननु स्वप्रकारकस्वाविशेष्यकज्ञाननिष्ठत्वमपि स्वविषयत्वावच्छिन्नकार्यताविशेषणमिति चेन्न,-सत्यज्ञानादिवाक्यजन्यप्रतीतौ ब्रह्मणो विशेष्यतया स्वरूपासिद्धेः । नच वाक्यस्याखण्डार्थत्वात् तज्जन्यप्रतीतौ ब्रह्म न प्रकारो विशेष्यं वेति वाच्यम् ,-तथासति प्रकृष्टप्रकाशादिवाक्यस्यापि तथात्वेन चन्द्रादिपदार्थे व्यभिचारात् । नच तत्रापि स्वरूपमात्रस्य वाक्यार्थत्वाचन्द्रत्वादिविशिष्टस्य शक्यत्वेपि स्वरूपस्याशक्यत्वात् न व्यभिचार इति वाच्यम् ,-तथापि शब्दवदाकाशमिति लक्षणवाक्यार्थे आकाशे व्यभिचारात् ; आकाशस्वरूपमात्रस्याकाशपदशक्यत्वात् । नच पदजन्यस्मृत्यविषयत्वे सति वाक्यजन्यप्रतीतिविषयत्वं विवक्षितम् , विशिष्टस्यार्थत्वेपि स्वरूपस्यापि तदन्तर्भावेन हेत्वसिद्धेः; साध्याविशेषात् , विशेष्यवैयर्थ्याच्च ।

तद्वाक्यस्थपदशक्यतावच्छेदकधर्मवदन्यत्वादित्यपि न हेतुः ; शक्यतावच्छेदकधर्माश्रयान्यत्वविवक्षायां यत्किंचिद्घटभिन्नत्वाद्घटे व्यभिचारात् । शक्यप्रतियोगिकयावद्भेदविवक्षायां सुन्दरम् मुखमित्यादौ बिम्बात्मना मुखभेदस्य प्रतिबिम्बात्मनि तस्मिन्नेव सत्त्वाद्व्यभिचारः । धर्मिसमानसत्ताकान्यत्वविवक्षायां स्वरूपासिद्धिः । अतएवाभेदविरोध्यन्यत्वविवक्षापि निरस्ता । व्यावहारिकान्यत्वविवक्षायामपि संयोगवति वृक्षादौ तद्भेदस्य त्वयाङ्गीकारात् वृक्षत्वा श्रययावद्भेदसत्त्वाद्वृक्षे व्यभिचारः । ननु वाच्यतावच्छेदकधर्मावच्छिन्नप्रति योगिकान्योन्याभाववत्वम

विवक्षितम् , वृत्ते च न तादृशान्योन्याभावः ; अन्योन्याभावस्य प्रतियोगितावच्छेदकेन विरोधादिति चेन्न,-ब्रह्मणोपि प्रवृत्तिनिमित्ताश्रयत्वेनासिद्धेः । यावद्विशेषाभावातिरिक्तसामान्याभावस्य त्वयानङ्गीकाराच्च । प्रवृत्तिनिमित्ते व्यभिचाराच्च । शक्यतावच्छेदकधर्मविशिष्टान्यत्वविवक्षायाम व्यर्थविशेषणत्वम् , विशिष्टान्यत्वस्यैव व्याप्यत्वात् । आकाशे व्यभिचारश्च , आकाशपदशक्यत्वात् । आकाशपदस्य स्वरूपमात्रशक्तत्वाच्च परपक्षकानुमानेपि बाधः । अनुपहितत्वविवक्षायामपि उपहितार्थस्य भेदा सिद्धेर्बाध एव । अनुपधानशक्तत्वसाधने स्वरूपस्य वाच्यत्वं निर्बाधमेव । तत्प्रतिपादकत्वेच यदि तद्विषयप्रतीतिजनकत्वम् , तदा व्यभिचारः । यदि पदजन्यस्मृत्यविषयतत्प्रतीतिजनकत्वम् , तदा स्वरूपासिद्धिः । यदि तत्तात्पर्यकत्वम , तदानीमपि व्यभिचारः । प्राधान्येन तत्तात्पर्यकत्वविवक्षायामपि यदि प्राधान्यं विशेष्यत्वं तदा व्यभिचार एव । यदि पदार्थप्रतीत्यविषयत्वं तदा स्वरूपासिद्धिः । अप्रयोजकत्वं च । नच सत्यज्ञानानन्दात्मनि ब्रह्मणि सत्यादिपदस्य एकैकस्य शक्तौ एकैकपदेनैव तादृगुपस्थितेः पदान्तरवैयर्थ्यस्य प्रसङ्गः ; एकैकस्मात्तादृगुपस्थितेरिष्टत्वात् । तत्रापि सत्यज्ञानानन्दात्मक ब्रह्मणः सन्मात्रत्वात् सतश्च सत्पदेन प्रतीतेरेकस्मात् पदात्तादृगुपस्थितेरावश्यकत्वात् । यदुक्तं-सतो ज्ञानानन्दाद्यभेदसंशयविरोधिप्रतीतेरेवापादनादिति , किं तत्रापादकम् ? सत्यत्वादिप्रकारत्रयविशिष्टार्थस्य सत्याद्येकैकपदशक्यत्वम ; उत वस्तुतस्तादृशस्वरूपस्य ? नाद्यः असिद्धेः , तस्य त्वया वाक्यार्थत्वानङ्गीकाराच्च । न द्वितीयः , तत्प्रकाराविशिष्टस्वरुपप्रतीतेस्तादृशसंशयविरोधित्वाभावात् । वस्तुतस्तादृशस्वरुपशक्ताद्वस्तुतस्तादृशविषयमेव ज्ञानमुत्पद्यते । स्वरुपमात्र प्रतीतेस्संशयविरोधित्वे धर्मिज्ञानाभावे संशयासिद्धेः तस्मिन् सति तद्विरोधादेवासिद्धेः संशयमात्रोच्छेदप्रसङ्गः । ननु वाक्यार्थभूतसत्यज्ञानानन्तात्मकब्रह्मणि अवधारणरुपा प्रतीतिर्या वाक्यलक्षणया जन्यते सा शुक्तिजन्या चेदेकैकस्मात्पदात्तादृशप्रतीतेरुत्पत्तेः पदान्तरवैयर्थ्यं स्यादित्यापाद्यत इति चेन्न,-यथा तव एकस्मात् सदानन्दज्ञानात्मकस्वरूपप्रतीतावपि तद्विषयावधारणस्याजननात् तादृशावधारणम् लक्षणया वाक्यकृत्यम , तथा ममापि शक्तपदसमुदायादेव तादृशावधारणोत्पत्तेर्वक्तुम् शक्यत्वात् । किञ्च सत्पदाद्ब्रह्मणोनुपस्थितांशः कोपि नास्तीति त्वयोक्तत्वात् बाधो दुर्वारः ।

नच स्वगोचरसंशयविरोधिज्ञानजनकद्वाक्यस्थपदशक्तिविषयो नेति साध्यम , अर्थान्तरत्वात् । शक्यत्वेपि शक्तेस्स्वगोचरसंशयविरोधिज्ञानजनकत्वाभावेन साध्यपर्यवसानात् । कश्चायं स्वगोचरसंशयः ? यदि स्वधर्मिकसंशयः; तदा सत्य ज्ञानानन्दात्मकवाक्यार्थधर्मिकसंशयविरोधिजनकशक्त्यविषयत्वेपि सत्यस्य ज्ञानाद्यभेदसंशयविरोधिज्ञानजनकशक्ति विषयत्व सम्भवेनार्थान्तरत्वम् । स्वकोटिकसंशयस्त्वप्रसिद्धः । तद्वाक्यजन्यज्ञाननिवर्तनीयसंशयविवक्षायामप्रसिद्धिः सत्यादिवाक्यजन्यज्ञाननिवर्तनीयसंशयविरोधिज्ञानजनकतद्वाक्यस्थपदशक्तिविषयाप्रसिद्धेः । वाक्यार्थमात्रस्य लक्ष्यत्वपक्षे सर्वत्राप्यप्रसिद्धेश्च । पदार्थेपि तद्वाक्यजन्यज्ञाननिवर्तनीयसंशयविरोधिज्ञानजनकशक्त्यसम्भवात् , पदार्थ स्मृतेस्संशयाविरोधित्वात् वाक्यार्थज्ञानस्य लक्षणाजन्यत्वात् ।

यदुक्तम् विशिष्टस्य शक्यत्वेनागमाभिमतब्रह्मणोऽशक्यत्वमिति । तन्न, आगमाभिमत-ब्रह्मणोऽपि विशिष्टान्तर्भावेन शक्यत्वात् । आगमाभिमतं ब्रह्मस्वरूपमेव, न त्वन्यत् ।

यच्च द्वितीयानुमानस्याप्रयोजकत्वनिराकरणार्थमुक्तम्—वाक्यार्थस्य पदार्थत्वे सम्भूयकारित्वव्युत्पत्तिहानिरिति , तन्न, पदार्थसाधारणस्य वाक्यजन्यज्ञानविषयत्वमात्रस्य सम्भूयकारित्वाविरोधित्वात् पदार्थप्रतिपन्नसंसर्गबोधाय तदुपपत्तेः । वाक्यजन्यप्रतीतिविशेष्यत्वस्यापि दण्डी देवदत्त इत्यादौ देवदत्तादिपदवाच्ये सत्त्वेन तदविरोधित्वात् । पदेभ्यो ऽप्रत्याय्यत्वे सति वाक्य प्रत्ययस्य वाक्यार्थपदेन विवक्षायां तु इष्टापत्तिः, तादृशस्य संसर्गस्यास्माभिर्वाच्यत्वानङ्गीकारात् । ब्रह्मणः पदेभ्यो ऽप्रत्याय्यत्वाभावेन वाक्यार्थत्वविरोधाच्च ।

यदप्युक्तम्--वाक्यार्थमात्रम् लक्ष्यमेवेति । तन्न, कल्पकाभावात् । आकाङ्क्षाद्युपेत-व्युत्पन्नपदसमुदायादेव वाक्यार्थप्रतीत्युपपत्तौ गौरवेण वृत्तेरकल्पनात् ।

यदुक्तं प्रतिपादनसमर्थस्य ह्याकाङ्क्षादिसहकार्यपेक्षणम् , सामर्थ्यं च शब्दस्यार्थे वृत्तिरेवेति । किं तत् सामर्थ्यम् ? किं कारणत्वम् , उतान्यत् ? नाद्यः; तत्र वृत्तिपदम् संकेत्य कारणत्वसमर्थने अस्मदिष्टत्वात् । न द्वितीयः, करणत्वस्यैव सहकार्यपेक्षाप्रयोजकत्वेन तस्य तदप्रयोजकत्वात् । नच तदेवाकाङ्क्षादिसहकारिविशेषापेक्षाप्रयोजकमिति वाच्यम् , मानाभावात् । पदे तादृशासामर्थ्यसत्त्वेन पदार्थस्मृतौ आकाङ्क्षाद्यपेक्षाप्रसङ्गात् । पदे तदसत्त्वे च वाक्येऽपि वृत्तिसिसाधयिषिता पदादप्यपहृतेति महदिदं कौशलम् ।

किंचास्तु यत्किंचित् सामर्थ्यम , अस्तु च वृत्तिरेव तत् । तथापि तादृश सामर्थ्यवत् एवार्थप्रतिपादने आकाङ्क्षादिसहकार्यपेक्षणं कुत्र दृष्टम ? येन तद्दृष्टान्तेन वाक्यार्थसंसर्गेऽपि सामर्थ्यात्मकवृत्तिः कल्प्येत । न तावत्पदे, पदार्थस्मृतिदशायामसिद्धेः । नापि वाक्यार्थानुभवदशायाम् वाक्यार्थे अद्यापि वृत्तेरसिद्धेः । अथ मतम्--पदानि हि वाक्यार्थज्ञानम् जनयन्ति पदार्थांशे शक्त्यैव जनयन्ति , तथाच तत्र वृत्तिरूपसामर्थ्यवत एव तत्प्रतिपादने आकाङ्क्षादिसहकार्यपेक्षणम् पदानां पदार्थांशानुभवे दृष्टमिति, तदपि मन्दम् ; वृत्तिद्वयविरोधात् ' पूर्वोक्तोपस्थितिभेदेन परिहारानुपपत्तेश्च , तीरत्वावच्छिन्ने तीर इव पदार्थविशेषावच्छिन्ने संसर्गे ऽजहल्लक्षणा , तथैव पदार्था अप्यवच्छेदकतया भासन्त इत्युक्तिविरोधाच्च ।

यच्च लक्षणाजन्यत्वे अनुमानमुक्तम , तत्र हेतुरसिद्धः , वाक्यार्थज्ञानस्य शक्तिजन्यत्वात् । नचैवमन्वयस्य शक्यत्वप्रसङ्गः , शक्यत्वेऽपि दोषाभावात् । नचैकपदादपि संसर्गबोधापत्तिः , अन्वयव्यतिरेकाभ्याम् तद्वाक्यस्थपदशक्तिसमुदायस्यैवान्वयधीहेतुत्वकल्पनात् । नचान्वयेऽपि व्युत्पत्तिग्रहापेक्षाप्रसङ्गः , पदार्थे व्युत्पत्तिग्रहमात्रेण शक्तिसमुदायाद्वाक्यार्थप्रतीत्युपपत्तौ संसर्गे तदनपेक्षणात् ।

किञ्च किमिदं शक्यत्वम् ? किं शक्तिजन्यज्ञानविषयत्वमात्रम् , उत सम्बन्धविशेषः ? आद्ये आपाद्यापादकयोरभेदप्रसङ्गः । न द्वितीयः , कल्पकाभावात् । नच शक्तिजन्यप्रतीतिवि-

षयत्वमेव कल्पकम् , अप्रयोजकत्वात् । अथ शक्तेर्ज्ञानस्य च समानविषयत्वेन कार्यकारणभावः तदा लक्षणायामपि तथा स्यात् । नचेष्टापत्तिः , शक्यार्थसम्बन्धरूपलक्षणायाः क्वचिदतीतादिरूपतया व्यभिचारात् । एवञ्च तज्ज्ञानस्य कारणत्वे वाच्ये तस्य संसर्गांशानुभवे व्यभिचारात् । संसर्गस्यापूर्वत्वात्तदर्थम् लक्षणाज्ञानम् समानविषयस्मृतौ हेतुरिति कल्पने शक्तावपि तथात्वापत्तेः ।।

इति श्रीबाधूलकुलतिलक श्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायाम् शतदूषणीव्याख्यायाम् चण्डमारुताख्यायाम् अशब्दवेद्यत्वभङ्गो नाम पञ्चचत्वारिंशस्स्कन्धः ।।४५।।



❋ अथ निष्प्रपञ्चीकरणनियोगभङ्गवादः षट्चत्वारिंशः ।।४६।। ❋

आविर्भावतिरोभावजन्मनाशविकल्पवत् ।
यस्यैतदक्षयम् नित्यं जगत् ; तं विष्णुमाश्रये ।।

प्रसाद—जिस भगवान् विष्णु का आविर्भाव एवम् तिरोभाव रूपी सृष्टि तथा संहार आदि विकल्पों से युक्त यह जगत् अक्षय एवं नित्य है, हम उन भगवान् विष्णु का शरण ग्रहण करते हैं।

आविर्भावेत्यादि । जगन्नित्यत्वप्रतीतेः निष्प्रपञ्चीकरणासम्भवादुवादार्थ स्सूचितः ।

ये पुनः सर्वशब्दानां कार्यपरत्वं वदतां मतमपि कटाक्षयन्तः; सिद्धरूपे ब्रह्मणि स्वतो निरतिशयपुरुषार्थरूपे ज्ञानजननमात्रेण प्रयोजनपर्यवसाने वेदान्तानां सम्भवत्यपि अत्यन्ताबाधितनिरतिशय पुरुषार्थरूपब्रह्मज्ञाने स्वतःप्रामाण्यमपि विस्मरन्तः, तथाविधपरिनिष्पन्नब्रह्मस्वरूपशु (सि) द्धयर्थं तस्य निष्प्रपञ्चताकरणनियोगविषयतामाहुः—तेषां तथाविधनियोग(विधि) वाक्यासम्भवात् सपरिकरनियोगासिद्धेश्च निर्मूलः प्रलापः । तथाहि—न तावत् , 'निष्प्रपञ्चम् ब्रह्म कुर्यात्' इति विधिवाक्यमधीमहे । न च फल–करणादर्शनादिभिः कल्प्यते । न च स्मृत्याद्यनुसारेण तथाविधश्रुतिरनुमीयते । न च नित्यानुमेया श्रुतिरुपपद्यते । न च तदनुमितिलिङ्गतया निष्प्रपञ्चताकरणाचारः केनचित् क्वचिदपि दृष्टपूर्वः । न च निष्प्रमाणकोऽपि विधिः ; अस्तीति वाङ्मात्रेणापि सिध्यति ।। ननु किमनेन कदर्थनेन [ विकत्थनेन] ? नानात्वदर्शननिन्दावचनैः नानादर्शन [ नानात्व ] निषेधवचनैः निर्गुणादिश्रु-

तिभिः ; मायोपादानत्वान्यथानुपपत्त्यादिभि [ स्तिभि] श्चानुगृहीतः, 'न दृष्टेर्द्रष्टारं पश्येः' इत्येवमादिको विधिः उपलक्षणपरस्सन्, 'द्रष्टृदृश्यादिसमस्तभेदशून्यं दृशिमात्रं ब्रह्म कुर्यात्' इति नियुञ्जानः प्रकृतार्थे परिपूर्णं प्रमाणम् , नित्यसिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण साध्यत्वमप्यविरुद्धमिति चेन्न—[ चेत्—तन्न ] अनुग्राहकत्वेनाभिमतानां सर्वेषां प्रत्येकं विस्तरतो दूषणात् ।

प्रसाद—मीमांसक विद्वान् बतलाते हैं कि सभी शब्द कार्यार्थ का ही प्रतिपादन करते हैं। मीमांसकों के इस मत का खण्डन करते हुए अद्वैती विद्वानों ने कहा है कि सिद्ध ब्रह्म निरतिशय पुरुषार्थ रूप हैं; उसका ही ज्ञान कराने मात्र से वेदान्त वाक्यों का प्रयोजन में पर्यवसान हो जाता है, ब्रह्म ज्ञान की सर्वोत्कृष्ट पुरुषार्थता प्रत्यक्ष आदि प्रमाणों से नहीं बाधित होती है, अतएव वेदान्तों का सिद्धब्रह्म के बोधन में स्वतः प्रामाण्य हैं। अपने इस कथन की परवाह किए बिना ही अद्वैती विद्वानों ने अविद्या के सम्बन्ध से अशुद्ध ब्रह्म को शुद्ध करने के लिए ब्रह्म को संस्कार का विषय, तथा कार्यान्तर से अन्वय न हो सकने के कारण निष्प्रपञ्चीकरण विधि को नियोग का विषय बतलाया। अद्वैती विद्वानों के उस प्रकार के विधि नियोग वाक्यों के असम्भव होने के कारण उनके साङ्गोपाङ्ग नियोग की सिद्धि नहीं हो सकने के कारण, उनका निष्प्रपञ्चीकरण नियोग निर्मूल तथा प्रलाप मात्र है, क्योंकि 'निष्प्रपञ्चम् ब्रह्म कुर्यात्' ब्रह्म को प्रपञ्च रहित करना चाहिए, इस प्रकारका कोईभी विधि वाक्य उपलब्ध नहीं होता। जिस तरह 'तरति ब्रह्महत्यां योऽश्वमेधेन यजति।' अर्थात् अश्वमेधयाग करने वाला ब्रह्महत्या से मुक्त हो जाता है; इस अर्थवाद वाक्य में जिस तरह से ब्रह्म हत्या से मुक्ति रूपी फल तथा उसके साधकतम 'अश्वमेध' का दर्शन होता है, उसी तरह किसी फल विशेष तथा उसके साधकतम को देखकर आप निष्प्रपञ्चीकरण नियोग की कल्पना करते हों ऐसी बात भी नहीं है। आप किसी स्मृति विशेष के आलोक में निष्प्रपञ्चीकरण नियोग श्रुति का भी अनुमान नहीं कर सकते हैं। नित्यश्रुति का अनुमान भी नहीं सम्भव है। न तो निष्प्रपञ्चीकरण नियोग श्रुति का अनुमान करके, उसी के आधार पर निष्प्रपञ्चीकरण का शिष्टाचार चला आता हो, ऐसा किसी ने कहीं भी देखा है। निष्प्रपञ्चीकरण का विधान है ; यह कह देने मात्र से कोई विधि भी नहीं हो सकती है; विधि के लिए प्रामाणिकता अपेक्षित है। ननु किमनेन इत्यादि—यदि कहें कि आप की इस बात से क्या लाभ है ? वेदान्तों के अनेक वाक्य नानात्व दर्शन की निन्दा करते हैं, वेदान्तों के अनेक निर्गुणम् आदि वाक्य नानात्व दर्शन का निषेध करते हैं, किञ्च निष्प्रपञ्चीकरण को स्वीकारे विना जगत् के मायोपादानकत्व की सिद्धि भी नहीं हो सकती है, अतएव मानना पड़ता है कि-'न दृष्टेर्द्रष्टारं पश्येः' इत्यादि विधि वाक्य निष्प्रपञ्चीकरण नियोग के उपलक्षण हैं। इस वाक्य का तात्पर्य है कि—द्रष्टा ; दृश्य आदि समस्त भेदों से रहित दृशि (ज्ञान) मात्र ब्रह्म को करे। इस तरह यह प्रेरक वाक्य ही निष्प्रपञ्चीकरण नियोग में पूर्ण प्रमाण है। नित्य सिद्ध ब्रह्म का भी निष्प्रपञ्चीकरण से कोई विरोध नहीं है। तो अद्वैती विद्वानों का यह कथन उचित नहीं है, क्योंकि निष्प्रपञ्चीकरण नियोग के सभी अनुग्राहकों का विस्तार पूर्वक खण्डन किया जा चुका है।

येपुनरिति। सर्वशब्दानां कार्य एव प्रामाण्याद्वेदान्तानामपि नियोगपरत्वं वाच्यम् ; सिद्धे प्रामाण्येपि प्रयोजनपर्यवसनार्थं तद्वाच्यम् , परमपुरुषार्थरूपब्रह्मप्रतिपादनेन सद्यः प्रीतिहेतु

तथा प्रयोजनपर्यवसानसम्भवेपि तत्प्रयोजनस्य काव्यनाटकादिवदतत्वप्रतिपादनेनाप्युपपत्तेः ब्रह्मणि प्रामाण्यं न स्यादिति पराशयः ; सच न युक्तः ; सिद्धेपि प्रामाण्यस्थापनात् ; ब्रह्मणश्च निरतिशयानन्दरूपतया तत्प्रतिपत्तेः स्वयम्प्रयोजनत्वात् , प्रामाण्यस्वतस्त्वस्थापनेन प्रामाण्यस्यापि तत्र सिद्धेरित्याशयः । तथाविधेति । यथा पूर्वतन्त्रे "सूक्तवाकेन प्रस्तरं प्रहरती" त्यत्र द्वितीयाबलात् संस्कारकर्मत्वं सूक्तवाक्मन्त्रप्रकाश्यदेवतान्वयबलाद्यागरूपतया नियोगविषयत्वञ्च प्रहरणस्य, यथा स्वाहाकारप्रयाजस्य इष्टदेवताप्रतिपत्तिरूपं नियोगविषयत्वम् ; यथा वस्तुबलवादिविवरणमते अध्ययनस्य नियोगविषयत्वेपि अधिकारापेक्षितवात् द्वितीयाबलात् साध्यत्वेन प्रतीत स्वाध्यायस्यैवाधिकारिविशेषणत्वेन स्वीकारात् संस्कार्यत्वम् , यथा आधानस्य नियोगविषयत्वेपि द्वितीयाश्रुत्यवगतसाध्यत्वानामग्नीनामधिकारिविशेषणत्वेन स्वीकारात्संस्कार्यत्वमुक्तम् , एवमिहाप्यविद्यासंसर्गादशुद्धब्रह्मशुद्धयर्थत्वेन संस्कार कर्मत्वं कर्मान्तरानन्वयात् विधेश्च निष्प्रपञ्चीकरणस्य नियोगविषयत्वम् । नच भूतभाव्युपयोगाभावात् कथं ब्रह्मणः संस्कार्यत्वमिति वाच्यम् ,—प्रयोजनान्वयार्थम् ह्युपयोगापेक्षा, शुद्धश्च ब्रह्म स्वयमेव प्रयोजनमिति न तत्र तदपेक्षेति भावः । तस्येति । ब्रह्मणः । नियोगविषयत्वं निष्प्रपञ्चीकरणद्वारा विवक्षितम् । एवं दूषितमिमं सपरिकरनियोगतत्प्रामाण्यासिद्धयापि दूषयति नचेति । "तरति ब्रह्महत्यां योऽश्वमेधेन यजत" इति अर्थवादे फलकरणदर्शनाद्विधिः कल्प्यते, न तथेह दर्शनमित्यर्थः ।

विधिस्वरूपमपि पश्यामः ( विमृशामः ? )—कोऽत्र ब्रह्मवाचकश्शब्दः , कश्च तस्य निष्प्रपञ्चताकरणवाचीति ॥ दृष्टिमतिश्रुत्यादयः शब्दाः संविद्रूपब्रह्मवाचकाः द्रष्टृमन्तृप्रभृतिदर्शननिषेधो निष्प्रपञ्चताकरणवाचीति चेत्—किं व्युत्पत्तिसिद्धोऽय (मेषा) मर्थः उत तदनुपपत्त्या लक्षणादिवशादङ्गीक्रियते , किं वा भवत्सैद्धान्तिकसंकेतादिति ? न प्रथमः ; दृष्टिमतिश्रुत्यादिशब्दानां तावत् ब्रह्मशब्दपर्यायत्वाभावात् । तत्तत्करणायत्तबुद्धिविशेषा एव हि तैरभिधीयन्ते । अन्यथा पुनरुक्तिः स्यात् । द्रष्टृप्रभृतिदर्शननिषेधोऽपि तत्तज्ज्ञानवृत्तिमेव वदति ; न तु तत्तन्निवृत्तिम् । नापि द्वितीयः ; अनुपपत्तेरदर्शनात् ॥ उचितार्थान्तरादर्शनमेवानुपपत्तिरिति चेन्न , तथाप्यनुचितार्थान्तरकल्पनायोगात् । दृश्यते चार्थान्तरमुचितम् । तथाहि—यदा दृष्टेरतिरिक्तं द्रष्टारं न पश्येरित्यतिरिक्तपदाध्याहारेण योजना , तदा द्रष्टुः पुरुषस्यापि स्वयंज्योतिषः स्वधर्मभूतदृष्टिमत्यादिशब्दाभिलप्यज्ञानसाजात्येन तदतिरिक्तत्वनिषेधोपपत्तेः न कस्यचिदपि मिथ्यात्वसिद्धिः । अनध्याहारे तु दृष्टेर्द्रष्टेति जीवात्मा निर्दिश्यते । ओदनपाकं पचतीतिवत् कर्तृत्वमात्रविवक्षया द्रष्ट्रादिशब्दः । ततश्च तत्तत्करणायत्तज्ञानकर्तारं जीवात्मानं नोपासीथाः , अपितु तदन्तर्यामिणं

करणनिरपेक्षस्वाभाविकनिरतिशयज्ञानादिगुणगणम् अशेषदोषवैदेशिकं परमात्मानमुपास्स्वेत्युक्तं भवति । न च जीवस्यापि विशेषणतया उपास्यत्वाभ्युपगमात् तद्दर्शननिषेधानुपपत्तिरिति वाच्यम् , करण [अ] वृत्तिलङ्गिस्वाभाविकविकासशालिपरिशुद्धस्वरूपजीवविशिष्टस्य परमात्मन उपास्यत्वात् । एव मर्थान्तराण्यपि कर्तृत्वाभिमानत्यागादिरूपाणि प्रत्यक्षाद्यविरुद्धानि समुचितानि कल्पयितुं शक्यानि । अतो नानुपपत्तिलेशः । नापि तृतीयः अतिप्रसङ्गात् । परसिद्धान्तसिद्ध (न्तरसिक) संकेतवशादपि भवत्पक्षस्य कार्त्स्न्येन भङ्गप्रसङ्गात् । एवं विधिवाक्यासम्भवो दर्शितः ।

प्रसाद—आपके अभिमत इस विधि वाक्य की हम परीक्षा करते हैं । प्रश्न है कि इस वाक्य में ब्रह्म का वाचक कौन सा शब्द है ? और इस वाक्य का कौन शब्द निष्प्रपञ्चीकरण का वाचक है ? यदि कहें कि दृष्टि; मति, श्रुति आदि शब्द; ज्ञानस्वरूप ब्रह्म के वाचक हैं, द्रष्टा, मन्ता आदि के दर्शन का निषेध ही निष्प्रपञ्चताकरण का वाचक है । तो प्रश्न है कि आपको अभिप्रेत यह अर्थ व्युत्पत्ति सिद्ध है, अथवा मुख्यार्थानुपपत्ति के कारण आप इस प्रकार का लाक्षणिक अर्थ करते है । उक्त अर्थ को व्युत्पत्ति लभ्य इसलिए नहीं माना जा सकता है कि-दृष्टि , मति और श्रुति शब्द ब्रह्म शब्द के पर्यायवाची नहीं हैं । दृष्टि, श्रुति तथा मति आदि शब्दों द्वारा भिन्न-भिन्न इन्द्रियों से होने वाले ज्ञान का ही अभिधान होता है । यदि ऐसा नहीं मानें तो 'न दृष्टेः' इत्यादि श्रुति में पुनरुक्ति दोष ही होगा । द्रष्टा आदि के दर्शन आदि का निषेध से भी ज्ञान की विभिन्न वृत्तियों का ही निषेध होता है, द्रष्टा आदि का निषेध नहीं होता । अनुपपत्ति जन्य उसे लाक्षणिक अर्थ भी नहीं माना जा सकता है; क्योंकि यहाँ व्युत्पत्ति की अनुपपत्ति कोई दिखायी नहीं पडती । उचित अर्थान्तर का दर्शन ही अनुपपत्ति है , यह भी नहीं कहा जा सकता है, क्योंकि अनुचित अर्थान्तर की कल्पना करना ठीक नहीं । किञ्च 'न दृष्टेः' श्रुति का उचित अर्थान्तर इस प्रकार है । जब दृष्टि ( ज्ञान ) से भिन्न द्रष्टा न दिखायी पड़े तो इस तरह से अतिरिक्त पद का अध्याहार करके अर्थ किया जाय तब द्रष्टा स्वयम् ज्योति पुरुष का भी स्वधर्म भूत दृष्टि मति आदि शब्दों से कहे जाने वाले ज्ञान से साजात्य होने के कारण, दृष्टि व्यतिरिक्त का निषेध उपपन्न हो जाता है , किन्तु इससे द्रष्टा आदि के मिथ्यात्व की सिद्धि नहीं होती ।

यदि अतिरिक्त पद का अध्याहार न करें तो श्रुति के 'दृष्टेः द्रष्टा' पद से जीवात्मा का निर्देश मानना चाहिए , 'ओदनपाकं पचति' वाक्य के समान द्रष्टा आदि शब्दों की विवक्षा कर्तृत्व मात्र में हैं । इस तरह श्रुति का अर्थ है कि तत्-तत् इन्द्रियों के अधीन होने वाले ज्ञान के कर्ता जीवात्मा की उपासना न करो, अपितु उसके अन्तर्यामी इन्द्रिय निरपेक्ष स्वाभाविक सीमातीत गुण समूहों वाले , अखिलहेय प्रत्यनीक परमात्मा की उपासना करो । यहाँ पर यह नहीं कहा जा सकता है कि जीव के विशेषण रूप से उपास्यता स्वीकृत होने के कारण श्रुति उसीके दर्शन का निषेध करती है । क्योंकि कारण निरपेक्ष स्वाभाविक विकासशाली परिशुद्ध स्वभाव वाले परमात्मा ही उपास्य है । इस तरह कर्तृत्वाभिमानत्यागादि रूप, प्रत्यक्षादि के अनुकूल समुचित अर्थान्तर की कल्पना भी की जा सकती है । अतएव इस श्रुति में किसी प्रकार की व्युत्पत्ति की अनुपपत्ति नहीं है । आपके सैद्धान्तिक संकेत के कारण भी उपर्युक्त कल्पना नहीं की जा सकती है, क्योंकि ऐसा करने पर अति प्रसङ्ग होगा । किञ्च ऐसा करने

पर दूसरों के सिद्धान्ताभिमत संकेतों के द्वारा आपके सम्पूर्ण पक्ष के खण्डन का प्रसङ्ग होगा । इस तरह इस बात की सिद्धि की गयी कि निष्प्रपञ्चीकरण विषयक कोई भी विधि नहीं है ।

स्मर्तृभिर्दृष्टा नित्यानुमेयाश्रुतिरनुमीयत इत्यत्राह--नचेति । तदनुपपन्नेति । वाक्यार्थानुपपत्त्येर्थः ।

उचितेति । ज्ञानस्याविधेयत्वेन तन्निषेधस्यापि विध्यनर्हत्वादित्यर्थः । तथापीति । दर्शनवाचिपदानन्वयप्रसंगेन सम्भूयकारित्वव्युत्पत्तिविरोधादयमप्यर्थो ऽनुचित इति भावः । तदतिरिक्तत्वेति । इदमस्मान्नातिरिच्यत इत्यादावविशेषे ऽनतिरेकव्यवहारादतिरिक्तपदं विशेषपरमिति भावः । कर्तृत्वाभिमानः-स्वतन्त्रकर्तृत्वाभिमानः । आदिशब्देन द्रष्टारम् नपश्येरिति परमात्मनि करणायत्तज्ञाननिषेध इत्यादिकं सह गृहीतम् ।

अथ सपरिकरनियोगासिद्धिं ब्रूमः । तथाहि-नियोगवाक्यार्थवादिना नियोगः, नियोज्यः; तद्विशेषणं विषयः करणमितिकर्तव्यता प्रयोक्ता च वक्तव्याः । तत्रासौ नियोगस्तावत् सामान्यतो विशेषतोऽपि प्रमाणादर्शनादेव निरस्तः ॥ कश्चात्र नियोज्यः ? न तावत् ब्रह्म, त्वन्मते तस्याज्ञत्वात् अनियोज्यत्वात् । अस्मन्मते तु सर्वज्ञत्वादेव नियोक्तव्यत्वाभावात् । अतएव नाप्यविद्या । नाप्यहङ्कारादिकम्, तत्प्रतिफलितचैतन्यादिकं वा, तेषामपि विमृश्यकारिणां स्वोच्छेदकरणे नियोक्तुमशक्यत्वात् । अविमृश्यकरणे तु न शास्त्रयोग्यता । न च निर्विशेषानुभूतिस्थितये निरूपकः बालो ( परीक्षको भ्रान्तो ) वा कश्चित् स्वोच्छेदमनुमन्यते । अतएव तेषामधिकारित्व प्रयोक्तृत्वाद्यवस्थान्तरमपि भग्नम् । न च शास्त्रम् वायूदकादिवत् मुमुक्षा (विवक्षा) मनुत्पाद्यैव प्रवर्तयति, अशास्त्रत्वप्रसङ्गात् ततोऽपि नियोगस्य मूलोच्छेदः ॥

प्रसाद—अब हम नियोगवादियों के मत में नियोग की सपरिकर असिद्धि का प्रतिपादन करते है । नियोगवाक्यार्थवादी को बतलाना होगा कि उनका नियोग; नियोज्य, उसका विशेषण; विषय, करण, इतिकर्तव्यता तथा प्रयोक्ता को बतलाना चाहिए । इनमे नियोग का निरास तो सामान्यतः तथा विशेषतः प्रमाण के अभाव में ही हो जाता है । किञ्च यहाँ पर नियोज्य कौन है ? ब्रह्म इसलिए नहीं हो सकता है कि वह अज्ञ होने के कारण अनियोज्य है । हमारे मत में तो सर्वज्ञ होने के कारण ही वह नियोज्य नहीं है । अतएव अविद्या, अहङ्कारादि अथवा अहङ्कार प्रतिफलित चैतन्य भी नियोज्य नहीं हो सकते हैं । किञ्च यदि ये विचार पूर्वक कार्य करने वाले हैं तो ये कभी भी अपने विनाश में नहीं प्रवृत्त हो सकते यदि अविमृश्यकारी हैं तो फिर इनमें शास्त्रयोग्यता ही नहीं है । शास्त्र तो कोई भी विधान विचार पूर्वक कार्य करने वाले के लिए ही करता है । चूंकि कोई भी परीक्षक अथवा मूर्ख निर्विशेषानुभूति के लिए अपना नाश नहीं करवाना चाहेगा, अतएव वे न तो अधिकारी हो सकते हैं और न तो प्रयोक्ता ही । यह भी नहीं कहा जा सकता है कि वायु प्रवाह तथा जल प्रवाह आदि के समान शास्त्र मोक्षेच्छा के ज्ञान के बिना उत्पन्न किए ही, तत्-तत् कार्यों में नियोज्य को लगा देता है, क्योंकि ऐसा कहना शास्त्रों के विपरीत है; इससे तो नियोग के मूल का ही विनाश हो जायेगा ।

सामान्यत इति । " फलमत उपपत्ते " रिति सामान्यतो ऽपूर्वं निरस्तम् , निष्प्रपञ्चं ब्रह्म कुर्यादिति वाक्यं नाधीमह इति पूर्वोक्तेरर्थे नियोगो विशिष्यापि निरस्त इत्यर्थः । अतए-वेति । "त्वन्मत" इत्युक्तपरामर्शः । विवक्षेति ज्ञानं विवक्षितम् ।

किं वाऽत्र ( तावत् ) नियोज्यविशेषणम् ? ब्रह्मस्वरूपयाथात्म्यानुभव इति चेत् तत् किं निमित्ततया स्थित्वा नियोज्यं विशिनष्टि , उत फलतया ? नाऽऽद्यः , जीवनपुत्र जन्मादिवत् तस्यासिद्धत्वात् , सिद्धत्वे वा किं नियोगेन ; तत एव तत्फलसिद्धेः ॥ अथ श्रवणजन्यः परोक्षानुभवस्सिद्धस्सन् विशेषणमिति चेन्न , श्रवणेन तथाविधानुभवजन-नस्यैव निष्प्रपञ्ची ( भूता ) करणरूपत्वात् । न हि ततोऽतिरिक्तं किंचिदत्र पुरुषव्या-पारविषयं पश्यामः ॥ साक्षात्कारज्ञानं तद्विषय इति चेन्न , साक्षात्कारस्य नियोगसाध्य त्वाभ्युपगमात् ततः पूर्वं तदसिद्धेः । तत्सिद्धौ वा किं नियोगेनेत्युक्तम् । अथ यदि नित्य ब्रह्मस्वरूपप्रकाश एव निमित्तमित्युच्येत ; न तर्हि (हि) तत् कस्यचिद्विशेषणम् , अनन्य निष्ठत्वात् । तस्य च निमित्तत्वे तन्नित्यत्वेन जीवननिमित्ताग्निहोत्रवन्नित्यं विषयानुष्ठान-प्रसङ्गः । नापि द्वितीयः ; तथापि हि (स ?) याथात्म्यानुभवः शब्दजन्यो वा, अक्षजन्यो वा ; स्वरूपभूतानुभव एव वा ? आद्ये नियोगात्पूर्वं [वं] सिद्धस्य कथं नियोगफलत्वम् ? द्वितीये [ऽपि] तु असम्भवः, न हि निष्प्रपंचतायां असिद्धायामक्षाणि तज्जन्यं वा ज्ञानं सम्भवति । सम्भवे वा कथं निष्प्रपंचता ? तृतीये तु कथं नित्यसिद्धस्य फलत्वम् ? स यदि साध्यः , तदा स्वर्गादिवदनित्यः स्यात् । प्रपञ्चनिवृत्तिरूपेण साध्यत्वमिति चेत् , न तर्ह्य [ न ह्य ] न्यरूपेणान्यस्साध्यस्स्यात् । अतः प्रपंचनिवृत्तिरेव साध्येत्युक्तं भवति । ततश्च हेतुसाध्ययोरैक्यप्रसङ्गः ॥

प्रसाद—किंच प्रश्न है कि नियोज्य का विशेषण क्या है ? यदि ब्रह्म के स्वरूप याथात्म्य के अनुभव को नियोज्य का विशेषण मानें तो प्रश्न है कि वह किस प्रकार से नियोज्य को विशेषित करता है ? निमित्त रूप से अथवा फल रूप से ? निमित्त रूप से उसे इसलिए नहीं माना जा सकता है कि वह सिद्ध नहीं है जीवन तथा पुत्रजन्मादि के समान । यदि वह सिद्ध है तो फिर नियोग से क्या लाभ ? उसीसे ही मोक्षावाप्ति हो जायेगी । यह भी नहीं कह सकते हैं , कि श्रवणजन्य सिद्ध परोक्ष नुभव ही नियोज्य का विशेषण है तो यह भी नहीं कह सकते हैं, क्योंकि श्रवण से उस प्रकार का ही उत्पन्न अनु-भव निष्प्रपञ्चीकरण का साधकतम हो सकता है । पुरुष के व्यापार का विषय उससे भिन्न कोई दूसरी चीज नहीं हो सकती है । साक्षात्कार ज्ञान को उसका विषय नहीं माना जा सकता है, क्योंकि साक्षा-त्कार तो नियोग का फल है , अतएव वह उससे पहले कैसे सम्भव है । यदि उससे पूर्व ही स्वरूप का साक्षात्कार हो गया तो फिर नियोग व्यर्थ होगा । यदि नित्य ब्रह्म के स्वरूप का प्रकाश ही निमित्त है

तो वह किसी का विशेषण नहीं हो सकता, क्योंकि वह स्वनिष्ठ है । नित्य ब्रह्म के स्वरूप प्रकाश को निमित्त मानने पर चूंकि वह नित्य है, अतएव जीवन के निमित्त अग्निहोत्र आदि के समान निन्य ही विषयानुष्ठान का प्रसङ्ग होगा । नापि द्वितीय इत्यादि—यदि ब्रह्म के स्वरूप याथात्म्य के प्रकाश को नियोज्य के फल रूप से विशेषण मानें, तो प्रश्न उठता है कि वह याथात्म्यानुभव, शब्दजन्य है, या प्रत्यक्षजन्य है अथवा स्वरूपभूत अनुभव ही है ? यदि शब्दजन्य मानें तो प्रश्न है कि नियोग से पहले ही विद्यमान याथात्म्यानुभव नियोग का फल कैसे हो सकता है ? क्योंकि फल तो पीछे होता है । उसका प्रत्यक्षजन्य होना इसलिए असम्भव है कि निष्प्रपञ्चता की सिद्धि हो जाने पर न तो इन्द्रियों का होना सम्भव है और न तो इन्द्रियज ज्ञान का होना सम्भव है । यदि इन्द्रिय और इन्द्रियज ज्ञान होते हैं तो फिर निष्प्रपञ्चता नहीं है । यदि याथात्म्यानुभव को स्वरूपभूतानुभव मानें तो वह तो नित्य सिद्ध है, अतएव वह फल नहीं हो सकता । यदि स्वरूपभूतानुभव को नियोग का फल (साध्य) मानें, तो फिर वह स्वर्गादि के समान अनित्य होगा । यदि उसकी साध्यता प्रपञ्च की निवृत्ति रूप से मानें, तो यह भी नहीं सम्भव है, क्योंकि अन्य वस्तुको अन्यरूप से साध्य मानें तो फिर हेतु और साध्य दोनों एक होंगे, क्योंकि प्रपञ्चनिवृत्ति रूप निष्प्रपञ्चता ही हेतु भी है ।

परोक्षानुभव इति । तथाचापरोक्षज्ञानेनैवाविद्यानिवृत्तेर्न नियोगवैफल्यमिति भावः । तथाविवेति । तस्य च विषयत्वान्न नियोज्यविशेषणत्वमिति भावः । साक्षात्कारस्येति । उत्पत्ति-फलावच्छिन्नक्रियाक्षणनिचय उत्पादनम्, तदेवात्र जननम्, तथाच साक्षात्कारो नियोगात्प्राक् स्यादित्यर्थः । आद्य इति । अपरोक्षज्ञानस्यापि निष्प्रपञ्चीकरणानन्तरमसम्भवात्तद्विषयनियोगस्य न फलत्वमिति भावः । नच श्रवणजन्यशाब्दानुभवस्य निष्प्रपञ्चताकरणरूपत्वादपरोक्षज्ञानं फलमस्त्विति वाच्यं; शाब्दापरोक्षनिरासात, प्रपञ्चनिवृत्तिफलावच्छिन्नक्रियाक्षणनिचयस्य निष्प्रपंची-करणशब्दार्थत्वाच्चेति भावः । प्रपंचेति । तथा च निवृत्तेः प्रायश्चित्तजन्यपापध्वंसवदनः तत्वा-न्नानित्यत्वमिति भावः ।

कश्चात्र नियोगविषयः ? किं ब्रह्मैव, उत निष्प्रपंच (ञ्चं) ब्रह्म, अथ प्रपञ्च-निवृत्तिरेव ? न प्रथमः, तस्य नित्यत्वेनाभाव्यत्वात ; अभावार्थत्वाच्च । अत एव न द्वितीयः, न हि निष्प्रपंचमपि ब्रह्म भावार्थः ॥ तथापि तस्य साध्यत्वं सम्भवतीति चेत् किं ततः ? न हि स्वर्गादिकं साध्यमित्येतावता विधिविषयो (ऽपि) भवति । अतोऽ-त्रापि केवलं फलत्वमात्रं सम्भाव्येत । तत्र च प्राप्ताप्राप्तविवेकेन विशेषणस्यैव साध्यत्व-मिति कथं ब्रह्मस्वरूपस्य विधिविषयत्वम् ? अत एव न तृतीयः, तस्याः फलत्वाच्च । न हि प्रपंचनिवृत्त्यतिरिक्तो मोक्षो नाम भवन्मते । किमर्थं च तया नियोगः साध्यते ? न हि नियोगसाध्यं तदतिरिक्तं किंचित् । कथं च सर्वप्रपंचनिवृत्तौ नियोगस्वरूपलाभः ? तस्याश्च नियोगविषयत्वे, तया नियोगः, तेन च सेति परस्पराश्रयणं च । उक्तन्यायेन

प्रपंचनिवृत्तेः करणत्वमपि निरस्तम्; विषयकरणयोरतीव भेदाभावात्। स चायं नियोगः किं स्वयमेव प्रपञ्चं निवर्तयति, उत तत्त्वज्ञानमुत्पाद्य? पूर्वत्र किं मिथ्याभूतस्य प्रपञ्चस्य ज्ञानबाध्यत्वं परित्यज्य नियोगबाध्यत्वमङ्गीकारोषि? तथा सति प्रायश्चित्तनिवर्त्यदुरितवत् सत्यता प्रपञ्चस्य। अन्यथा तत्त्वज्ञानेनैव बाध्यत्वे नियोगकृत्यं न पश्यामः। उत्तरत्रापि आकाङ्क्षादित्रयवता वाक्येनैव तत्त्वज्ञानं जायत इति किं नियोगात्? (नियोगेन) तेनैव च तत्त्वज्ञानेन ब्रह्मव्यतिरिक्तसमस्तबाधात् कथं सपरिकरनियोगोत्पत्तिश्च॥ परोक्षापरोक्षनिवर्तकज्ञानयोरविशेषोपपादनादिकमन्यत्र ग्राह्यम्। किञ्च प्रपञ्चनिवर्तकोऽयं नियोगो न तावत् ब्रह्मस्वरूपम्, निवर्तकस्य [तस्य] नित्यतया नित्यं प्रपञ्चाभावप्रसङ्गात्, निवर्त्यस्य विषयानुष्ठानसाध्यत्वायोगाच्च। अतो ब्रह्मस्वरूपव्यतिरिक्त एष्टव्यः / स च कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानेन प्रयोक्तुरपि नष्टत्वान्निराश्रयः कथमुत्पद्येत? आश्रयस्थितौ वा कथं विषयलाभः? निराश्रयोत्पत्तावपि नियोगाख्यमिथ्यापदार्थस्थितौ कथं कृत्स्नप्रपञ्चनिवृत्तिः (सिद्धिः)? सिद्धावपि किमन्यन्नियोगसाध्यं मोक्षाख्यं फलमिति।

प्रसाद—किञ्च प्रश्न है कि नियोग का विषय क्या हैं? ब्रह्म ही अथवा निष्प्रपञ्च ब्रह्म? अथवा प्रपञ्च की निवृत्ति ही? ब्रह्म नित्य है; अतएव वह भाव्य (साध्य) नहीं हो सकता, अतएव वह नियोग का विषय नहीं हो सकता। किञ्च भावार्थाधिकरण के विरोध के कारण भी वह विषय नहीं हो सकता। निष्प्रपञ्च ब्रह्म को भी नियोग का विषय भावार्थाधिकरण विरोध के ही कारण नहीं माना जा सकता है। यदि भावार्थाधिकरण विरोध के बाद भी निष्प्रपञ्च ब्रह्म को नियोग का विषय मानें तो इससे भी कोई लाभ नहीं होगा, क्योंकि जिस तरह साध्य होने मात्र से स्वर्गादि विधि के विषय नहीं बनते, उसी तरह से प्रपञ्चरहित ब्रह्म केवल नियोग का फल मात्र होगा। किञ्च उसमें भी प्राप्त विवेक उचित एवं अनुचित का भेद पूर्वक विचार ) करने पर पता चलेगा निष्प्रपञ्चता ही साध्य होगी, अतएव ब्रह्म का स्वरूप विधि का विषय कैसे बन पायेगा? प्रपञ्च की निवृत्ति को भी नियोग का विषय नहीं माना जा सकता है, क्योंकि वह तो नियोग का फल है। आपके मत में प्रपञ्च निवृत्ति ही तो मोक्ष है। उसके द्वारा नियोग के किस अर्थ की सिद्धि होगी? प्रपञ्च निवृत्ति व्यतिरिक्त नियोग का कोई दूसरा साध्य है नहीं। सम्पूर्ण प्रपञ्च की निवृत्ति हो जाने पर प्रपञ्चान्तर्गत नियोग कैसे रह सकता है? प्रपञ्च की निवृत्ति को नियोग मानने पर अन्योन्याश्रय दोष होगा, क्योंकि प्रपञ्च की निवृत्ति जब हो तो नियोग होगा और जब नियोग हो तो प्रपञ्च की निवृत्ति हो। इस तरह प्रपञ्चनिवृत्ति नियोग का करण भी नहीं हो सकती है, क्योंकि विषय और करण में अत्यन्त भेद नहीं होता। अतएव जब प्रपञ्च की निवृत्ति नियोग नहीं हो सकती तो वह नियोग का कारण भी नहीं हो सकती है। किंच प्रश्न है कि नियोग स्वयम् प्रपञ्च की निवृत्ति करता है, अथवा तत्त्वज्ञान को उत्पन्न करके वह प्रपञ्च की निवृत्ति करता है। यदि प्रथम पक्ष मानें तो प्रश्न है कि क्या आप मिथ्याभूत प्रपञ्च की ज्ञान बाध्यता का त्याग करके अब उसकी नियोग बाध्यता स्वीकार कर रहे हैं? ऐसी स्थिति में प्रायश्चित्त बाध्य

जैसे पाप सत्य होता है, उसी तरह नियोग बाध्य प्रपञ्च की भी सत्यता सिद्ध होगी। अन्यथा जब तत्त्व ज्ञान के द्वारा ही प्रपञ्च बाधित होता हैं, तो उसको बाधित करने में नियोग कौन सा कार्य करेगा ? यदि कहें कि वह तत्त्वज्ञान को उत्पन्न करके प्रपञ्च को निवृत्त करता है; तो प्रश्न है कि आकांक्षादि (आकांक्षा, योग्यता और सन्निधि)से विशिष्ट वाक्य से ही तत्त्वज्ञान उत्पन्न हो जाता है , तो फिर वहाँ नियोग की कौन सी आवश्यकता है ? उस तत्त्वज्ञान से ही ब्रह्म व्यतिरिक्त समस्त प्रपञ्च का बाध हो जाता है, तो फिर सपरिकर नियोग की उत्पत्ति कैसे होगी ? किञ्च आप के अभिमत परोक्ष एवं अपरोक्ष निवर्तक ज्ञान में कोई अन्तर नहीं है ; इस बात का प्रतिपादन मैंने अन्यत्र किया है । साथ ही प्रपञ्च का निवर्तक यह नियोग ब्रह्म स्वरूपभी नहीं है, उसे ब्रह्म स्वरूप मानने पर ब्रह्मके नित्य होने से नित्य ही प्रपञ्चाभाव का प्रसङ्ग होगा । किञ्च नित्य नियोग विषयों के अनुष्ठान का फल नहीं हो सकता , अतएव इसे ब्रह्म के स्वरूप से भिन्न ही मानना होगा । सम्पूर्ण प्रपञ्च की निवृत्ति रूप विषय के अनुष्ठान के कारण संसारस्थ नियोगकर्ता के भी नष्ट हो जाने से निराश्रय नियोग कैसे उत्पन्न होगा?यदि नियोग प्रयोक्ता पुरुष रहेगा ही तो फिर निष्प्रपञ्चता कैसे होगी ? यदि निराश्रय भी नियोग की उत्पत्ति मान ली जाय तो फिर नियोग नामक मिथ्या पदार्थ के रहने पर प्रपञ्च निवृत्ति होगी कैसे ? यदि प्रपञ्चनिवृत्ति हो भी गयी तो उस नियोग का फलभूत मोक्ष उससे भिन्न क्या होगा ?

अभाव्यत्वात । असाध्यत्वादित्यर्थः । अभावार्थत्वादिति । भावार्थाधिकरणविरोधान्न विषयत्वमित्यर्थः । अभ्युपेत्य च ब्रह्मणः साध्यत्वमिदमुक्तम् , वस्तुतस्तदेवासिद्धमित्याह–तत्र चेति निष्प्रपंचत्वविशिष्टब्रह्मणीत्यर्थः । अतएवेति । असाध्यत्वादेवेत्यर्थः पारमार्थिकतया तस्या ब्रह्म–स्वरूपत्वादिति भावः । विषयेति । कृत्यवच्छेदद्वारा कार्यावच्छेदकत्वं विषयत्वम ; ज्ञानतया नियोगाख्यकार्यनिरूपककृतेर्विषयनिरूप्यत्वात्, नियोगकरणत्वन्तु नियोगोद्देशप्रवृत्तकृतिव्याप्यत्वमिति भेदः । स्वयमेवेति तत्त्वज्ञानव्यापारकत्वं व्यवच्छिद्यते, नतु तत्त्वज्ञानम् । कि तत्त्वज्ञानमनिवर्तकं नियोग एव निवर्तक इत्यभिमतम् , किं वा नियोगतस्य ज्ञानाभ्यां बाध्यत इति विकल्पम् हृदि निधायाद्यमनूद्य निराकरोति किमित्यादिना । प्रत्याह अन्यथेति । केवलनियोगस्यानिवर्तकत्वको-टावित्यर्थः । तेनैवेति । प्रथमं वाक्योत्पन्नज्ञानेनैवेत्यर्थः । ननु प्राथमिकज्ञानस्य परोक्षत्वम् , न तेन प्रपञ्चनिवृत्तिः , किन्तु नियोगसाध्यापरोक्षज्ञानादेवेत्यत्राह परोक्षेति । परोक्षञ्चापरोक्षनि–वर्तकज्ञानञ्चेति द्वन्द्वः । अविशेषेति । स्वरूपप्रकाशानधिकविषयत्व मवश्यम्भावि, अन्यथा भ्रान्तित्वप्रसङ्गात् ; ततश्चानिवर्तकत्वमित्यर्थः ।

किञ्च कारणभूतायाः प्रपञ्चनिवृत्तेः का नामेतिकर्तव्यता ? न काचिदिति चेन्न अनुपकृतस्य करणत्वायोगात् । यथाहुः ; ' न हि तत् करणं लोके वेदे वा किंचिदीदृशम् । इति कर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥' इति । अस्तु या काचिद्भावरूपेति चेन्न , सा हि सन्निपत्योपकारिका वा स्यात् , आरादुपकारिका वा ? नाद्यः; कृत्स्नप्र-पंचनिवृत्तिरूकरणशरीरनिविष्टतस्य कस्याचिददर्शनात् ॥ अद्वैतज्ञानं दृश्यत इति चेन्न ;

तेनैव प्रपञ्चनिवृत्तिरूपमोक्षसिद्धौ करणादिनिष्पाद्यासिद्धिप्रसङ्गात । नापि द्वितीयः, कृत्स्न-प्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः, तत्सिद्धौ तदनुग्राहकांशानवस्थानमित्युभयतस्पाशारज्जुः यथाभावरूपानुग्राहकस्थितौ न विरोध इति मन्यसे ; तन्न, तस्य कृत्स्नप्रपंचनिवृत्त्यन्तर्गत त्वेन करणेतिकर्तव्यताभेदासिद्धेः । तदेतदभिप्रेत्याह, 'अभावरूपत्वे चाभावादेव न कर-णशरीरम् निष्पादयति ; नाप्यनुग्राहकम् ' इति । अभावात–कृत्स्नप्रपंचनिवृत्त्यन्तर्गतत्वेन करणात्पृथगभावाभावादित्यर्थः । केचित्तु अस्य भाष्यस्यैवमर्थमाहुः, अभावत्वादेव न हेतु-त्वमित्युच्यत इति । तत्र शब्दास्वारस्या ( स्यम ? ) र्थानौचित्यादिकम् च द्रष्टव्यम् । तदेव विधायकादर्शनात सपरिकरनियोगानुपपत्तेश्च निष्प्रपंचब्रह्मविषयो विधिर्न सम्भवतीति सिद्धम् ॥

॥ इति शतदूषण्यां निष्प्रपंचीकरणनियोगभङ्गवादः षट्चत्वारिंशः ॥



प्रसाद—प्रश्न है कि नियोग के कारण प्रपञ्चनिवृत्ति की इतिकर्तव्यता क्या है ? उसकी कोई इति कर्तव्यता न हो, ऐसी बात तो है नहीं । क्योंकि करण वही होता है जो उपकृत हो। कहा भी गया है कि लोक अथवा वेद में कोई ऐसा करण नहीं देखा जाता है , जो इति कर्तव्यता के द्वारा अनुगृहीत न हुआ हो । कोई भावरूपा इतिकर्तव्यता भी नहीं मान सकते , क्योंकि उसके विषय में प्रश्न उठता है कि वह करण की सन्निपत्योपकारिका है अथवा आरात् उपकारिका ? उसे सन्निपत्योप-कारिका इसलिए नहीं कह सकते हैं कि सम्पूर्ण प्रपञ्च की निवृत्तिरूप करण का निवर्तक कोई भावपदार्थ नहीं देखा जाता है । अद्वैत ज्ञान को भी प्रपञ्चनिवृत्ति का निवर्तक नही माना जा सकता है, क्योंकि अद्वैतज्ञान के ही द्वारा प्रपञ्च की निवृत्तिरूप मोक्ष की सिद्धि होने पर वह करणादि का निष्पादक नहीं हो सकता है । भावरूपा इतिकर्तव्यता को प्रपञ्च की निवृत्ति रूप करण का आरात् उपकारक भी नहीं माना जा सकता है, क्योंकि फिर सम्पूर्ण प्रपञ्च की निवृत्ति रूप रह ही नहीं सकता है । यदि वह करण रहे तो फिर उसका अनुग्राहक अंश करणोपकारक नहीं रह सकता । इस तरह उभयतो पाशर्वा-रज्जू है । यदि कहें कि अभावरूप अनुग्राहक के रहने पर कोई विरोध नहीं होगा, तो यह भी नहीं कह सकते हैं , क्योंकि वह अभावरूप अनुग्राहक भी कृत्स्न प्रपंचान्तर्गत है, प्रपञ्च की निवृत्ति के साथ उसकी भी निवृत्ति हो जाने से करण और इति कर्तव्यता में कोई भेद नहीं हो पायेगा । इसी बात को हृदयमें रखकर के कहा गया है, इतिकर्तव्यता के अभाव रूप होने पर अभाव के ही कारण वह करण का निष्पा-दक नहीं हो सकता । वह अनुग्राहक भी नहीं हो सकता । इस वाक्य के 'अभावात्' का अर्थ हैं–सम्पूर्ण प्रपञ्च की निवृत्ति के अन्तर्गत होने के कारण, उसका करण से पार्थक्य न हो सकने के कारण, कुछ लोग ने श्रीभाष्य के इस वाक्य का इस प्रकार से अर्थ किया है—इतिकर्तव्यता अभाव रूप होने के कारण हेतु नहीं हो सकता, यह इस वाक्य में कहा गया है । किन्तु इस व्याख्यान में न तो शब्द का स्वारस्य है ;

और न तो अर्थ का औचित्य ही । इस तरह विधायक वाक्य के अभाव में निष्प्रपंच ब्रह्मविषयक नियोग सर्परिकर अनुपपन्न हो जाता है । इस तरह सिद्ध होता है कि निष्प्रपञ्च ब्रह्म को विषय बनाने वाला कोई भी विधि वाक्य नहीं है ।

इस तरह शतदूषणी का निष्प्रपञ्चीकरणनियोगभङ्ग नामक ४६वां वाद समाप्त हुआ ॥

❀-❀-❀

आदि शब्देनापरोक्षत्वासम्भवो विवक्षितः । अनुग्राहकांशः--इतिकर्तव्यताबाध्यः करणोपकारः ।

इति श्रीमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायाम् शतदूषणीव्याख्यायाम् चण्डमारुताख्यायाम् निष्प्रपञ्चीकरणनियोगभङ्गो नाम षट्चत्वारिंशस्स्कन्धः ॥४६॥



## ❀ अथ विकल्पप्रामाण्यभङ्गवादः सप्तचत्वारिंशः ॥४७॥ ❀

संसारसागरोत्तारकारणं वारणाचले । अविकल्पविकल्पाभ्यामध्यक्षितमुपास्महे ॥

प्रसाद—इस संसार से पार करने वाले तथा निर्विकल्पक एवं सविकल्पक समाधि के माध्यम से जिनका वारणाद्रि ( काञ्चीपुरम् ) में साक्षात्कर किया गया है ! उन श्रीभगवान् वरदराज की हम उपासना करते हैं ।

निर्विष्टेषु हरेर्गुणादिषु गलद्भोग्यान्तरैरागमै
र्यन्मत्याभिनिविष्टया बहुतपस्सिद्धाः परेषां धियः ।
लभ्यन्ते स्फुटनिर्विकल्पगणना बाधूलवंशोद्भवं
तं श्रीवासगुरुम् प्रमोदभरिताकूतास्सदोपास्महे ॥

हरिगुणमणिपूरितान्तराले श्रुतिगणदुग्धपयोनिधौ गभीरे ।
मतिमयमतिजाङ्घिकां दधानो मनसि विभातु ममागमान्तसूरिः ॥

अविकल्पेति । निर्विकल्पकसविकल्पकभेदेन समाधिशास्त्रे प्रतिपादिताभ्याम् समाधिभ्यामित्यर्थः । न्यूनाकारविषयम् निर्विकल्पकम् , अधिकाकारविषयम् च सविकल्पकम् स्वाभिमतम् ।

यदुच्यते—विप्रतिपन्नो विकल्पो मिथ्याविषयः विकल्पत्वात् ; यथा शुक्तिरजतविकल्पः । यो न मिथ्याविषयः ; नासौ जात्यादिविशिष्टप्रत्यय इति सर्वस्यापि भेदस्य विकल्पविषयतया मिथ्यात्वे परिशेषादद्वैतसिद्धिरिति–तदेतत् सविकल्पकमपि प्रत्यक्षविभागतयोदाहरद्भिर्भाष्यकारैर्निरस्तप्रायम् । तद् विस्तृणीमहे । तत्र तावत् पक्षादयो न निर्विकल्पकविषयतया सिद्धाः, तथा सति अभिलापसम्बन्धानर्हत्वप्रसङ्गात् । विकल्पविषयतया सिद्धौ तु, य एते पक्षादिग्राहिणो विकल्पाः, किं तेऽपि पक्षीक्रियन्ते, उत तद्व्यतिरिक्ता इति । न प्रथमः ; व्याघातात् । विकल्पानां विसंवादित्वविकल्पस्य विसंवादे, पुनः (?); तेषामपि संवादपर्यवसानत्वत् । सम्वादे पुनः तेषां विसंवादे पर्यवसानात् आश्रयाद्यसिद्धिप्रसंगात् । अविसम्वादातिरिक्तायाश्च तत्सिद्धेरनिरूपणात् । (विसम्वादातिरिक्तायास्तद्सिद्धेरनिरूपणात् ।) विसंवादेऽपि वा तत्सिद्धौ सर्वत्र विशिष्टार्थसिद्धेर्दुर्निवारत्वात् । नापि द्वितीयः, तैरेवानैकान्त्यात् ।। अविसंवादोऽपि तेषामनिश्चित इति चेन्न, तथाऽपि सन्दिग्धानैकान्त्यस्य स्थितत्वात् । अन्यतस्तेषां विसंवादसाधनेऽप्युक्तदोषानुधावनात् । यदि च सर्वे विकल्पा विसंवादिनः, कथमनुमानादिविकल्पास्ते प्रमाणं भवेयुः ? परम्परया अर्थप्रतिबन्धादिति चेत्, तुल्यम् विकल्पेऽपि । मा भूत तेषां प्रामाण्यमिति चेत ; तदा (तर्हापि) कथमेतदनुमानं समीहितसाधनायोदाहरसि ? ।। लोकव्यवहारसिद्धतया, परमतसिद्धतया वेति चेन्न, आत्मघातिनामीदृशानां लौकिकैः [ बालिशैः ] परीक्षकैश्च[वा] साध्यसिद्ध्यंगत्वानभ्युपगमात् ।

प्रसाद—अद्वैती विद्वानों ने विवादास्पद विकल्प ( भेद ) का विषय मिथ्या है, क्योंकि वह विकल्प है ; शुक्तिरजत विकल्प के समान । यह जो ज्ञान होता है ; वह किसी जाति आदि से विशिष्ट नहीं होता, अतएव जितने भी भेद हैं, वे सबके सब विकल्प का विषय होने के कारण मिथ्या हैं। सभी भेदों के मिथ्या होने के कारण अभेद रूप अद्वैत के परमार्थत्व की सिद्धि होती है—जो अनुमान कहा है, उस अनुमान का श्रीभाष्यकार ने प्रत्यक्ष के सविकल्पक एव निर्विकल्पक आदि भेदों को सोदाहरण प्रस्तुत करके प्रायः खण्डन कर दिया है। प्रकृत विवेचन में श्रीभाष्यकार की ही बातों का विस्तार किया जा रहा है। तथाहि इस अनुमान के पक्ष आदि (सपक्ष आदि) आदि भेद रहित (निर्विकल्प) रूप से नहीं सिद्ध हैं, क्योंकि ऐसा होने पर उनका व्याहार ही असम्भव हो जायेगा। निर्विकल्पक का भी प्रयोग निर्विकल्पकत्वावच्छिन्न में ही होता है। यदि पक्षादि विकल्प ( भेद ) का विषय हैं; तो प्रश्न है कि ये जो पक्ष आदि ( साध्य, हेतु, परामर्श आदि ) के बोधक विकल्प हैं वे भी पक्षान्तर्गत हैं, या पक्षबहिभूत ? उन्हें पक्षान्तर्गत मानने पर तो परस्पर में विरोध होगा। भेदों के मिथ्यात्व के ग्राहक अनुमान के ही मिथ्या

हो जाने पर भेदों के सत्यत्व की सिद्धि सुतराम् उपपन्न हो जायेगी । फलतः इस अनुमान का हेतु ही आश्रयासिद्ध हो जायेगा । किञ्च उस अनुमान को आप मिथ्या रूप से निरूपित भी नहीं कर सकते हैं । यदि उस अनुमान को विसम्वादी मानें तो फिर विशिष्ट अर्थ की ही सिद्धि होगी । यदि पक्षादि के ग्राहक विकल्पों के ग्राहकों को पक्षान्तर्गत नहीं मानें, तो फिर उनके ही द्वारा आपका यह अनुमान अनैकान्तिक दोषों से दूषित हो जायेगा । यदि कहें कि उन पक्षादि के ग्राहकों का विसम्वाद राहित्य भी अनिश्चित है; तो यह भी नहीं कहा जा सकता है, क्योंकि ऐसा होने पर भी उसका संदिग्ध अनैकान्त्य तो बना ही रहेगा । यदि पक्षादि का विसम्वाद साधनान्तर से सिद्ध किया जाय तो भी अनैकान्तिकत्व दोष बना ही रहेगा । यदि सभी भेद मिथ्या ही हैं तो फिर अद्वैती कल्पित अनुमान भी भेदान्तर्गत होने के कारण मिथ्या ही हो जायेंगे । यदि कहें कि अनुमान का प्रामाण्य इसलिए स्वीकारना चाहिए कि वे परम्परातः निर्विशेषार्थ के प्रतिपादक हैं । अद्वैती विद्वानों का यह भी कथन इसलिए उचित नहीं है कि प्रत्यक्षविकल्प भी अनुमानादि विकल्पों के ही समान प्रामाणिक होंगे । यदि आप अनुमान का प्रामाण्य न स्वीकार करें तो फिर आप अपने समीहित अर्थ निर्विशेष की सिद्धिके हेतु रूपसे अनुमान को क्यों उद्धृत करते हैं?यदि कहें कि लोकव्यवहार से सिद्ध तथा दूसरों के मत से सिद्ध होने के कारण हम उनको उद्धृत करते हैं , तो ऐसा नहीं कहा जा सकता है ; क्योंकि ऐसे आत्मघातियों तथा मूर्ख परीक्षकों द्वारा साध्य की सिद्धि असम्भव है ।

विप्रतिपन्न इति । ननु एकस्य विषयस्य मिथ्यात्व मात्रेणापि उक्तसाध्योपपत्तेः कथम् परिशेषादद्वैतसिद्धिरिति चेन्न,-ब्रह्मान्ययावत्स्वविषय विषयकत्वस्य पक्षतावच्छेदकतया सर्वविषय-मिथ्यात्वसिद्धेः । ब्रह्मान्यत्वञ्च परमते बाधवारणार्थम् । यद्वा मिथ्याभूतयावत्स्वविषयकत्वम साध्यम् । न च ब्रह्मणस्सत्यत्वाद्बाधः, दृष्टान्ते च साध्यवैकल्यम् , शुक्तेर्मिथ्यात्वासिद्धेरिति वाच्यम् ,-यत्किंचित्स्वविषयापेक्षया अन्यूनसत्ताकेतरत्वस्य यावत्स्वविषयविशेषणत्वात् । नन्वेव-मपि अयं घट इत्यादिविकल्पेपि स्वविषयभूतघटाद्यन्यूनसत्ताकत्वेन घटस्य तदन्यस्य च घटत्वादे-र्निश्चितत्वात् बाध इति चेन्न,-तत्समानसत्ताकत्वेनानिश्चितत्वस्य इतरप्रतियोगिविशेषणत्वात् , यथाच मिथ्याभूतयत्किंचित्स्वविषयान्यूनसत्ताकतत्समानसत्ताकत्वेनानिश्चितेतरयावत्स्वविषयकत्वं पर्यवस्यति । यत्किंचित्स्वविषयान्यूनसत्ताकंच तत्तत्समानसत्ताकत्वेनानिश्चितंचेति कर्मधारयः । तच्छब्देन प्रकृतस्य यत्किंचित्स्वविषयपदस्यार्थः परामृश्यते । मिथ्याभूतशब्दस्य कृत्स्नेनोत्तरखण्डेन बहुव्रीहिः । नच शुक्तिरजतविकल्पे रजतान्यूनसत्ताकब्रह्मेतरशुक्तौ मिथ्यात्वासिद्धेः साध्यवैकल्य-मिति वाच्यम् ,-इतरपदेन सामान्याभावस्य विवक्षितत्वात् । नचैवमपि स्वविषयीभूतशुक्त्यन्यून-सत्ताकतत्समानसत्ताकत्वेनानिश्चित ब्रह्मेतरशुक्तौ मिथ्यात्वासिद्धेस्साध्यवैकल्यं शङ्क्यम् ; स्वविष-यीभूतरजतान्यूनसत्ताकब्रह्मशुक्तीतर रजतमादाय साध्यसत्त्वात् । एतदर्थमेव यत्किंचित्स्वविषयेत्यु-क्तम् । तदेतदिति ॥ ॥ स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात् , तथाहि यः । प्रत्ययस्ते मृषा दृष्ट-स्वप्नादि प्रत्ययो यथा ॥ ॥ इति बौद्धोक्तमिदमनुमानमिति प्रत्यभिजानाति । तथासतीति । निर्वि कल्पकस्य प्रवृत्तिनिमित्तार्थविषयकत्वादिति भावः । पक्षादीत्यादिशब्देन साध्यानुमितिहेतुपरामर्शादयो गृह्यन्ते । व्याघातमेव विवृणोति । विकल्पनामिति । विकल्पनां विसंवादित्वमाहित्या

अनुमितेरित्यर्थः । दोषान्तरमाह आश्रयादीति । आश्रयग्राहिविकल्पस्य मिथ्याविषयत्वे आश्रयासिद्धिः । आदिशब्देन हेतुग्राहिविकल्पस्य विसंवादित्वे स्वरूपासिद्धिरित्यादि विवक्षितम् । सर्वत्रेति । द्वन्द्वेऽपि बाध्यादिना बह्न्यनुमित्या वह्निसिद्धिप्रसङ्ग इति भावः । अविसंवादोपीति । विकल्पस्य मिथ्याविषयत्वानुमितेः पाक पक्षादि ग्राहिविकल्पेषु विसंवादित्वस्यानिश्चयादित्यर्थः । पूर्वोक्तं व्याघातं विस्मृत्य या व्यभिचारपरिहारशङ्का तामनूद्य पूर्वोक्तव्याघातेन परिहरति अन्यतस्तेषामिति । यद्वा तस्मिन्नप्यनुमाने पक्षादिग्राहिविकल्पानां पक्षीकरणापक्षीकरणयोः पूर्वानुमानोक्तदोषप्रसङ्गात् इति उक्तदोषानुधावनादित्यस्यार्थः । अस्यानुमानस्य बौद्धोपदेशलब्धत्वात्तेन चानुमानस्य प्रामाण्याङ्गीकारात्तदन्तेवासिनामपि तदेवमतमापाद्य दूषयति यदि चेति । "स्वलक्षणप्रसूतनिर्विकल्पकजनिते" त्यादिवक्ष्यमाण वाक्यानामप्ययमेवाशयः । तुल्यमिति । प्रत्यक्षविकल्पस्याप्रामाण्यमनुमानविकल्पस्य तु प्रामाण्यमिति विभागो न सिद्ध्येदिति भावः । तथापीति । यथानुमानादेः प्रामाण्याङ्गीकारे तेषामप्रामाण्यप्रसङ्गात्सर्वविकल्पाप्रामाण्यसाधकानुमानस्यासम्भवः, तथानुमानाद्यप्रामाण्येऽप्येतदनुमानासम्भवः, स्वस्याप्यप्रमाणत्वादिति भावः ।

किंच निर्विकल्पकस्यापि संवादः किं विकल्पगृहीतः, उत निर्विकल्पकगृहीतः ? नाऽऽद्यः; निर्विकल्पकस्य विसंवादित्वप्रसङ्गात् । अन्यथा क्वचिद्विकल्पप्रामाण्याभ्युपगमे अनैकान्त्यादिदोषात् । न द्वितीयः, स्वस्यापि संवादित्वग्रहणे तस्यानधिकारात् । अधिकारे वा विकल्पत्वप्रसंगात् । तेन विकल्पात् निर्विकल्पकस्यापि प्रामाण्यनिर्मूलनादप्रयत्नविजयिनो माध्यमिकाः ।

प्रसाद—किञ्च प्रश्न है कि अद्वैत्यभिमत निर्विकल्प का सत्यत्व विकल्पों के द्वारा सिद्ध होता है अथवा निर्विकल्पक के द्वारा ? विकल्प द्वारा उसको सिद्ध मानें तो वह गृहीत निर्विकल्प भी विसंवादी होने के कारण मिथ्या सिद्ध हो जायेगा । यदि ऐसा न हो तो फिर विकल्प का कहीं प्रामाण्य तथा कहीं पर अप्रामाण्य स्वीकार करने पर विकल्प का विसंवादित्व भी अनैकान्तिक होगा । निर्विकल्पक को निर्विकल्पक गृहीत इसलिए नहीं माना जा सकता है कि अपने से ही अपना प्रामाण्य ग्रहण करने में उसका अधिकार नहीं हो सकता है; क्योंकि एक ही वस्तु का एक ही क्रिया में कर्तृत्व एवं कर्मत्व असम्भव है । यदि उसका अधिकार में तो फिर वह निर्विकल्प रूप होगा; क्योंकि ग्राह्य निर्विकल्प से ग्राहक निर्विकल्प का भेद अवश्य होगा । इस तरह विकल्प के ही समान निर्विकल्प का भी प्रामाण्य समाप्त हो जाने के कारण माध्यमिक बौद्ध विना प्रयास के ही अद्वैती विद्वानों पर विजय प्राप्त कर लेंगे ।

निर्विकल्पकस्येति । तदविसंवादिग्राहिविकल्पस्यापि विसंवादित्वादिति भावः । अन्यथेति । निर्विकल्पकाविसंवादित्वग्राहिविकल्पस्य प्रामाण्य इत्यर्थः । अनैकान्त्यादीति । क्वचित्प्रामाण्याङ्गीकारे तुल्यन्यायतया विकल्पान्तरेपि प्रामाण्यप्रसङ्ग इत्यादिशब्देन विवक्षितम् । अनधिकारादिति । असामर्थ्यादित्यर्थः । निर्विकल्पकेनाविसंवादित्वग्रहे बाधमाह अधिकार इति । इष्टापत्तिशङ्कायामाह तेनेति । निर्विकल्पक प्रामाण्यग्राहिणोपि विकल्पत्वेन तद्विषयीभूतनिर्विक-

रूपकप्रामाण्यस्य मिथ्यात्वादित्यर्थः । ब्रह्मविषयनिर्विकल्पकस्यापि अप्रामाण्यात् सर्वशून्यता स्यादिति भावः ।

कश्चायं विसम्वादः ? किं १–संवादिज्ञानान्तरराहित्यम् ; २–आहोस्वित् अर्थक्रियास्थित्यभावः, ३–बाधकज्ञानान्तरोदयो वा, ४–यद्वा अनर्थज (भूत) त्वम् ; ५–अथवा अनर्थविषयत्वम् ; ६–यद्वा अन्यस्यान्यात्मनोल्लेखः ; ७–अन्यद्वा किंचित् इति । न प्रथमः ; क्वचिद्बाधात, क्वचिदिष्टप्रसङ्गात्, अकिंचित्करत्वाच्च ।। संवादकाभावे कथमध्यवसाय इति चेत्-यथा सम्वादकस्येति पश्य । परस्परसंवादात उभयाध्यवसाय इति चेन्न, शुक्तिरजतबोधधारावाहिकसन्ततौ तदसिद्धेः ।। अर्थक्रियाविरहव्यवसायविसंवादात तत्र सर्वत्राप्रमात्वमिति चेत, एतेन द्वितीयः कल्पः परिजिघृक्षितः । सोऽपि न, सर्वासामार्थक्रियाणां विकल्पोपज्ञत्वात् । न हि निर्विकल्पकेन कश्चित् प्रवर्तते । न च विकल्पतः प्रवृत्तस्यार्थक्रिया न सम्भवति ( सिध्यति ), मणिप्रभाविषयमणिविकल्पप्रवृत्तस्येव स्वलक्षणप्रसूतनिर्विकल्पक जनिततदारोपितार्थोल्लेखविकल्पप्रवृत्तस्यापि पारम्पर्येणार्थसम्बन्धात निर्विकल्पकनिदान एवं सम्वाद इति चेन्न, नियामकाभावात् । बाधितत्वमिति चेत्—ततस्तृतीयः पक्षः स्वीकृतः । सोऽप्यसारः, असिद्धेः । अत एवानुमानात् तत्सिद्धिरिति चेन्न-अद्यापि तत्प्रामाण्यानिश्चयात् ।। अर्थजत्वात तत्सिद्धिरिति चेन्न, साक्षाद सिद्धेः । परम्परयात्वविशेषात् । अत एव न चतुर्थः, न च जात्यादिविशिष्टस्य जात्यादिविशेषणस्य वा दृष्टोपलम्भसिद्धस्याबाधितस्याप्यनर्थत्वं निश्चिनुमः, यतस्तत्प्रसूतस्य विकल्पस्यानर्थजत्वम् । अतएव न पञ्चमः, अनुमानादिनिर्मूलनाच्च ।

प्रसाद—अद्वैती विद्वानों के प्रकृत अनुमान का साध्य मिथ्याविषयत्व रूप विसम्वाद है । उसके विषय में प्रश्न है कि विसम्वाद पदार्थ क्या है ? (१) क्या वह संवादी (सत्य) ज्ञानन्तर से राहित्य रूप है (२) अथवा उसमें सार्थक क्रिया का अभाव रहता है । (३) अथवा विसम्वाद में दूसरा ज्ञान उत्पन्न हो जाता है ? (४) अथवा वह अनर्थजन्य है ? (५) या वह अनर्थ का विषय होता है ? (६) वह अन्य वस्तु की प्रतीति रूप है ? (७) अथवा उसका इन सबों से कोई दूसरा ही रूप है ? उसे सम्वादी ज्ञानान्तर राहित्य रूप मानें तो ; इस मान्यता का कहीं पर तो बाध होगा, कहीं पर उस मान्यता में सिद्ध साधनता होने के कारण हमें इष्टापत्ति होगी । और कहीं पर यथार्थ ज्ञान का अभाव रहने पर भी उस ज्ञान के बाधित न होने के कारण उस ज्ञान का यथार्थ्य ज्यों के त्यों बना रहेगा । यदि कहें कि सम्वादी ज्ञान के अभाव में उस ज्ञान का प्रामाण्य कैसे हो सकता है ? तो इसका उत्तर है कि जिस तरह संवादी ज्ञानान्तर के अभाव में सम्वादी ज्ञान का प्रामाण्य होता है, उसी तरह इस ज्ञान का भी प्रामाण्य होगा, यदि कहें कि विसंवादी दोनों ज्ञानों के विसम्वादी होने के कारण दोनों में से किसी का भी निश्चय हो

जायेगा, तो ऐसा भी नहीं कहा जा सकता है. क्योंकि देखा जाता है कि शुक्तिरजत के धारावाहिक ज्ञान में दोनों ज्ञानों के प्रामाण्य का निश्चय नहीं होता। यदि कहें कि शुक्तिरजत ज्ञान में रजत के अर्थ क्रिया कारित्व का अभाव होने के कारण उस ज्ञान में बिसम्वाद होता है, अतएव वह सर्वत्र अप्रामा रूप माना जाता है; तो ऐसा भी नहीं कहा जा सकता है, क्योंकि आपके इस कथन से आपने विसंवाद विषयक दूसरे विकल्प को अपना लिया। आपके इस कथन का अर्थ हुआ कि आप अर्थ क्रिया के अभाव को अप्रमा मानते है; फलतः इस कथनकपर्यवसान अर्थक्रिया का अभाव विसम्वाद है, इस द्वितीय कल्प के रूप में हो गया। और आपका वह भी कल्प सिद्ध नहीं हो सकता, क्योंकि आपके इस कथन से सिद्ध है कि सभी अर्थक्रियाओं में विकल्प के द्वारा प्रवृत्ति होगी। विकल्प में अर्थ क्रिया के रहने के कारण विकल्प भी सार्थक होगा। इस तरह आप का उपर्युक्त अनुमान बाधित हो गया। इसके द्वारा विकल्पो के मिथ्या विषय की सिद्धि के बदले में विकल्पों के सत्यत्व की सिद्धि हो गयी। फलतः आपका निर्विकल्पक अप्रामाणिक हो जायेगा। निर्विकल्प के द्वारा तो किसी की निवृत्ति होती नहीं। यह तो कहा नहीं जा सकता है कि विकल्प के द्वारा प्रवृत्त होने वाले की क्रिया सार्थक होती ही नही है। मणिप्रभाविषय० इत्यादि—यदि कहें कि–जैसे मणि की प्रभा को देखकर जिसको मणि का भ्रम हो जाता है, और उसको प्राप्त करने के लिए प्रवृत्त होकर वह मणि को प्राप्त कर लेता है, किन्तु उसकी यह प्राप्ति साक्षात् नहीं होती अपितु परम्परातः होती है। विकल्प स्वलक्षण विषयक निर्विकल्पक जन्य होता है, अतएव वह निर्वि कल्प में अध्यस्त होकर ही विषयों का प्रकाश करता है। इस तरह विकल्प का विषय स्वलक्षणारोपित होने के कारण उसका विषय से सम्बन्ध परम्परातः ही होता है, साक्षात् नही। अतएव सविकल्पकत्व का विषय अर्थ क्रिया शून्य होता हैं, निर्विकल्पक का ही विषय अर्थ क्रिया रूप सम्वाद से युक्त होता है। तो यह भी कथन ठीक नहीं है। क्योंकि अद्वैती विद्वानों के इस कथन में कोई नियामक नही है। यदि कहें कि विकल्प का बाधित होना ही नियामक है, तो यह भी नही कह सकते हैं, क्योंकि आपने यह कह कर विसम्वाद विषयक तीसरे विकल्प को स्वीकार लिया। और विकल्प का बाधितत्व असिद्ध होने के कारण यह तीसरा भी विकल्प निस्सार ही है। विकल्प का बाधितत्व अनुमान के द्वारा सिद्ध होता है यह भी नहीं कहा जा सकता है। क्योंकि आज तक भी आप के उस अनुमान का प्रामाण्य नहीं सिद्ध हो पाया हैं। उस अनुमान को निर्विकल्प का साधक होने के कारण भी प्रामाणिक नहीं माना जा सकता है क्योंकि उस अनुमान की साक्षात् सिद्धि नहीं हो सकती है। परम्परातः तो उसकी सिद्धि और असिद्धि दोनों समान रूप से होती है। उपर्युक्त साक्षात् एवं परम्परा रूप विकल्पों के खण्डन द्वारा ही चतुर्थ विकल्प भी खण्डित हो गया। जिनकी साक्षात् उपलब्धि होती है; उन जात्यादि विशिष्ट को अथवा जात्यादि विशेषण को तो अनर्थ माना नहीं जा सकता। और न तो उनसे ( जात्यादि विशिष्ट अथवा जात्यादि विशेषण से ) उत्पन्न विकल्प को अनर्थ माना जा सकता है। आपके अनुमानआदि का खण्डन हो जाने के कारण पाचवां पक्ष भी उपपन्न नहीं हो सकता है, क्योंकि आपके अनुमान भी जात्यादि विषयक ही हैं। अतएव जात्यादि को अनर्थ मानने पर आप के अनुमान भी अप्रामाणिक ही होंगे।

साध्ये मिथ्याविषयत्वं विसंवाद इति तं विकल्पयति कश्चायमिति। अनर्थभूतत्वम्—अनर्थाद्भूतत्वम्, अनर्थजत्वमिति यावत्। इष्टप्रसङ्गादिति। सिद्धसाधनादित्यर्थः। अकिंचित्करत्व दिति। संवादिज्ञानाभावेपि बाधाभावे यथार्थ्योक्षतेरिति भावः। अध्यवसायः-तत्प्रामाण्याध्यवसायः। ततश्च प्रामाण्यासिद्धः तद्विषयो न परमार्थ इति भावः। शुक्तीति। बाधे सति परस्पर

संवादेपि प्रामाण्यानदुध्यवसायादित्यर्थः । अर्थक्रियेति । अर्थक्रियाविरहव्यवसायरूपो विसंवाद इत्यर्थः । एतेनेति । अर्थक्रियाविरहव्यवसायः--अर्थक्रियाविरह प्रमा , तथाच अर्थक्रियाविरहो विसंवाद इत्यत्र पर्यवसितमिति भावः । सर्वासामिति । विकल्पेन तद्विषये प्रवृत्तो अर्थक्रियादर्शनाद्विकल्पविषयस्यैवार्थक्रियावत्त्वम् , ततश्चानुमाने बाध इति भावः । सर्वासामित्यनेन निर्विकल्पकस्या प्रामाण्यप्रसङ्गो विवक्षितः । एतदुपपादयति-नहीति । बाधमुपपादयति-नचेति । शङ्कते मणिप्रभेति । जनितान्तं विकल्पविशेषणम् । तदारोपितः-स्वलक्षणाध्यस्तः, उल्लेखात्मको विकल्पः निर्विकल्पकनिदान इति । स्वलक्षणविषयनिर्विकल्पकजन्यत्वादेव स्वलक्षणारोपितार्थोल्लेखित्वम् , ततश्च विकल्पविषयस्य स्वलक्षणारोपिततया स्वलक्षणरूपार्थसम्बन्धाद्विकल्पस्य पारम्पर्येणार्थसम्बन्धित्वम् , तथाच निर्विकल्पकविषय एवार्थक्रियालक्षणसंवाद इति सविकल्पकविषयोऽर्थक्रिया-शून्य एवेत्यर्थः । निगूढाभिसन्धिराह असिद्ध रिति । अभिसन्धिमजानानश्चोदयति अत एवेति । एतदनुमानादेवेत्यर्थः । अभिसन्धिमुद्घाटयति । अद्यापीति । अनुमितेरपि विकल्पत्वेनाप्रामाण्याद्विकल्पस्य बाधितत्वं न सिद्ध्यतीत्यर्थः । यद्वा असिद्धे रिति । बाधस्यानुपलब्धिबाधितत्वादित्यर्थः; इदानीं बाधानुपलम्भेपि कालान्तरीयबाधो नानुपलब्धिबाध्य इत्याह अतएवानुमानादिति । अत-एव नेति । साक्षात्परम्पराविकल्पयोरुक्तदूषणा दित्यर्थः । दूषणान्तरमाह नचेति । अनर्थत्वम्--अपरमार्थत्वम् । प्रत्युत पारमार्थ्य मेव निश्चिनुमः, अतो बाध इत्यर्थः । अतएवेति । अनर्थत्वा-निश्चयादित्यर्थः । अनुमानादीति । अनुमानादेरपि जात्यादिविषयत्वेन विसंवादे एतदनुमानमप्य प्रमाणं स्यादित्यर्थः ।

षष्ठोऽपि स्वलक्षणाकारतयैव जात्यादिसिद्धे र्निरस्तः । न चाशब्दात्माऽर्थः शब्दात्मना विकल्पे भातीति वाच्यम् , सर्वेषु विकल्पेषु शब्दानुवेधाभावात् ; यत्र च शब्दानुवेधः , तत्रापि न शब्दोऽर्थात्मना ( शब्दात्मनाऽर्थः ? ) प्रतिभाति , अशब्दात्मनैव पूर्वमेवाध्यवसायात् । न च गौरित्यत्र गकारौकारविसर्जनीयात्मकोऽयमिति मन्यन्ते (न्यते) अपितु गोशब्दप्रवृत्तिनिमित्तभूतगोत्वाश्रय इति । एकार्थानेकशब्देषु अनेकार्थैकशब्देषु च शब्दानामर्थानां च परस्परविरोधादेव नैकता (नैतत्ता ?) दात्म्याध्यवसायसम्भवः । न चात्र साम्यसन्निकर्षादिकमध्यासनिमित्तं पश्यामः । न च चाक्षुषनीलादिप्रत्यये श्रावणनीलादि-शब्दात्मनोल्लेखो युक्तः । न च विकल्पाः सर्वे मनसाः; (समानाः; मानस) बाह्येन्द्रियव्यापारा-न्वयव्यतिरेकानुविधानविरोधात् । न च गोशब्दात्मना खण्डशब्दात्मना च गोव्यक्तौ विकल्पितायां जातिव्यक्तिशब्दविभागनिमित्तं सम्भवति । न च जातिशब्दो व्यक्तौ नाध्यस्यत इति वाच्यम् ; गौरयमित्येव प्रतिभासात् । तथा ( तदा ? ) च व्यक्तिशब्दस्यापि तुल्य

न्यायतया नाध्यासः। अतस्तटस्थ एव शब्दः स्वविषयमावेदयति वस्त्वन्तराच्च व्यवच्छिनत्तीति न शब्दाध्याससंभवः।

नापि सप्तमः, बाधपर्यवसितस्य कस्यचिदन्यस्यानुपलम्भात्,
अन्यादृशस्य साधनेऽपि विरोधाभावादिति॥

न च संस्कारप्रसूततामात्रेण विकल्पस्याप्रामाण्यम्; स्मृतिप्रामाण्यवादिषु तस्य दुर्वचत्वात्; संस्कारमात्रासाधारणकारणकस्य स्मृतित्वात्। स्मृत्यनुभवात्मकत्वपक्षेऽप्यंशे स्मृतित्वलक्षणमप्रामाण्यम् प्रसज्येत, न पुनर्विसंवादित्वलक्षणम्।

प्रसाद—जाति आदि के भी स्वलक्षणाकार (परमार्थ) सिद्ध हो जाने के कारण छठा विकल्प भी खण्डित हो गया। यह भी नहीं कहा जा सकता है कि अर्थ शब्दात्मक न होने पर भी विकल्प में शब्दात्मक रूप से प्रतीत होता है, क्योंकि सभी विकल्पोंमें शब्दानुप्रवेश नहीं देखा जाता। जहाँ पर शब्द का अनुवेध भी रहता है, वहाँ भी अर्थ शब्दात्मक रूप से नहीं प्रतीत होता। क्योंकि पहले ही उसका अशब्दात्मक रूप से ही निश्चय होता है। कोई भी गौ को गकार औकार तथा विसर्जनीयात्मक रूप से नहीं मानता, अपितु उसे गोत्वावच्छिन्न रूपही माना जाता है। किञ्च एकार्थक अनेक शब्दों एवं अनेकार्थक एक शब्द में परस्पर में विरोध होने के कारण ही, उनके तादात्म्य का निश्चय होना असम्भव है। शब्द एवं अर्थ के विषय में साम्य तथा सन्निकर्ष आदि भी अध्यवसाय के कारण नही बन सकते हैं। नीलादि का चाक्षुष प्रत्यक्ष होने पर उनका (नीलादि का) श्रावण प्रत्यक्ष मानना युक्तियुक्त भी नहीं है अतएव भी शब्दार्थ तादात्म्याध्यास नहीं हो सकता। सभी विकल्प एक तरह के भी नहीं होते हैं; कुछ बाह्येन्द्रियों के विषय होते हैं तथा कुछ आभ्यन्तरेन्द्रिय के। जैसे गौः यह विकल्प मानसान्वय व्यतिरेकी है; तथा 'खण्डोऽयम्' यह विकल्प चाक्षुषान्वयव्यतिरेकी है। एक ही गो व्यक्ति में गो शब्द से तथा खण्ड आदि शब्दों से जाति तथा व्यक्ति रूप शब्दका विभाग होने के कारण भी तादात्म्याध्यास नहीं सम्भव है। यह भी नहीं कहा जा सकता है कि जातिवाचक शब्द का व्यक्ति में अध्यास नहीं होता; जाति शब्द जाति का ही वाचक होता है और व्यक्ति शब्द उससे भिन्न है, क्योंकि जिस तरह की प्रतीति के द्वारा आप शब्दाध्यास स्वीकारते हैं, उसी तरह की प्रतीति 'यह गौ है' यहाँ पर भी होती है, अतएव जाति का भी व्यक्ति में आपको अध्यास मानना ही होगा। यदि जाति का अध्यास न मानें तो फिर उसी तरह व्यक्ति का भी जाति में अध्यास नहीं माना जा सकता है। अतएव यही मानना चाहिए कि तटस्थ रहकर ही शब्द अपने विषय को प्रकाशित करता है तथा अपने बोध्य विषय को वस्त्वन्तर से पृथक करता है। उसका अर्थ में अध्यास नहीं होता। विसम्वाद विषयक सातवाँ विकल्प इसलिए नही माना जा सकता है कि उसके विषय में प्रश्न है कि वह बाध में पर्यवसित होता है कि नहीं? प्रथम पक्ष इसलिए नहीं माना जा सकता हैं कि बाध में जिसका पर्यवसान हो ऐसी उपर्युक्त विकल्प व्यतिरिक्त वस्तु की उपलब्धि नहीं होती। यदि अबाधित वस्तु की सिद्धि आप करें तो हमारा उससे कोई विरोध भी नहीं है। यदि कहें कि विकल्प चूंकि संस्कार मात्र जन्य होता है, अतएव अप्रामाणिक होता है, तो ऐसा इसलिए नहीं कह सकते है; कि कुछ अद्वैती विद्वान् ही संस्कारमात्रजन्य स्मृति का प्रामाण्य स्वीकारते हैं। स्मृति

अनुभवात्मकत्ववादी अद्वैती विद्वानों के भी मत में, अंशतः स्मृतित्व रूप अप्रामाण्य होगा, विसंवादित्व रूप नहीं।

स्वलक्षणेति। परमार्थसदित्यर्थः। अन्यस्यान्यात्मना मानमस्तीति शङ्कते। नचाशब्देति। शब्दात्मना प्रतिभानाभावं विशेषदर्शनानुपलम्भेन चोपपादयति अशब्दात्मनैवेत्यादिवाक्यद्वयेन। अपिरिवेति। इदमुपलक्षणम्, क्वचिद्गोशब्दवाच्य इत्यापि भासत इति भावः। शब्दार्थभेदग्रहस्यावश्यकत्वमाह एकार्थेत्यादिना। कारणाभावाच्च न शब्दाध्याससम्भव इत्याह— नचेति। नच विकल्पा इति। एकेन्द्रियग्राह्यत्वात् आरोप उपपद्यत इति भावः। नच निर्विकल्पके तदुपक्षयः, मनसोपि तथा प्रसङ्गादिति भावः। नच गोशब्दात्मनेति। जातिव्यक्तिवाचकत्वनिबन्धनत्वात्तद्विभागस्येति भावः। शब्दाध्याध्यास पक्षे वाच्यवाचकभावग्रहो न समयग्रहः समयग्रहाभावे विकल्पे शब्दानुवेधाभावेन तस्य शब्दानुवेधोपयोगित्वात्, शब्दाध्यासरूपशब्दानुवेधे च पूर्वं शब्द तादात्म्यग्रहस्यैव उपयोगितया तस्यैव समयग्रहत्वात्, अतो जातिवाचित्वादि विभागो नास्तीति तात्पर्यम्। नचजातीति। जातिशब्दो जातिवाचक एव, तदितरश्च व्यक्तिशब्द इति विभाग इति भावः। यादृश्या प्रतीत्यात्वया क्वचिच्छब्दाध्यास उच्यते तादृश्येवेयं प्रतीतिरिति जातिशब्दस्याप्यध्यासो दुर्वार इति भावः। अस्तु तर्हि जातिशब्दस्याध्यासः, व्यक्तिशब्दस्य तु माभूत्, अतस्सिद्धो विभाग इत्यत्राह-तथाचेति। अतइति। ततश्शब्दाध्यासे प्रत्यक्षादिविरोधादिः, अतश्शब्दस्तटस्थस्सन् विषयानन्तर्भूत एव व्युत्पन्नमर्थं बोधयति, प्रत्यक्षादिष्वपि क्वचिद्वाच्यवाचकभावसम्बन्धेन विशेषणतया भासमानो वस्त्वन्तराद्व्यवच्छिन्नस्सीत्यर्थः। उपसंहरति-इति न शब्दाध्याससम्भव इति। सप्तमोपि किं बाधपर्यवसितः, उत नेति विकल्प्याद्यं दूषयति-बाधेति। ननु संस्कारप्रसूतायास्स्मृतेरप्रामाण्यदर्शनात्संस्कारजन्यत्वमप्रामाण्यप्रयोजकम्; अतस्तादृशत्वाद्विकल्पस्याप्रामाण्यं वाच्यमित्यत्राह- नच संस्कारेति। संस्कारजन्यत्वंच परेण स्वमतानुसारेणोक्तम्। अभ्युपगमेन परिहारः। न वयमयाथार्थ्यलक्षणमप्रामाण्यमापादयामः परन्तु स्मृतित्वलक्षणाप्रामाण्यमित्यत्राह- संस्कारमात्रेति। मात्रपदं प्रत्यभिज्ञायामतिव्याप्तिवारणाय। असाधारणपदमसम्भववारणार्थम्। स्मृत्यनुभवेति स्मृत्यनुत्वात्मकत्वाङ्गीकारयीत्यर्थः।

विकल्पत्वादिति हेतुश्च विशिष्टप्रत्ययत्वमात्रम्? तद्विशेषो वा? नाद्यः, निर्विकल्पकस्याप्यस्मन्मतेन यत्किंचिद्विशिष्टप्रत्ययत्वेनानैकान्त्यात्। तस्यापि पक्षीकारे तदतिरिक्तनिर्विकल्पकस्यानुपपत्त्या सर्वप्रत्यक्षोच्छेदप्रसङ्गात्। नापि द्वितीयः, प्रथमाक्षसन्निपातजविशिष्टप्रत्ययादुपरितनविशिष्टप्रत्ययस्य कारणदोषादिविशेषाभावात्, सर्वदा रसरूपादेश्चादोषरूपत्वस्थापनात्। अतो विशिष्टप्रत्ययमात्राप्रामाण्यवादिना सर्वप्रत्यक्षनिर्मूलनेपरिशेषोऽपि शून्यतत्त्वमुपस्थापयेत्; न पुनरद्वैतम्। किञ्च परकल्पितबाह्यविषयनिर्विकल्पकस्य त्वन्मतेन मिथ्याविषयत्वात् तद्दृष्टान्तेनाद्वैतविषयनिर्विकल्पकस्यापि मिथ्याविषयत्व—

मनुमेयमिति । किञ्च-

श्लो-विकल्पाविषयत्वं चेत्—ब्रह्मणः प्रतिपाद्यते ।
श्रोतव्यादिविधीनाम् स्यादश्रोतव्यत्वमेव ते ॥

अतो न निर्विशेषस्य ( स्यापि ) ब्रह्मणो विकल्पाविषयत्वमपीति ॥

॥ इति शतदूषण्यां विकल्पप्रामाण्यभङ्गवादः सप्तचत्वारिंशः ॥



प्रसाद—किञ्च अद्वैती विद्वानों के अनुमान का 'विकल्पत्वात्' यह हेतु वाक्य विशिष्ट प्रत्ययत्व मात्र को बोधित करता है अथवा विशिष्ट प्रत्ययत्व के अन्तर्गत आने वाले इन्द्रियों के सन्निकर्ष जन्य प्रथम ज्ञान के पश्चात् होने वाले विशिष्ट प्रत्ययत्व आदि को बोधित करता है ? विशिष्ट प्रत्ययत्व मात्र को इसलिए नहीं माना जा सकता है कि हम निर्विकल्पक प्रत्यक्ष को भी यत्किञ्चित् विशेषण विशिष्ट वस्तु विषयक ही मानते हैं ; अतएव आपका निर्विकल्पक ज्ञान भी विकल्पान्तर्गत होने के कारण मिथ्या विषयक हो जायेगा । यदि उसको भी आप पक्षान्तर्गत मानें तो फिर सभी प्रत्यक्षों का ही उच्छेद हो जायेगा, क्योंकि उसके अतिरिक्त कोई दूसरा निर्विकल्प हो नहीं सकता । दूसरा पक्ष इसलिए नहीं माना जा सकता है कि प्रथमेन्द्रिय सन्निकर्षजन्य विशिष्ट प्रत्यय के पश्चात् होने वाले विशिष्ट प्रत्यय में, कोई कारण दोष आदि विशेषता का अभाव होने से तथा संसार का सम्पर्क आदि के दोष रूपत्वाभाव का प्रतिपादन करने के कारण, वह ज्ञान मिथ्या वस्तु विषयक नही हो सकता है । इस तरह विशिष्ट ज्ञान के मिथ्यात्व प्रतिपादन करने वाले अद्वैती विद्वानों के मत में परिशेषात् शून्य तत्त्व ही अवशिष्ट रहेगा अद्वैत नहीं । किञ्च कल्पित बाह्य वस्तु विषयक निर्विकल्पक को आप मिथ्या विषयक मानते हैं , उस निर्विकल्प का दृष्टान्त देकर अद्वैत विषयक निर्विकल्पक का भी मिथ्यात्वानुमान किया जा सकता है । तथाहि—अद्वैत विषयकं निर्विकल्पकं ज्ञानम् मिथ्या ; निर्विकल्पकत्वात् , कल्पितबाह्यवस्तुनिर्विकल्पकवत् ।

किञ्च यदि आप ब्रह्म को विकल्प का विषय नहीं मानें तो फिर आपके मत में ब्रह्म के श्रवण , मनन एवं निदिध्यासन का विधान आश्रोतव्य ही हो जायेगा । अतएव निर्विशेष भी ब्रह्म विकल्प का अविषय नही सिद्ध हो सकता है ।

इस तरह शतदूषणी का विकल्पप्रामाण्यभङ्ग नामक सैंतालिसवाँ वाद समाप्त हुआ ॥



तद्विशेष-विशिष्टप्रत्ययत्व व्याप्यः प्रथमाक्षसन्निपातजप्रत्ययोत्तरविशिष्टप्रत्ययत्वादिरित्यर्थः । किमुभयसम्प्रतिपन्नो विकल्पः पक्षः ? उत विशिष्टप्रत्ययमात्रम् ? आद्ये दोषमाह ; निर्विकल्पकस्यापीति । अनैकान्त्यात्-सन्दिग्धाऽनैकान्त्यात् । पक्षतमत्वे च वक्ष्यमाण प्रत्य-

क्षच्छेदो द्रष्टव्यः। द्वितीये दोषमाह तस्यापीति। उच्छेदः अप्रामाण्यम्। द्वितीये अप्रयोजकत्वमाह प्रथमाद्येति। सर्वप्रत्ययेति। निर्विकल्पकाभिमतस्य ब्रह्मप्रत्यक्षस्यापि विशिष्टप्रत्ययत्वात् प्रत्यक्षमात्रं निर्मूलमिति भावः। श्रोतव्यादीति। श्रवणादीनां विशिष्टप्रत्ययत्वेन विकल्पाविषये ब्रह्मण्यसम्भवात् श्रवणादिविधीनामप्रामाण्येनाऽनुपादेयत्वं स्यादित्यर्थः। अत इति। अश्रोतव्यत्वप्रसङ्गादित्यर्थः। ततो ब्रह्मणोपि मिथ्यात्वं स्यादिति भावः।

इति श्रीमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायाम् शतदूषणीव्याख्यायाम् चण्डमारुताख्यायाम् विकल्पप्रामाण्यभङ्गो नाम सप्तचत्वारिंशस्स्कन्धः ॥४७॥



## ※ अथ उपबृंहणवैयर्थ्यवादः अष्टचत्वारिंशः ॥४८॥ ※

गुणविभूतिविशेषविचित्रितं निगमसीमनि यत् समधीमहे।
स्मृतिपुराणशतैरुपबृंहितं तदिदमस्तु सदा हृदयेषु नः॥

प्रसाद—जो भगवान् कल्याणकारी वात्सल्यादि गुणों तथा लीला विभूत तथा नित्यविभूति आदि से विशिष्ट, वेदान्तों के प्रतिपाद्यभूत तथा स्मृतियों एव पुराणों के अनेक वाक्यों से उपबृंहित हैं, वे हमारे हृदय में निवास करें।

उपनिषदुपबृंहणप्रतीपप्रशमपटूरमृतश्रुतेरसिद्धाः।
हयमुखहृदयङ्गमाः पिबेम श्रवणपुटैः कविवादिसिंहवाचः॥

इयत्तानालीढाखिलगुणविभूति स्मृतिमुखैः
सह क्रोशन्तीनाम् हयमुखमिदङ्कारमनिशम्।
श्रुतीनाम् प्रत्यूहानसुरजनमोहाय विहितान्
निरुन्धन् शैवादीन् स जयति भृशं श्रीनिधिगुरुः॥

गुणविभूतीति। अनेनानुक्तविशेषैः सहावगतार्थव्यक्तीकरणमुपबृंहणं स्वमते उपपद्यते परमते तु तद् घटचमिति सूच्यते। तेन वादार्थः सङ्गृहीतो भवति। निगमसीमनि--वेदान्त इत्यर्थः।

यदुच्यते—निर्विशेषचिन्मात्रब्रह्मात्मैक्यं त्रय्यन्तसिद्धं स्मृतिपुराणादीन्युपबृंहयन्तीति तत्र तावत् तत्तत्प्रकरणादिपरामर्शेन भाष्कारैरेव तेषां यथास्थितोऽर्थः प्रदर्शितः। सामान्यत किञ्चिदुच्यते—यदा शब्दमात्रस्य निर्विशेषबोधनसामर्थ्यं नास्तीत्युपपादिपदाम ; तदा

कैव कथा तद्विशेषाणाम् ? यदा च श्रुतिपरिषदशेषाऽपि विशिष्टविषयेति निरणैष्म; तदा कथं तदुपबृंहणानि तत्प्रतीपानि ( तत्प्रतिपादकानि ) प्रतिपद्येमहि ? यदा पुनः निर्विशेषपरा सेति पश्यसि , तदा तत्रोपबृंहणं नाम (१) किं यथोक्तानुवादमात्रम् ? (२) उत तद्व्यक्तीकरणम् ? (३) अथानुक्तवस्त्वन्तरवर्णनम् , (४) अन्यद्वा किञ्चित् इति / न प्रथमः , अनुवादमात्रेऽपबृंहणत्वप्रसिद्ध्यभावात् , प्रयोजनाभावाच्च । ज्ञातस्थिरीकरणम् प्रयोजनमिति चेन्न , श्रुतिप्रामाण्ये तदर्थे च यथावन्मीमांसिते तदनुवादमात्रेण तदतिरिक्तस्थिरीकरणासम्भवात् । यदि तत्रानाश्वासः , तदा कैव कथा सम्भवद्भ्रमप्रमादादिदोषेषु वाक्येषु । न च साक्षात्सौगतमतमाश्रित्य संवादात्प्रामाण्यमनुमन्तुमर्हसि । नचैवमु- [चैतदु ?] पबृंहणान्तरसापेक्षम् ; अनवस्थाप्रसङ्गात् । न च तन्निरपेक्षम् ; श्रुतिवदेव तव तत्राप्यनाश्वासप्रसङ्गात् ॥ परस्परसंवादादुभयत्राश्वास इति चेत् , न [ मास्तु ], असकृदनुसंहितैकश्रुतिवाक्यमात्रजन्मनि तत्प्रत्ययप्रवाहेऽपि तस्य कर्तुं शक्यत्वात् , अतिप्रसङ्गश्च तदेति ।

प्रसाद—अद्वैती विद्वानों ने यह जो कहा है कि वेदान्तों में निर्विशेष तथा ज्ञानमात्र ब्रह्म का आत्मा से अभेद बतलाया गया है । उसी ब्रह्म का उपबृंहण स्मृतियों तथा पुराणों के वाक्य करते हैं । इसके विषय में श्रीभाष्यकार ने ही उन वाक्यों के प्रकरणादि के समालोचन पुरस्सर उनका यथोचित अर्थ कर दिया है, अतएव अद्वैती विद्वानों की उपर्युक्त मान्यता के खण्डन में सामान्यतः हम कुछ कह रहे हैं । हमारा कहना है कि किसी एक शब्द का भी निर्विशेष वस्तु का बोध कराने में सामर्थ्य नहीं , इस बात का हम प्रतिपादन कर चुके हैं । ऐसी स्थिति में अनेक शब्दों से बने वाक्यों के द्वारा निर्विशेष का प्रतिपादन कैसे सम्भव होगा ? जब कि हम लोग यह निर्णय कर चुके हैं, कि सारी श्रुतियाँ विशिष्ट ब्रह्म का ही प्रतिपादन करती हैं, तब यह कैसे कहा जा सकता है कि वेदार्थों के व्याख्याभूत इतिहास पुराणादि निर्विशेष ब्रह्म का प्रतिपादन करते हैं ? किञ्च जब आप यह कहते हैं कि स्मृतियाँ आदि निर्विशेष ब्रह्म का ही प्रतिपादन करती हैं, तो प्रश्न उठता है कि आप उपबृंहण का क्या अर्थ मानते हैं ?(१) क्या श्रुतियों में प्रोक्त निर्विशेष ब्रह्म का अनुवाद मात्र ? ( २ ) अथवा उसका प्रकाशन ? ( ३ ) या जिन बातों को वहाँ नहीं बतलाया गया है उनका वर्णन ? (४) या अन्य कुछ ?

अनुवाद मात्र तो इसलिए नहीं माना जा सकता है कि अनुवाद मात्र को उपबृंहण नहीं कहते है। किञ्च श्रुत्युक्त निर्विशेष ब्रह्म का इतिहासादि के द्वारा अनुवाद मात्र का कोई प्रयोजन भी नहीं होगा । यदि कहें कि उसका प्रयोजन श्रुतियों में ज्ञात अर्थ का दृढीकरण ; तो यह भी नहीं कह सकते, हैं, क्योंकि श्रुतियाँ जिसका यथावत् विवेचन करके स्वयम् उसमें प्रमाण बन गयी हैं, उसका अनुवादमात्र करके पुराणादि उसका कौन सा स्थिरीकरण करेंगे ? यदि अपौरुषेय श्रुतियों में अविश्वास मानें तो फिर पौरुषेय वाक्यों में विश्वास अवश्य होगा, क्योंकि पौरुषेय पौराणिक वाक्यों में तो भ्रम, प्रमाद, विप्रलिप्सा तथा करणापाटवादि दोषोंके लिए भरपूर अवकाश रहता है । यदि आप साक्षात् बौद्ध मत को अपनाकर,

स्मार्त वाक्यों के संवाद के द्वारा श्रुतियों का प्रामाण्य मानना चाहते हों; ऐसी भी बात नही है। संवाद के द्वारा प्रामाण्य मानने में दूसरा दोष यह है कि आप संवादिवचनान्तर के द्वारा प्रामाण्य मानते हैं, अथवा सम्वाद मात्र के द्वारा ? प्रथम पक्ष में उस वचनान्तर के द्वारा प्रामाण्य मानने में अन्योन्याश्रय दोष होगा ; क्योंकि जब श्रुतियों का प्रामाण्य हो तो उसके द्वारा दूसरे वाक्य की एक वाक्यता हो, और एक वाक्यता हो जाने पर उनके द्वारा श्रुतियों में प्रामाण्य होगा। यदि द्वितीय पक्ष मानें तो अनवस्था दोष होगा, क्योंकि जिस वाक्य से श्रुतियों का संवाद (एकवाक्यता) होगा उसके साथ सम्वाद रखने वाले वाक्य की भी संवादकी अपेक्षा होगी और उस वाक्य कोभी अपने से भिन्न की। यदि सम्वाद निरपेक्ष आप प्रामाण्य मानें तो फिर आपका जिस तरह श्रुतियों में अविश्वास है, उसी तरह उपबृंहण वाक्यों में भी अनाश्वास होगा। यदि श्रुतियों तथा उपबृंहण वाक्यों के परस्पर में सम्वाद के द्वारा दोनों में विश्वास मानें तो ऐसा आप नहीं कह सकते हैं, क्योंकि बार-बार अनुसंधान करने के कारण केवल एक श्रुति में जो विश्वास आप का उत्पन्न हुआ है, वह विश्वास श्रौत ज्ञान प्रवाह रूप उपबृंहणों भी सभव है, और ऐसा होने पर बाह्यागमों के भी परस्पर में एक वाक्यता होने पर उनमें भी विश्वास का प्रसङ्ग होगा।

इह तत्तद्वाक्यानां प्रकरणादिपर्यालोचनया सविशेषपरत्वोपपादनमुखेन निर्विशेषवस्तूपबृंहणासम्भवानुपपादने हेतुमाह तत्र तावदिति। अनेन प्रकरणादिविरोधान्न निर्विशेषोपबृंहणत्वमिति सूच्यते। यद्वा निर्विशेषोपबृंहणासम्भवे हेतुमाह तत्र तावदिति। "भाष्यकारैः प्रदर्शित" इत्यनेन निर्विशेषे प्रकरणादिविरोधस्याविचाल्यत्वमिहानुपपादने हेतुश्च सूच्यते। हेत्वन्तरं प्रतिजानीते सामान्यत इति। किमर्थं निश्चय एव स्थिरीकरणम् उतान्यत् किञ्चित् ? नाद्यः तस्य निश्चितप्रामाण्येन मीमांसितेन श्रुतिवाक्येन सिद्धतयाऽनुवादनैरपेक्ष्यात्, न द्वितीयः; अनुवादात् स्थिरीकरणाश्रयस्यान्यस्य कस्यचिद्दर्शनादित्याह न श्रुतिप्रामाण्य इत्यादिना। तादृश्यापि श्रुत्या अर्थानवधारणे हेतुमाह यदीति। तत्रेति। कैव कथेति। अर्थनिश्चयहेतुनैश्चल्येपि श्रुतेरर्थनिश्चयाभावे सन्देहहेतौ जागरूके स्मृत्यादिना अर्थनिश्चयः सुतरां न सम्भवतीति भावः। ननु संवादादेव शब्दस्य प्रामाण्यनिश्चयः; ततश्चोपबृंहणसंवादात्प्राक् श्रुतेरर्थनिश्चयाभावादुपबृंहणाधीनमेवात्रार्थावधारणात्मकं स्थिरीकरणमित्यत्राह नचेति। साक्षादिति। बाह्यत्वप्रच्छादनं विनेत्यर्थः। तथाच संवादेन वेदप्रामाण्योक्तौ सौगतमतप्रवेशापत्तिरिति भावः। संवादात्प्रामाण्ये दोषान्तरमाह नचैवमिति। किं संवादिवचनान्तरप्रामाण्यनिश्चयाधीन आश्वासः किं वा संवादमात्राधीनः ? नाद्यः--अन्योन्याश्रयप्रसङ्गादित्यभिप्रेत्य द्वितीये। दोषमाह असकृदनुसंहितेति। तस्येति। आश्वासस्येत्यर्थः। न च प्रमाणान्तरसंवाद एवाश्वासहेतुरिति वाच्यम्, अनिश्चितप्रामाण्यत्वाविशेषे स्वसंवादादप्याश्वाससम्भवादिति भावः। अतिप्रसंगश्चेति। बाह्यागमानामपि परस्परसंवादात्प्रामाण्यप्रसङ्ग इति भावः।

नापि द्वितीयः ; निर्विशेषपक्षे तदयोगात्। तथाहि--यन्निर्विशेषं श्रुतम्, तत् श्रुत्यैव व्यक्तम्। तदतिरिक्तप्रकाशने तु सविशेषत्वावश्यंभावादुपबृंहणोपबृंहणीयवैघट्यम्। मिथ्याभूतातिरिक्ताकारबोधनेऽपि कथं तत्त्वावेदकस्यातत्त्वावेदकमुपबृंहणं स्यात्। अथ

श्रुतौ कस्यचिदप्रतिपन्नं कस्यचित्प्रतिपन्नं ब्रह्मस्वरूपमेवात्र व्यज्यत इति मन्यसे—तदपि न, श्रुतिं प्रति अनङ्गत्वप्रसङ्गात् ॥ तदाभिमुख्यजननात् तदङ्गत्वमिति चेत्, तत्फलसिद्धौ किं तदाभिमुख्येन ? असिद्धौ वा कुतस्तत् ?

नापि तृतीयः, अनुपबृंहणत्वप्रसङ्गादेव । अन्यथा परस्परभिन्नार्थानां वेदभागानामेव परस्परोपबृंहणत्वप्रसङ्गात् ।

प्रसाद— उपबृंहणों को श्रौतार्थ का व्यक्तिकरण मात्र भी नहीं माना जा सकता है, क्योंकि निर्विशेषपक्ष में वह उपपन्न नहीं हो सकता, किञ्च श्रुत निर्विशेष ब्रह्म तो, श्रुति के द्वारा ही व्यक्त हैं, उपबृंहण वाक्यों द्वारा उससे भिन्न का प्रकाशन होने पर उस प्रकाशित वस्तु को सविशेष अवश्य मानना होगा, और ऐसी स्थितिमें उपबृंहण और उपबृंहणीय में विरोध होगा। तत्त्वावेदक उपबृंहण वाक्यों का उपबृंहण अतत्त्वावेदक वाक्य कैसे हो सकते हैं। यदि कहें कि ब्रह्म का स्वरूप किसी को तो श्रुति में प्रतीत हुआ है किन्तु किसी को नहीं प्रतीत हुआ है; उसी ब्रह्म के स्वरूप का प्रकाशन उपबृंहण वाक्य करते हैं, तो यह भी नहीं कह सकते हैं, क्योंकि ऐसा मानने पर उपबृंहण ग्रन्थ श्रुति के अङ्ग नहीं हो सकते, क्योंकि श्रुति का उपकारक ही उपबृंहण होता है, स्वतन्त्रतया किसी के प्रति बोधक को उपबृंहण नहीं कहा जाता। श्रुति के प्रति आभिमुख्य पैदा करके भी उपबृंहण ग्रन्थ श्रुत्यङ्ग नहीं हो सकते, श्रुत्यर्थ का निर्णय हो जाने पर उनके प्रति आभिमुख्य से कोई लाभ नहीं, अथवा श्रुत्यर्थ के निर्धारण के अभाव में, उपबृंहणों द्वारा आभिमुख्य भी असम्भव है। अनुक्त वस्त्वन्तर वर्णनरूप भी उपबृंहण को नहीं माना जा सकता है, क्योंकि उसे तो उपबृंहण कहते नहीं हैं। अन्यथा भिन्नार्थ के प्रतिपादक वेद के तत्-तत् भाग ही परस्पर में एक दूसरे के उपबृंहण सिद्ध हो जायेंगे।

किं निश्चयमात्रं व्यक्तीकरणम् उत सामान्यतः प्रतिपन्नस्य विशेषाकारनिश्चयः ? आद्ये दोषमाह यन्निर्विशेषमिति। द्वितीये तदतिरिक्ताकारः किं सत्यः उत मिथ्या ? आद्ये आह तदतिरिक्तेति। द्वितीये मिथ्याभूतेति। अत्रेति। उपबृंहण इत्यर्थः। श्रुतिप्रतीति न श्रुत्या प्रतिपन्नेऽर्थे विशेषबाधनेन श्रुतौ संशयितार्थव्यक्तीकरणादिना वा श्रुत्युपकारकत्व एव उपबृंहणत्वं स्यात्, न तु स्वातन्त्र्येण कञ्चित्प्रति बोधकत्वमात्रेणेति भावः। तदाभिमुख्यजननादिति स्वमूलभूतश्रुतौ प्रवर्तनेनेत्यर्थः। तत्फलेति फलमर्थावधारणम्। असिद्धाविति तत् आभिमुख्यम्। उपबृंहणावधारितस्यार्थस्य उपादेयत्वबुद्ध्या हि तत्प्रतिपादकश्रुतौ तन्मूलभूतायां प्रवृत्तिः स्यादिति भावः। अनुक्तवस्त्वन्तरमात्रवर्णनमिति तृतीयः पक्षः, तं दूषयति नापि तृतीय इति।

नापि चतुर्थः, अत्यन्तभिन्नार्थत्वस्य, अभिन्नार्थत्वेऽप्यन्यूनानतिरिक्तविषयत्वस्य अतिरिक्तविषयत्वेऽपि सत्यमिथ्यार्थत्वयोर्दूषितत्वात् न्यूनबोधनमवशिष्यते। न च तदाऽप्युपबृंहणता, उक्तांशस्य तुल्यतया नैरपेक्ष्यात्। अनुक्तांशेऽनुक्ततेरेवोपबृंहणत्वगन्धाभावादिति। किञ्च, यच्चाधिकं श्रुतौ बोध्यते, तत्सत्यत्वे सविशेषता। तन्मिथ्यात्वे श्रुतिरत-

स्वावेदिका, पुंवाक्यं तु न तथेत्यापन्नम् । न च मा भूदुपबृंहणमिति वाच्यम्, शारीरकाधिकरणेषु तत्रतत्र स्मृतिसंवादोदाहरणादिविरोधात् । अन्यथा वेदा (चेद) नुग्राहकतर्कस्यापि प्रहाणप्रसंगात् । तत्प्रहाणे पुनः; 'आर्षं धर्मोपदेशम्' इत्यादिमहर्षिवचनविरोधः, न चैवमस्मन्मते प्रसङ्गः, श्रुतिप्रतिपन्नस्यैव ब्रह्मणोऽनन्तगुणविभूतेरप्रतिपन्नानेकगुणविभूतिवैशिष्ट्यबोधनेन व्यक्तीकरणोपपत्तेः । न चाप्रतिपन्नस्यांशस्यावेदार्थत्वम् विप्रकीर्णानन्तशाखे महति वेदवृक्षे यत्र क्वचित् कोटरे तस्यापि निलीनत्वात् । तस्य चाल्पभागश्चावि भिरयोगिभिरधिगन्तुमशक्यत्वात्, तत्कृते च योगिभिरुपबृंहणप्रणयनोपपत्तेः । कति कति च [न] दृश्यन्ते अधीयमानास्यापि शाखाष्वप्रतिपन्नाः संशयिताश्च उपबृंहणाधीनाध्यवसायाः सारार्थाः । अन्यथा कथं वेदार्थे वादिनां मतभेदसमुत्थानम् ? न चोपबृंहणानां मिथो विरोधान्निर्णयासिद्धिः, उपबृंहणीयविरोधाभ्यां विशेषात् । अत एव हि शारीरक स्मृत्यधिकरणे कपिलादिस्मृतेर्निरासः । उपबृंहणीयाविरुद्धमन्वादिस्मृतिसन्निधौ तद्विरुद्धकपिलादिस्मृतेरप्रमाणत्वान्न तैरुपबृंहणम्; नाप्युपबृंहणीयबाध इति हि तत्रार्थः । तेन ताम सराजससङ्कीर्णपुराणादिभि र्वेदोपबृंहणं पुराणविभागविवेकपरिज्ञानशून्यानामविवेकितानिबन्धनमिति तन्नाद्रियामहे । उक्तं हि मात्स्ये, "अग्नेः शिवस्य माहात्म्यम्" इत्यारभ्य, "सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥" इत्यन्तम् । तदेतत् सर्वमर्थतो निदर्शितं भाष्ये–'उपबृंहणं नाम विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम् सकलशाखानुगतस्य वाक्यार्थस्याल्पभागश्रवणादुरवगमत्वेन तेन विना निश्चयायोगादुपबृंहणं हि कार्यमेव' इति । एवं च सामान्यतो निर्विशेषतया उपबृंहणासम्भवेऽनुपबृंहितेन वेदेनार्थनिश्चयायोगात् वेदविप्लावक एव निर्विशेषवादः । स्मरन्ति च–'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुतात् वेदो मामयं प्रतरिष्यति ॥इति॥

॥ इति शतदूषण्याम् उपबृंहणवैयर्थ्यवादः अष्टचत्वारिंशः ॥४८॥



प्रसाद—उपर्युक्त प्रकार से भिन्न प्रकार का भी उपबृंहण आप नहीं स्वीकार कर सकते हैं क्योंकि प्रश्न है कि वह उपबृंहण उपबृंहणीय से भिन्नार्थक है, अथवा अभिन्नार्थक है ? यदि अभिन्नार्थक है; तो उसका विषय उपबृंहणीय से अतिरिक्त है; या नहीं ? यदि उसका विषय अतिरिक्त है, तो प्रश्न है कि वह विषय सत्य है; कि मिथ्या ? यदि उपबृंहण का विषय उपबृंहणीय से अभिन्न है, तो प्रश्न है कि उपबृंहण का विषय अन्यूनानतिरिक्त (समान) विषयक है; अथवा न्यूनविषयक ? इन सभी पक्षों में से आप उपबृंहण को न्यूनविषयक ही मान सकते हैं। किन्तु वह भी उपबृंहण नहीं हो सकता है, क्योंकि प्रश्न हैं, कि स्मृति आदि अपने प्रतिपाद्यभूत श्रुति के अर्थांश का उपबृंहण करते हैं या अपने अप्रतिपाद्य श्रुत्यर्थांश का ? प्रथम पक्ष को इसलिए नहीं माना जा सकता है कि स्वोक्तांश का जैसा प्रतिपादन श्रुति करेगी, वैसा ही प्रतिपादन स्मृति भी करेगी। आकार विशेष से उसका प्रतिपादन अनपेक्षित है। दूसरा पक्ष इसलिए अमान्य है कि स्मृति द्वारा प्रतिपादन किया जाने वाला अंश स्मृति आदि का विषय नहीं हैं। यह यदि कहा जाय कि श्रुति-स्मृति की अपेक्षा अधिक विषय का प्रतिपादन करती है, तो वह विषय यदि सत्य है? तो श्रौत ब्रह्म की सविशेषत्वापत्ति होगी। यदि वह मिथ्या है तो फिर श्रुति को अतत्त्वावेदक मानना होगा। किन्तु पौरुषेय वाक्य अतत्त्वावेदक अतत्त्वावेदक नहीं हैं। यहाँ पर अद्वैती विद्वान् यह भी नहीं कह सकते हैं कि उपबृंहण अनावश्यक है, क्योंकि शारीरक मीमांसा के विभिन्न अधिकरणों में स्मृतियों के तत्-तत् वाक्यों के संवाद को महर्षि बादरायण ने उद्धृत किया है। अतएव इस कथन का उन उदाहृत स्थलों से विरोध होगा। उपबृंहण ग्रन्थों का परित्याग करने पर ब्रह्मानुग्राहक तर्कों के भी विनाश का प्रसङ्ग होगा। अनुग्राहक तर्कों का परित्याग करने पर 'आर्षं धर्मोपदेशम्' इत्यादि महर्षि के वाक्यों का, आपकी मान्यता से विरोध होगा। ऐसा मानने पर सिद्धान्ती के मत में भी स्मृत्यनुपपत्ति का प्रसङ्ग नहीं हो सकता है, क्योंकि हम मानते हैं, कि श्रुति प्रतीत ही अनन्त गुण तथा विभूति से विशिष्ट ब्रह्म का, तथा उस ब्रह्म की अनन्तगुण विभूतियों से विशिष्टता—जो श्रुतियों में नहीं प्रतीत होती, उसका प्रतिपादन करके सफल हो जाते हैं। यह भी आप नहीं कह सकते हैं, कि वेदों में अप्रतीत अर्थ वेदार्थ नहीं हैं क्योंकि महान् वेदवृक्ष की अनन्त शाखाओं के किसी कोटर विशेष में वह अर्थ छिपा है, उसको वेद का अल्पभाग श्रवण करने वाले सामान्य लोग नहीं जान सकते है, उसी अर्थ को बतलाने के लिए महर्षियों ने उपबृंहण ग्रन्थों का प्रणयन किया। किञ्च जिन शाखाओं का हम अध्ययन करते हैं उनके भी अनेक अर्थों की प्रतिपत्ति बिना उपबृंहण ग्रन्थों के सहारा के नहीं होती, यह देखा भी जाता है। यदि ऐसी बात नहीं होती तो वेदार्थों के विषय में वैमत्य कैसे होता? यदि कहें कि उपबृंहण वाक्यों के परस्पर विरोधी होने के कारण उनके द्वारा निर्णय नहीं हो सकता है, क्योंकि उपबृंहणीय अर्थों में विरोध तथा अविरोध के कारण ही उपबृंहणों में परस्पर में विरोध तथा अविरोध होते हैं। इसीलिए शारीरक मीमांसा के स्मृत्यधिकरण में कापिलादि स्मृतियों का खण्डन किया गया है। उस अधिकरण का यही अभिप्राय है कि आप्ततम मन्वादि स्मृतियों की सन्निधि में उसके विरोधी कापिलादि स्मृतियों का प्रामाण्य नहीं है, अतएव उन स्मृतियों के द्वारा न तो वेदार्थ का विषयीकरण होता है और न तो उन स्मृतियों द्वारा उपबृंहणीय ब्रह्म का बाध ही होता है। अतएव तामस; राजस तथा संकीर्ण पुराणादि के द्वारा वेदों का उपबृंहण करना पुराण के विवेक का ज्ञान न रहने के कारण उपबृंहकों का अज्ञान मात्र है, अतएव हम उनकी मान्यता का समादार नहीं करते हैं। मत्स्य पुराण में अग्नेः शिवस्य माहात्म्यम्—इस वाक्य से प्रारम्भ कर अन्त में कहा गया है कि—सात्त्विक पुराण में श्री हरि का माहात्म्य अधिक होता है। उन्हीं पुराणों में श्रद्धा रखने वाले परम पद को प्राप्त करेगी। इन सारी बातों को श्रीभाष्य में कहा भी गया है—

जिन लोगों ने अपने योग की महिमा से वेद तथा उसके अर्थों को जानकर उनका साक्षात्कार कर लिया है; उनके वाक्यों द्वारा, अपने ज्ञान वेद वाक्य के अर्थों को समझने का नाम उपबृंहण है। सम्पूर्ण शाखाओं में प्राप्त वाक्य को वेद के अल्पभाग का श्रवण करने के कारण समझना कठिन है, अतएव उस वाक्य के अर्थ का निश्चय उपबृंहण के विना न हो सकने के कारण उपबृहण करना आवश्यक है। अतएव सामान्यतः निर्विशेष रूप से ब्रह्म का उपबृंहण न हो सकने के कारण तथा अनुपबृंहित वेद के द्वारा अर्थ का निश्चय न हो सकने के कारण; निर्विशेषवाद वेद का विनाशक ही है। महर्षियों ने कहा भी है—

इतिहास एवम् पुराणों के माध्यम से वेदार्थ का उपबृंहण करना चाहिए। अल्पश्रुत लोगोंसे वेद भी डरता है कि यह मेरा अनादर करेगा।

इस तरह शतदूषणी का उपबृंहण वैघट्यवाद नामक अड़तालिसवें वादका प्रसाद पूर्ण हुआ।



नापि चतुर्थ इति। अस्तूपबृंहणत्वं यत्किञ्चित्, तथाहमुपबृंहणत्वेनाभिमतमत्यन्तम् उपबृंहणं येन भिन्नार्थं अभिन्नार्थं वा? अभिन्नार्थत्वेपि अतिरिक्तविषयं न वा? अतिरिक्तविषयत्वेपि सत्यविषयं मिथ्याविषयं वा? अतिरिक्तविषयत्वाभावेपि अन्यूनानतिरिक्तविषयं न्यूनविषयं वा? तत्र पक्षान्तरेषूपबृंहणत्वस्य त्वया वक्तुमशक्यत्वाच्चरमः पक्षः परिशिष्टते, तत्राप्युपबृंहणत्वं न सम्भवति तथाहि-किं स्मृत्यादि स्वप्रतिपाद्यं श्रुत्यर्थांशमुपबृंहयति उत स्वाप्रतिपाद्यं श्रुत्यर्थांशम्? नाद्यः स्वोक्तांशो यथा श्रुत्या प्रतिपाद्यते तथैव स्वेनपि प्रतिपाद्यमानो दृश्यते नत्वाकार-विशेषेणेति तस्य स्वनैरपेक्ष्यात्। न द्वितीयः, तदंशस्य स्वाविषयत्वादित्यर्थः। यच्चाधिकमिति उपबृंहणस्य न्यूनविषयत्वम्। श्रुतेस्तदधिकविषयत्वादिति भावः। नच उपबृंहणविषयोंऽशोमिथ्या तद्विषयस्तु सत्य इति, ब्रह्मोपबृंहणत्वस्य तथासत्यनुपपत्तेः। उपबृंहणविषयांशेनैव श्रुतेरतत्त्वावेदकत्वप्रसङ्गाच्च।

इयता ग्रन्थेन पूर्वं परोक्ततयानूदितं निर्विशेषचिन्मात्रोपबृंहकत्वं दूषितम्। यदि कश्चिदुपबृंहणं क्वाप्यनपेक्षितमिति ब्रूयात्तमपि प्रसङ्गान्निराकरोति न च माभूदिति। अन्यथा चेदिति अन्यथोच्यते चेत्, उपबृंहणापेक्षा नास्तीति चेदित्यर्थः। श्रुत्यनुग्राहकतया प्रसिद्धयोस्तर्कोपबृंहणयोरन्यतरस्य त्यागे तर्कोपि त्याज्यः स्यात्। ननु भवतामपि स्मृतिर्न श्रुतिप्रतिपन्नार्थस्योपबृंहणम्, तदंशे भवदुक्तन्यायेन वैयर्थ्यात्, न च श्रुत्यप्रतिपन्नांशे, तद्विषयत्वे श्रुतिमूलत्वाभावेना प्रामाण्यप्रसङ्गात्, तस्माद्भवन्मतेप्युपबृंहणानुपपत्तिस्तुल्येत्याशङ्क्य परिहरति नचैवमिति। [वि] प्रकीर्णेत तथा चाधीयमानश्रुत्यर्थस्य श्रुत्यन्तरप्रतिपाद्यविशेषैस्सह प्रतिपादनमुपबृंहणमिति भावः उपबृंहणप्रणयनेति।

ननु कथमत्र समासः? "उभयप्राप्तौ कर्मणी" ति ह्यत्र षष्ठी; अन्यथा कर्मण्येवेति नियमाभावे "कर्तृकर्मणो" रिति षष्ठीप्रसंगः योगिभिरिति कर्तरि तृतीयानुपपत्तेः, तस्याश्च

षष्ठ्याः 'कर्मणिचे' ति समासानिषिद्ध इति चेत् , उच्यते; शेषषष्ठीयम् ; अतः समासोपपत्तिः। न च तृतीयानुपपत्तिः , 'उभयप्राप्तौ कर्मणी' त्यस्य नैवमर्थः , कर्तरि कर्मणि चोभयस्मिन् कारके विवक्षिते "कर्तृकर्मणो" रिति षष्ठी कर्मण्येव न कर्तरीति, येनायं दोष , स्यात् ; यदि कर्तृ-कर्मोभयविवक्षा तदानम नियमेन कर्तृकर्मणोरिति षष्ठ्या भाव्यम् , तस्याश्च समासो निषिद्धः ; यदि तु न विवक्षा तदा उभयप्राप्ताविति नियमाभावात् "कर्तृकर्मणो" रिति षष्ठीप्राप्त्या तृतीया-नुपपत्तिरिति । किन्तूभयत्र कर्तरि कर्मणि च षष्ठी यत्र प्राप्नोति, प्रसज्यते भवितुमर्हतीति यावत् तत्र कर्ता यदि विवक्षितः तत्र षष्ठी न भवति कर्मणि तु विवक्षिते षष्ठी भवतीति । इदमेव प्राप्ति ग्रहणस्य प्रयोजनम् , अतएव "अन्तर्धौ येनादर्शन" मिति निर्देशः । अत्र तु यद्यपि कर्तृकारकं विवक्षितं कर्मकारकमविवक्षितम् , तथापि कदाचिदुभयविवक्षायां सत्यामुभयत्र षष्ठी भवितुमर्ह-तीति नियमोऽयम् वर्तते तत्र तृतीयोपपद्यते । कर्मकारकन्त्वविवक्षितमिति कृत्वा न तत्रानेन षष्ठी नापि समासनिषेधः । शेषार्थन्तु विवक्षित इति तदाश्रया षष्ठी । तस्याश्च समासो भवति ।

ननु यद्युभययोग्यतामात्रादयं नियमः , नतूभयोपादानमपेक्ष्य तदा 'अथ शब्दानुशा-सन' मित्यत्र "आचार्यस्य कर्तुः प्रयोजनाभावात्तदनुपादानान्नोभयप्राप्तौ कर्मणी त्यनेन षष्ठी" ति कैयटविरोध इति चेन्न,—यत्र कर्तृकर्मणोरुभयोरपि तात्पर्यविषयत्वं तत्रैवोभयप्राप्ति , आचार्यस्य कर्तुः प्रयोजनाभावात्तदनुपादानाच्च तात्पर्यविषयत्वाभावान्नोभयप्राप्तिरित्येव कैयटतात्पर्यात् । अन्यथा " येना दर्शन " मिति प्रयोगानुपपत्तेः । "येनादर्शन" मित्यत्र आत्मन इति व्याख्या तत्वात् तत्र तात्पर्यमवगम्यते । "योगिभिरुपबृंहणप्रणयनोपपत्ते" रित्यत्र कर्तृकर्मोभयसम्बन्ध-स्यापि तात्पर्यविषयत्वादस्त्युभयप्राप्तिः । इयानेवानयोर्विशेषः 'येनादर्शन' मित्यत्र कर्मत्वरूपं तस्य कारकत्वमित्युभयञ्च न शब्दतः प्रतिपाद्यते , प्रकृते तु वस्तुतः कर्मभूतमुपबृंहणस्वरूपम् शब्दत उपादीयते, तस्य कर्मकारकत्वन्तु शब्दतो न प्रतिपाद्यते किन्तु शेषविवक्षायां सम्बन्धमात्रं प्रति-पाद्यत इति । कर्मकारकत्वस्य तात्पर्यविषयत्वं उभयत्रापि विशिष्टमिति ।

यत्तु पदमञ्जर्याम्–" यदा उभयप्राप्ताविति नियमेन कर्तरि तृतीया तदा कर्मणिचेति निषेधात्पाणिनिना सूत्रकृतिः , 'आचार्येण शब्दानुशासन' मित्यसाधु समास" इति ; तदपि यदा कर्मणि षष्ठी तदा न साधुरित्यभिप्रायम् । शेषषष्ठ्यान्तु साधुरेव । तत्रैव प्राप्तिग्रहणाच्च प्राप्तिमात्रे नियम इति कर्मणोऽप्रयोगेपि कर्तरि तृतीया भवति, यथा "अन्तर्द्धौ येनादर्शनमिच्छ" तीति । कर्मापि यदा शेषत्वेन विवक्ष्यते तदा तत्रापि शेष षष्ठी भवत्येव । तस्याश्च 'कर्मणिचे" ति निषेधाभावात् समासो भवतीति चोक्तत्वात् । तस्मान्निरवद्य एवञ्जातीयकः प्रयोगः ।

ननूपबृंहणापेक्षायां श्रुत्या निर्णयो न सिद्ध्येत् ; उपबृंहणानां परस्परविरोधात् , अन्यतरपरित्यागे नियामकाभावादित्याशङ्क्य निराकरोति नचोपबृंहणाना मिति ।

इति श्रीमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायाम् चण्डमारुताख्यायां उपबृंहणवैघट्य नाम अष्टाचत्वारिंशः स्कन्धः ।।४८।।

❀ अथ ऐक्योपदेशान्यथानुपपत्तिभङ्गवादः एकोनपंचाशः ॥४६॥ ❀

त्रिविधचिदचिदन्तर्यामितां प्राप्य तिष्ठन् निखिलनिगमनिष्ठैर्नित्यमैक्योपदेशैः ।
भ्रममलधियां यो वारयत्येकभक्त्या भवतु शरणवाणी तत्पदे शाश्वती नः ॥

प्रसाद—तीनों प्रकार के चेतनों तथा तीनों प्रकार के अचेतनों के अन्तर्यामी रूप से उनके भीतर आत्मा रूप से विद्यमान जो परमात्मा सम्पूर्ण वेदों के ऐक्योपदेश के द्वारा निर्मल बुद्धि वाले भक्तों को स्वनिष्ठत्व भ्रम तथा ब्रह्मात्मैक्यभ्रम से बचाते हैं, उनके ही चरण कमलों को एक मात्र रक्षक रूप से हमारी वाणी मानती रहे ।

त्रिविधेति । अन्यभक्त्या सहितैरैक्योपदेशादिशास्त्रैः शरीरात्मभावनिबन्धनैः शुद्धभावंगतानां स्वनिष्ठत्वभ्रमं स्वरूपैक्यभ्रम च यो वारयति, तस्य जनार्दनस्य, पदे, नः, भगवतः फलप्रदानोत्तरमिवाद्यापि चरितार्थम्मन्यतामापादयन्ती मम शरणवाणी भवत्वित्यर्थः । इह अन्तर्यामिब्राह्मणादि "शुद्धभावं गतः" "ऋणं प्रवृद्धमिवमे" इत्यादीनि विवक्षितानि । त्रिविधेत्यादिना अन्यथोपपत्तिरुक्ता । भ्रमं वारयतीत्यनेनान्यथैवोपपत्तिरुक्ता, तेन वादार्थसंग्रहः ।

यदाहुः-'तत्त्वमसि'; 'क्षेत्रज्ञं चापि मां विद्धि' इत्याद्यैक्योपदेशान्यथानुपपत्त्या परिशुद्धे ब्रह्मण्येवाज्ञानं भेदभ्रमश्चावश्यं कल्पनीयम् । न चात्रैक्यं न प्रतीयते; न चाविवक्षितम्; सामानाधिकरण्यस्य तन्निष्ठत्वात्; विशिष्टैक्यवादिनाऽप्यैक्यमात्रस्याऽऽस्थितत्वाच्च । न चेदमारोपवृत्त्या सामानाधिकरण्यम्; तत्त्वोपदेशप्रकरणविरोधात् । न च सम्बन्धादिद्वारोपचारः; बाधकाभावात् । यद्यप्यस्मन्मतेऽपि लक्षणा, तथाऽपि प्रधानभूतसामानाधिकरण्यप्रतिपाद्यस्य मुख्यस्यैक्यस्यापरित्यागात् तत्संरक्षणाय च स्वरूपोपलक्षणभूतनिमित्तमात्रप्रहाणादिकं न दोषाय भवति । न च भेदाभेदसमुच्चयः, व्याघातात् । अत एव नोभयत्यागः । तात्पर्यविरोधस्योक्तत्वाच्च । अन्यथा शून्यतैव पर्यवस्येत् । न चेयं दृष्टिविधिः, उपासनैकवाक्यत्वाभावात्, तत्सद्भावेऽपि तल्लिङ्गाभावाच्च । अतो जीवपरयोरैक्ये तद्भेदे च प्रतीयमाने द्विचन्द्रदर्शनमूलभूतदोषवत् आत्मभेददर्शनहेतुरविद्याऽभ्युपगन्तव्या । तन्मूलभेदभ्रमोन्मूलनेन सप्रयोजन एवैक्योपदेशः यथैकश्चन्द्र इतीति ॥

प्रसाद—अद्वैती विद्वानों ने जो कहा कि 'तत्त्वमसि' 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादि श्रौत तथा स्मार्त वाक्य ब्रह्म एवम् आत्मा के अभेद का उपदेश करते हैं । इन अभेदोपदेशों की उपपत्ति परिशुद्ध ब्रह्म में ही अभेद भ्रम को स्वीकारे बिना नहीं हो सकती है । ऐसा भी नहीं कहा जा सकता है कि

इन वाक्यों में आत्मा और ब्रह्म की एकता की प्रतीति नहीं होती है। और न तो विवक्षित है, क्योंकि सामानाधिकरण्य वाक्य सामानाधिकरण्येन प्रोक्त वस्तुओं के अभेद का ही प्रतिपादन करते है विशिष्टाद्वैतवादी भी सामानाधिकरण्य वाक्यों को एकार्थ का प्रतिपादक मानते हैं। इन वाक्योंके शब्द की आरोपित वृत्ति के द्वारा सामानाधिकरन्य नहीं स्वीकारा जा सकता है; क्योंकि छन्दोग्योपनिषद् का आत्मविद्याप्रकरण तत्त्वोपदेश का प्रकरण है। आरोपवृत्ति के द्वारा सामानाधिकरण्य मानने पर इस प्रकरण का विरोध होगा। इन वाक्यों में शक्यसम्बन्ध तथा समान गुणकत्व के कारण भी ऐक्योपदेश का उपचार नहीं माना जा सकता है ; क्योंकि मुख्यार्थ की अनुपपत्ति का यहाँ कोई प्रसङ्ग नहीं है। अतएव यहाँ लाक्षणिक प्रयोग भी नहीं माना जा सकता हैं। यद्यपि अद्वैत मत में भी यहाँ लक्षणा स्वीकारी जाती है, फिर भी सामानाधिकरण्य का प्रधान प्रतिपाद्य सामानाधिकरण्येन प्रोक्त वस्तुओं के ऐक्य का परित्याग हम नहीं करते, उस ऐक्य के संरक्षण के लिए, स्वरूप के उपलक्षण भूत निमित्त मात्र के परित्याग में कोई हानि नहीं है। ब्रह्म और जीव में भेदाभेद भी नहीं स्वीकारा जा सकता है, क्योंकि भेद और अभेद दोनों परस्पर में विरोधी हैं। दोनों एक साथ नहीं हो सकते। यदि कहें कि भेद प्रतीति का विषय अभेदाभाव होता है और ऐक्योपदेशका विषय भेदाभाव है इसतरह भेद एवं अभेद दोनों का त्याग कर देना चाहिए, तो यह भी नहीं कहा जा सकता है, क्योंकि दोनों में से किसी एक का त्याग दूसरे के विधान के विना हो नहीं सकता है। किञ्च ऐसा करने पर सामानाधिकरण्य वाक्य के तात्पर्य का भी विरोध होगा। यदि भेद और अभेद दोनों का त्याग भी किया गया, तो फिर शून्यवाद की प्रसक्ति होगी। इन सामानाधिकरण्य वाक्यों में अभेद की दृष्टि का भी विधान नहीं माना जा सकता है; क्योंकि ये वाक्य उपासना के प्रकरण में नहीं पढ़े गये हैं। इन वाक्यो को उपासना परक मानने पर भी भेदाभेद के स्वीकार में कोई प्रमाण नहीं है। अतएव जीव तथा ब्रह्म में इन वाक्यों द्वारा अभेद तथा भेद की प्रतीति होनेका कारण उसी तरह अज्ञान है जिस तरह मूलतः एक चन्द्र के रहने पर भी जो द्विचन्द्रदर्शन हुआ करता है, उसका कारण तिमिरादि दोष हुआ करता है। इस सामानाधिकरण्य वाक्योपदेश का प्रयोजन भेद दर्शनोन्मूलन है, जिस तरह एकचन्द्रोपदेश द्विचन्द्रदर्शन के उन्मूलनार्थ किया जाता है।

यदाहुरिति। ऐक्योपदेशो हि तत्त्वज्ञानाद्द्वारा मोक्षार्थः। नचैतदैक्यस्यापारमार्थ्ये उपपद्यते; अतः श्रुतिसिद्धस्य जीवब्रह्मैक्यस्य परमार्थ्यात् तदनुपपत्त्या भेदज्ञानस्य भ्रमत्वं परिशुद्धेपि ब्रह्मणि भ्रमोपपादकमज्ञान तन्निवृत्तया उपदेशस्य सप्रयोजनत्वञ्च कल्पनीयमित्यर्थः। भेदभ्रमनिवृत्तिरूपमोक्षोपदेशस्य सप्रयोजनत्वं चेत्यपि विवक्षितम्। "अतो जीवपरयो" रित्यादिना तस्याप्युपसंहरिष्यमाणत्वात्। "नपुंसकमनपुंसकेने" त्येकशेषात् कल्पनीय मिति निर्देशः। भेद प्रतीतिवलात् ऐक्योपदेशोऽन्यपर इत्यत्राह नचात्रैक्य मिति। सम्भाव्यमानान्यथासिद्धेः प्रत्यक्षादसम्भाव्यमानदोषगन्धा श्रुतिर्बलीयसीत्यभिप्रायेणाह सामानाधिकरण्यस्येति। ऐक्याविवक्षायामपसिद्धान्तमाह विशिष्टैक्येति। आस्थितत्वादिति। श्रुतितात्पर्यविषयत्वाङ्गीकारादित्यर्थः। "समुद्रः कुण्डिकाविद्धो" "वर्द्धीतक" मित्यादाविवस्तुत्यर्थमारोपोस्त्विति सामानाधिकरण्यस्यान्यथासिद्धिमाशङ्क्य विधिशेषत्वाभावान्नैवमित्याह नचेदमिति। नच सम्बन्धेति। आदिशब्देन मुख्यार्थानुपपत्तिर्विवक्षिता। द्वारशब्दः प्रयोजकपरः। क्वचित्सम्बन्धसादृश्यद्वारेत्येव पाठः। बाधकाभावादिति। मुख्यार्थेनुपपत्त्यभावादित्यर्थः। ननु बाधकाभावात्तत्रापि लक्षणा न स्यात्,

यदि च विशिष्टाभेदबोधानुपपत्तिर्बाधिका ; तर्ह्यस्माकमपि जीवब्रह्मसामानाधिकरण्यानुपपत्त्यैव लक्षणास्त्वित्यत्राह यद्यपीति । तथापीति । वाक्यं हि पदात्प्रधानम् , अतस्तदर्थ एवानुरोध्यः , समानाधिकरणवाक्यस्य च मुख्यविशेष्यैक्यं मुख्यतस्तात्पर्यविषयः-तदभावे त्वमुख्यार्थैक्यमिति सर्वसंमतम् , अतस्तत्त्वमस्यादिवाक्येत्वदभिमतोपचाराङ्गीकारे मुख्यार्थैक्यापरित्यागो दोषः, अस्मन्मते तु मुख्यैक्यापरित्यागान्न लक्षणा दोषः । किञ्च निमित्तप्रहाणेन स्वरूपलक्षणा मुख्यैक्यसिद्ध्यर्थमेवाङ्गीक्रियते, त्वत्र तु न तदर्थम् , अतोपि स्वरूपलक्षणा न दोषः; प्रत्युत मुख्यैक्यार्थत्वात् अनुकूलैवेत्यर्थः । भेदाभेदाङ्गीकारात् न भेदज्ञानस्य भ्रमत्वं कल्प्यमिति कस्यचिच्चोद्यम् निरस्यति न च भेदेति । भेदप्रतीतेरभेदाभावो विषयः, ऐक्योपदेशस्य च भेदाभावो विषयः , अतो भेदाभेदोभयत्यागे न दोष इत्यत्राह अतएवेति । अन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वेन व्याघातादित्यर्थः । एवं भेदाभेदयोः परस्पराभावात्मकत्वपक्षे दोष उक्तः । यदि भेदाभेदयोः भावाभावात्मकत्वाभावः; तदा दूषणमाह तात्पर्येति । भेदाभावापेक्षया लाघवादैक्य एव तात्पर्यमिति भावः । उक्तत्वादिति । "तथापि प्रधानभूते" त्यादिवाक्य इत्यर्थः । उभयत्यागे दोषान्तरमाह अन्यथेति । तत्सद्भाव इति । क्वचिदुपासनैकवाक्यत्वेपि ऐहिकामुष्मिकफलादिरूपलिङ्गाभावादित्यर्थः । तद्भेद इत्यतः पूर्वं सिद्धे इति शेषः । जीवपरयोरैक्ये तत्स्वत इति क्वचित्पाठः । सप्रयोजन एवैक्योपदेश इति । एवकारो भिन्नक्रमः । भेदभ्रमोन्मूलनेनैव सप्रयोजन इत्यन्वयः । क्वचित्सप्रयोजनतयैक्योपदेश इति पाठः । तदानीमभ्युपगन्तव्य इत्यनुषङ्गः ॥

अत्र ब्रूमः—यदि ऐक्योपदेशोऽन्यथानुपपन्नः स्यात , तदैव परिशुद्धे ब्रह्मण्यज्ञानभेदभ्रमादयः कल्प्येरन् । स त्वन्यथाऽप्युपपन्नः ; अन्यथैवोपपन्नश्च । तथाहि—शरीरात्मभावनिबन्धनं सामानाधिकरण्यं व्युत्पादितमन्यत्र । न चात्र द्वयोः स्वरूपैक्यं विवक्षितुं शक्यम् । विरुद्धयोस्तदसम्भवात् । अन्यथा यूपादित्यैक्यवाक्येऽपि भेदभ्रमहेतुदोषकल्पनप्रसङ्गात् । विरोधादेश्च समानत्वात् । न च लाक्षणिकसामानाधिकरण्येऽप्यैक्यम् परित्यक्तम् ; ययाकयाचिद्वृत्त्या एकस्मिन्नेव वृत्तेरङ्गीकृतत्वात् । अतः सामानाधिकरण्यस्य सम्भवति गत्यन्तरे परिशुद्धब्रह्मणि तन्मूलविरुद्धाज्ञानादिपरिकल्पनं निर्मूलम् । अज्ञानमूलभेदभ्रमवादे च उपदेश एव नोपपद्यत इति स्थितमन्यत्र ( ३४ वा ) । न चानुपपन्नत्वस्योपपादकतया स्वयमनुपपन्नान्तरं कल्प्यम् । न चाविद्यादेः स्वरूपमुपपत्तिमदिति दर्शितम् ( ४१ वा ) । यदि च दूरं गत्वा दुर्घटत्वमेव भूषणमिति वल्गसि, तर्हि कूपोपदेशमेवादौ दुर्घटमभिमन्येथाः ॥ अप्रामाण्यं तर्हि तस्य स्यादिति चेत् [न ; ?] अस्मन्मतप्रतिपादितप्रकारेण प्रामाण्यस्य सिद्धत्वात । यदि वा मा भूत प्रामाण्यम् । यत् अज्ञानादिपरिकल्पनेऽप्यन्ततः फलति, तच्चेदादौ तदप्रामाण्यं सिध्यति, किं दूरं धावसि

प्रसाद—उपर्युक्त पूर्वपक्ष का उत्तर यह है कि-अद्वैती विद्वानों ने यह जो कहा है कि परिशुद्ध ब्रह्म में अज्ञान जन्य भेदभ्रम को स्वीकारे बिना 'तत्त्वमसि' 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादि सामानाधिकरण्य वाक्योंपदिष्ट ब्रह्मात्मैक्योपदेश उपपन्न नहीं हो सकता है, तो वह उचित नहीं है, क्योंकि ऐक्योपदेश ब्रह्म में अज्ञानादिजन्य भ्रमादि को स्वीकारे बिना भी उपपन्न है। वस्तुतः ब्रह्म में भ्रम के बिना हीं वह ऐक्योपदेश सिद्ध होता है। हमने पीछे यह प्रतिपादित किया है, कि तत्त्वमस्यादि' वाक्यों में ऐक्योपदेश जीव और ब्रह्म में शरीरात्मभाव निबन्धन कृत है। इन वाक्यों में दोनों के स्वरूप की एकता नहीं विवक्षित है। परस्पर विरुद्ध जीवात्मा और ब्रह्म में स्वरूप की एकता असम्भव है। यदि ऐसी बात नहीं हो तो फिर 'आदित्योयूपः' इत्यादि वाक्यों में भी प्रतीयमान यूप और आदित्य में भेद का भी कारण भ्रम को मानना होगा। जिस तरह 'आदित्यो यूपः' में भेद भ्रम की कल्पना का प्रत्यक्षादि से विरोध हैं, उसी तरह प्रतीयमान जीव और ब्रह्म के भेद भ्रम की भी कल्पना में प्रत्यक्षादि का विरोध है। लाक्षणिक सामानाधिकरण्य स्थल ( आदियोयूपः' ) इत्यादि में भी अर्थैक्य का परित्याग नहीं किया जाता, उन स्थलों में भी शब्द की किसी न किसी वृत्ति से भिन्न प्रवृत्ति निमित्तक शब्दों की एकार्थ में वृत्ति अवश्य स्वीकारी जाती है। अतएव सामानाधिकरण्य वाक्य के अनुकूल निर्वाहान्तर के रहते परिशुद्ध ब्रह्म में सामानाधिकरण्यमूलक अज्ञानादि की कल्पना करना निमूंल है। किञ्च मैंने अन्यत्र प्रतिपादित किया है, कि अज्ञान मूलक ब्रह्म में भेद का भ्रम होता है, यह मानने वाले अद्वैती विद्वानों के मत में उपदेश ही अनुपपन्न हैं। अनुपपन्न उपदेश के उपपादक रूप से स्वभावतः अनुपपन्न (असिद्ध) ब्रह्म में अविद्या आदि की कल्पना करना उचित नहीं है। अद्वैताभिमत अविद्या के स्वरूप की उपपत्ति नहीं हो सकती, इस बात की चर्चा हम पीछे कर चुके हैं। यदि आप बहुत दूर जाकर कहें कि दुर्घटत्व अविद्या का भूषण ही हैं; दूषण नहीं, तो मैं कहता हूं कि आप ऐक्योपदेश को दुर्घट मानकर उसे अपने सिद्धान्त का भूषण मान लें। यदि कहें कि भेद मिथ्यात्व की कल्पना किए बिना ऐक्योपदेश अप्रामाणिक हो जायेगा, तो मैं कहता हूं कि जिस तरह मैं कह रहा हूँ उस तरह से ऐक्योपदेश की प्रामाणिकता सिद्ध हो ही जायेगी, किञ्च ऐक्योपदेश अप्रामाणिक हीं रहे तो भी आप को कोई आपत्ति नहीं होनी चाहिए। अज्ञानादि की परिकल्पना के बाद में भी जो उपदेश अन्ततः अप्रामाणिक ही सिद्ध होता है, उसको पहले ही अप्रामाणिक मान लेने में कौन सी आपत्ति हैं? अतएव इस दूरानुधावन से क्या लाभ है?

यदीति। आदिशब्देन भ्रमोन्मूलनं विवक्षितम्, अन्यथापीत्यभ्युपगम्यवादः। तावतात्पर्यार्थापत्तिनिरासात्। तत्त्वार्थमाह अन्यथैवोपपन्न इति। वस्तुतस्त्विति शेषः। तथाहीति। शरीरात्मभावनिबन्धनं सामानाधिकरण्यमित्यन्यत्रोपपादितत्वात् तथा निर्वाहे सम्भवति अत्यन्तविरुद्धार्थयोरैक्यं न विवक्षितुं योग्यमिति ऐक्योपदेशः शरीरात्मभावेनोपपाद्यः, न तु परिशुद्धे ब्रह्मणि भ्रमादिकल्पनेन। अन्यथेति। अविरुद्धगतिसद्भावेपि विरुद्ध कल्पने। एवं शरीरात्मभावेनान्यथासिद्धिरुक्ता, इदानीम् पूर्वपक्षिणा दूषितमुपचारपक्षमुद्धरति न च लाक्षणिकेति। भागत्यागलक्षणया गौण्या वा वृत्त्या एकस्मिन्नेव वृत्त्यङ्गीकारात् समानाधिकरणवाक्यप्रधानार्थस्यैक्यस्यापरित्यागादुपचारो न दोषायेत्यर्थः। ननु भागत्यागलक्षणायां स्वारसिकं मुख्यविशेष्यैक्यपरत्वम् न सिद्ध्यतीत्युक्तमित्यत आह अत इति। अविरुद्धगत्यन्तरे सति विरुद्धं मुख्यविशेष्यैक्यमपि त्याज्यमेव अन्यथा निमित्तमपि न त्यज्येत यूपादित्यवाक्येपि भ्रमहेतु दोषश्च कल्प्येतेत्यर्थः। तन्मू-

लेति । सामानाधिकरण्यमूलमज्ञानादिपरिकल्पनमित्यर्थः । न केवलमविरुद्धगत्यन्तरसद्भावात् भेदभ्रमकल्पनस्योपपादकत्वाभावमात्रम् , प्रत्युत प्रतिकूलत्वञ्चेत्याह अज्ञानमूलेति । अविद्यास्व रूपस्यैवानुपपन्नत्वात् तेनैक्योपदेशोपपादनमितिदूषणान्तरमाह नचानुपपन्नस्येति । स्वयं स्वेनरूपेणेत्यर्थः । स्वयमनुपपन्नेत्यत्र "स्वयं क्तेने" ति तृतीयासमासः । दर्शितमिति । स्वरूपानुपपत्ति निवृत्त्यनुपपत्तिबाह्यप्रकाशानुपपत्तिष्वित्यर्थः । ऐक्योपदेशमिति । अविद्यायामिव उपपादकाभावेन दुर्घटत्वं उपदेशस्य भूषणमेवास्त्वित्यर्थः । ननु भेदस्य मिथ्यात्यादेरकल्पने ऐक्योपदेशाप्रामाण्यम् स्यादिति शङ्कते अप्रामाण्यमिति । अस्मन्मतेति । यदि प्रामाण्यार्थमुपपादकापेक्षा , तर्ह्यस्म दभिमतेन सुघटेन शरीरात्मभावेनैवोपपाद्यताम् , किं दुर्घटाविद्यादिनेत्यर्थः । यदि वेति । यद्वे त्यर्थः । यदिति । भेदप्रतीतिमिथ्यात्वादिकल्पने उपदेशप्रामाण्यरूपभेदस्यापि मिथ्यात्वेन प्रामा ण्याभावलक्षणमप्रामाण्यं फलतीत्यर्थः । तदप्रामाण्यमिति । तस्य उपदेशस्य अप्रामाण्यम् । त्वद भिलक्षितस्याप्रामाण्यस्य सिद्धौ 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजे' दिति न्यायात् दूरधावनमनुचितमित्यर्थः ।

किञ्च भेदोपदेशान्यथानुपपत्त्या परमार्थभिन्नेऽप्यात्मन्यैक्यभ्रममूलमज्ञानं किं न कल्प्यते ? ऐक्यश्रुतीनामतत्त्वावेदकत्वप्रसङ्गभयादिति चेत् , तर्हि भेदश्रुतीनां तत्प्रसङ्गभयात् भेदभ्रममूलाज्ञानमपि न कल्पय । न चैका श्रुतिरितरस्या दासी, येन तदर्थं तामुपद्रवेम । प्रत्यक्षादिसंवादाच्च भेदश्रुतेरेव बलीयस्त्वम् । न च भेदस्वरूपं दुर्निरूपमिति तदप्रामाण्यस्वीकारः ; अभेदस्वरूपस्यापि तथाविधयुक्तिभिर्दुर्निरूपतया तत्प्रतिपादकानां तत्स्वीकारप्रसङ्गात् । किञ्च त्वदुक्तयैवानुपपत्त्या नास्त्येव भेदप्रतीतिरिति किं न कल्प्यते ? प्रत्यक्षादिविरोधादिति चेत्–तर्हि निरवद्यभेदश्रुतिविरोधे दृष्टिं पातय ॥ भ्रान्तिसिद्धे भेदेऽप्यैक्योपदेशो द्विचन्द्रादिष्विव घटत इति चेत्–अज्ञानादिरहितेऽपि ब्रह्मणि भ्रान्तिसिद्धैक्येन तदुपदेशोऽपि संभवत्येव ॥ भिन्ने ब्रह्मण्यभिन्नत्वभ्रमः किमर्थमुत्पाद्यत इति चेत् , अभिन्ने ब्रह्मणि भिन्नत्वभ्रमः किमर्थमुत्पाद्यते ? अथो ( तथो ? ) पासनेन फलविशेषार्थमिति चेत्–तुल्यम् ॥ उपासनविध्येकवाक्यत्वं दृष्टिलिङ्गं वाऽत्र न दृश्यत इति चेत् , तुल्यम् / दूरानुकर्षात् तत्र दृश्यत इति चेत्—किमत्रापि ? अपिच ब्रह्मणः शुद्धत्वान्यथानुपपत्त्यैव तस्य जीवैक्योपदेशो नास्त्येवेति वा , तदन्यपर इति वा , तत्परोऽपि भ्रान्तिमूल इति वा कल्पयितुं युक्तम् । न चाशुद्धिमिथ्यात्वेनाविरोधः, उपदेश मिथ्यात्वेन तदुपपादकाभावेऽप्यविरोधप्रसङ्गात् । यश्चासौ , 'क्षेत्रज्ञं चापि मां विद्धि' इति तत्त्व

परिज्ञानसापेक्षस्तदुपदेशः , तेनैव च तदज्ञानं कल्प्यत इति चित्रम् । तदेतत् श्रीमद्-गीताभाष्येऽपि स्पष्टमाह । तथा भाष्येऽप्यदर्शयत् , " नाप्यैक्योपदेशान्यथानुपपत्त्या " इत्यादिना ॥

॥ इति शतदूषण्याम् ऐक्योपदेशान्यथानुपपत्तिभङ्गवादः एकोनपञ्चाशः ॥४९॥



प्रसाद—किञ्च प्रश्न है कि आप भेदोपदेश की अन्यथानुपपत्ति के कारण यह क्यों नहीं मानते है कि वस्तुत: आत्मा और ब्रह्म में भेद ही परमार्थ है । उसकी ऐक्यप्रतीति अज्ञान जन्य भ्रम मूलक है । यदि कहें कि ऐसा मानने पर ऐक्योपदेश करने वाली श्रुतियों के अतत्त्वावेदकत्व का प्रसङ्ग होगा , तो इसका उत्तर है कि तो फिर आपको भेद श्रुतियों के अतत्त्वावेदकत्व के भय से भेद को भी अज्ञान जन्य भेद भ्रम मूलक नहीं मानना चाहिए । अभेद श्रुति भेद श्रुति की दासी तो है नहीं कि उसे आप इतना सता रहे हैं । किञ्च भेद का प्रत्यक्षादि प्रमाण से संवाद (एकवाक्यता) होने के कारण भेद श्रुति ही बलीयसी सिद्ध होती है । यह भी नहीं कहा जा सकता है कि भेद के स्वरूप का निरूपण नहीं किया जा सकता हैं, अतएव भेद श्रुतियाँ अप्रामाणिक हैं, क्योंकि अभेद के भी स्वरूप का अद्वैत प्रोक्त युक्तियों से निरूपण नहीं किया जा सकता है , अतएव अभेद प्रतिपादक श्रुतियों का भी प्रामाण्य नहीं स्वीकारने का प्रसङ्ग होगा । किञ्च आप के द्वारा प्रोक्त अनुपपत्ति के द्वारा आप यह कल्पना क्यों नहीं करते हैं कि भेद की प्रतीति ही नहीं होती है, यदि कहें कि इस कल्पना का प्रत्यक्षादि से विरोध होगा तो मैं कहता हूँ, कि तो फिर निर्दोष भेद प्रतिपादक श्रुतियों का भी उनके अप्रामाण्य कल्पना से विरोध होगा । यदि कहें कि भेद के भ्रान्ति सिद्ध रहने पर भी ऐक्योपदेश उसी तरह उपपन्न होता है ; जैसे भ्रान्ति सिद्ध द्विचन्द्र प्रतीति होने पर भी चन्द्रैकत्वोपदेश उपपन्न होता है, तो इसका उत्तर है कि अज्ञानादि से रहित भी ब्रह्म में उसके भ्रान्तिसिद्ध ऐक्य के कारण ब्रह्मात्मैक्योपदेश उपपन्न ही हो जाता है । यदि कहें कि ब्रह्म के जीव से भिन्न रहने पर श्रुति उसके अभिन्नत्व का भ्रम क्यों पैदा करती है ? तो मैं पूछता हूँ कि ब्रह्म के जीव से अभिन्न होने पर भी भेद श्रुतियाँ उसकी भिन्नता का भ्रम क्यों पैदा करती हैं ? यदि कहें कि उपासना द्वारा फलविशेष की प्राप्ति के लिए ऐसा श्रुति करती हैं, तो अभेद श्रुति के भी विषय में यही उत्तर दिया जा सकता है । यदि कहें कि अभेदोपदेश की उपासना का विधान करने वाले वाक्यों से एकवाक्यता तथा एकत्वदृष्टि नहीं दिखायी पड़ती, तो यही बात भेदोपदेश के भी विषय में है । यदि कहें कि दूर तक विचार करने पर भेदोपदेश की उपासना विधि वाक्यों से एकवाक्यता भी हो जाती है तथा भेददृष्टि के समर्थक प्रमाण भी मिल जाते हैं, तो दूरानुधावन करने पर अभेदोपदेश की भी उपासनाविधि से एक वाक्यता तथा एकत्व दृष्टि के समर्थक वाक्य मिल जाते हैं । किञ्च ब्रह्म की शुद्धता को ही दृष्टिपथ में रखते हुए यह आपको मान लेना चाहिए कि ब्रह्म से जीव का अभेदोपदेश श्रुतियाँ नहीं करती हैं; यदि ऐसा उपदेश उनका है तो भी उस उपदेश का अभिप्राय दूसरा है, अथवा जीव ब्रह्मोपदेश भ्रान्ति-मूलक है । ब्रह्म की अशुद्धि को मिथ्या मानने मात्र से उसका शुद्ध ब्रह्म से विरोधाभाव नहीं है , ऐसा भी कहना उचित नहीं हैं, क्योंकि ऐक्योपदेश के मिथ्या होने के कारण उस मिथ्यात्व के उत्पादक अविद्या

को नहीं स्वीकारने पर शुद्धब्रह्म से विरोध के अभाव का प्रसङ्ग होगा । अद्वैती विद्वानों ने यह जो कहा है कि 'मुझे ही क्षेत्रज्ञ भी जानो' इस वाक्यके तत्त्वज्ञान के परिज्ञान की अपेक्षा रखता है ऐक्योपदेश । इसलिए ब्रह्म में अज्ञान की कल्पना करनी पड़ती है, यह कहना अत्यन्त आश्चर्य जनक है, इसी बात को गीता भाष्य में स्पष्ट रूप से कहा गया है तथा अन्यथाऽनुपपत्ति के कारण ऐक्योपदेश नहीं उपपन्न हो सकता। इत्यादि वाक्यों द्वारा श्रीभाष्य में भी इस बातको कहा गया है ।

इस तरह शतदूषणी के उनचासवां ऐक्योपदेशान्यथानुपपत्तिभङ्ग वाद का प्रसाद समाप्त हुआ ।



किञ्चेति । नच भेदज्ञानवदैक्यज्ञानस्य लोके अप्रसिद्धत्वात् कस्यमूलमज्ञानं कल्प्यत इति वाच्यम्, तव श्रुत्यैकज्ञान्याया अपि सार्वज्ञ्यादिभेदप्रतीतेः भ्रमत्वेनाज्ञानमूलत्ववच्छ्रुतिजन्यस्यैवैक्यज्ञानस्य भ्रमतया तन्मूलाज्ञानस्य कल्प्यत्वादिति भावः । ननु भेदश्रुतिनिषेध्यार्थकतयाऽभेदश्रुतितो दुर्बलेत्यत्राह न चैकेति । श्रुत्यैकगम्यस्य सार्वज्ञ्यादिभेदस्य च निषेधार्थमनुवादासम्भवात् प्रत्यक्षादिसिद्धभेदस्य च निषेधासम्भवाच्च भेदश्रुतिनिषेधार्थानुवाद इति भावः । बलीयस्त्वमिति । तत्त्वावेदकत्वाध्यवसाय इत्यर्थः । किञ्चेति । ऐक्योपदेशानुपपत्त्या भेदप्रतीतिस्वरूपमेव नास्तीत्युच्यताम्, कृतं तस्य भ्रमत्वकल्पनेनेत्यर्थः । तर्हीति । यदि प्रत्यक्षादिविरोधाञ्च भेदप्रतीत्यपह्नवः शक्यः, तर्हि निर्दोषभेदश्रुतिविरोधात् तद्भ्रमत्वकल्पनमप्ययुक्तमित्यर्थः । भेदप्रतीतेः प्रामाण्यत्यागमात्रादैक्योपदेशसम्भवान्न धर्मिस्वरूपनिह्नव इति शङ्कते भ्रान्तिसिद्धि इति । अज्ञानादिति । ऐक्योपदेशस्य भेदज्ञानप्रामाण्यत्यागेनैव स्वप्रामाण्यत्यागेनापि सम्भवान्नाज्ञानादि कल्पना, गौरवादित्यर्थः । प्रदेशान्तरे उपासनविधेः सत्त्वात्तदेकवाक्यतया दृष्टिविधिरुपपद्यत इति शङ्कते दूरेति । अत्रापि तथा किं न स्यादित्याह न किमिति । अविरोध इति । शुद्धत्वस्येति शेषः । उपदेशेति । ऐक्योपदेशेत्यर्थः । उपपादकत्वेन कल्पिताविद्यादिषु दौर्घट्योक्तेरपि आदौ दौर्घट्यपरिहारस्य सुवचत्वादिति भावः । श्रौतैक्योपदेशान्यथानुपपत्तिं दूषयित्वा स्मार्तोपदेशानुपपत्तिं दूषयति यश्चासाविति ।

इति श्रीमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायाम् चण्डमारुताख्यायां ऐक्योपदेशान्यथानुपपत्तिभङ्गो नाम एकोनपञ्चाशः स्कन्धः ॥४९॥



॥ अथ परमते शास्त्राधिकारिभङ्गवादः पञ्चमः ॥

हताशेषक्लेशा निरवधिमहानन्दधमिनो वयं भूयास्मेति स्थिरमनघवर्त्मन्यधिकृताः ।
अनाघ्रातद्वन्द्वा हयमुखपदद्वन्द्वरुचयः स्वदन्तां मे सन्तः श्रुतिजलधिमुद्दिन्धयधियः ॥

प्रसाद—निश्चित एवं निर्दोष मार्ग पर सदा चलने वाले सभी प्रकार के संशयों से रहित तथा हयग्रीव भगवान् के चरण कमलों की सेवा में रुचि रखने वाले, श्रुति सागर के विषय में परिमित ज्ञान वाले हम लोग, सभी प्रकार के ( तापत्रय आदि ) दुखों से रहित हो जायँ ; सीमातीत आनन्द को हम प्राप्त कर लें ; तथा भगवत् परिचर्या रूपी भोगों की हमें प्राप्ति हो जाय ।

अत्र वयं भूयास्मेत्यधिकृता इत्यनेन एतादृशीच्छाधिकार इति लभ्यते, तेनाहमर्थविनाशपक्षे तदसम्भवः सूच्यते । तेन वादार्थसंग्रहः ।

साधनचतुष्टयं पूर्ववृत्तमिति वदद्भिर्मुमुक्षुत्वं तावत् अधिकारिविशेषणमित्यङ्गीकृतम् । सा च मुमुक्षा मोक्षो मे स्यादित्येवमाकारा । तथाविधा सा कस्याधिकारिणो विशेषणमिति कथयन्तु कलिब्रह्ममीमांसकाः , ( १) किं नित्यमुक्तस्वभावस्य संविदात्मनः (२) उत तस्यैवाविद्यासाक्षितामापन्नस्य , ( ३ ) उतान्तःकरणप्रतिफलितचिदाभासस्य ; (४) तद्वृत्तिसंभेदा (समा) रोपितक्रियात्वस्य वा चैतन्यस्य , (५) अन्तःकरणस्यैव वा , (६) अथ यस्यकस्यचिदनभिलप्यस्य, (७) न वा कस्यचित् इति ।

प्रसाद—अद्वैती विद्वानों ने ब्रह्मजिज्ञासा का पूर्ववृत्त मुमुक्षुत्व को बतलाया है । वह मुमुक्षा अधिकारी का विशेषण है उस मुमुक्षा का स्वरूप है कि 'मैं मुक्त हो जाऊँ ।' यहाँ पर अद्वैती विद्वानों से प्रष्टव्य हैं कि वह मुमुक्षा किस अधिकारी का विशेषण है ? ( १ ) क्या वह नित्यमुक्त स्वभाव वाले संविदात्मा का विशेषण है ? (२) अथवा वह अविद्या के साक्षीभूत चैतन्य का विशेषण है ? (३) अथवा वह अन्तःकरण में प्रतिबिंबित होने वाले चैतन्याभास का विशेषण है ? ( ४) अथवा जिसके क्रियात्व का आरोप अन्तःकरण की वृत्ति में हो गया है ; उस चैतन्य का विशेषण है ( ५ ) या अन्तःकरण का ही विशेषण है (६) अथवा किसी ऐसी किसी वस्तु का विशेषण है जिसको बतलाया नहीं जा सकता है ( ७) या किसी का भी विशेषण नहीं है ?

कथयन्त्विति । "चापलेद्वे भवत इति वक्तव्य" मिति [ चापले च ] द्विर्वचनम् । त्वरा-चापलम् ।

न प्रथमः , विरोधात् ; तस्य नित्यमुक्तत्वादेव मोक्षेच्छाविरहात , अन्यथा नित्यमपि तत्प्रसङ्गात ॥ मुक्तमप्यात्मानं बद्धमिवाभिमत्य मुमुक्षतीति चेन्न , तस्य तथाविधाभिमानेऽप्यनधिकारात् । तत्सद्भावे वा नित्यमुक्तत्वव्याघातात् । भ्रान्त्या वस्तु-

त्जीवानां ब्रह्मसाक्षात्कारेण तत्तत्संसारस्य तदज्ञानन्तःकरणादिर्निरन्वयविनाशे ईश्वरस्यास्मदादेर्वा तज्ज्ञानाभावप्रसङ्गः । किञ्च मुक्तसंविदः संसारिसंविद्भिरीश्वरसंविदा चाभिन्नतया सर्वविषयत्वमवर्जनीयम् । तस्या निर्विषयत्वे "यस्मिंस्तु संसारिणि दुःखमस्ति तदपि तन्निष्ठत्वेन म्रक्षीभूतो मुक्तोऽवगच्छती" ति स्ववचनविरोधाच्च ॥

यत्तु मोक्षे दुःखादितादात्म्याभावादेव तदस्फुरणं न तु स्फुरणविरहादिति । तन्न, तादात्म्यं ह्यभिन्नसत्ताकत्वम् ; तच्च दुःखदशायामिव मुक्तदशायामप्यस्त्येव । किञ्च वृत्तेस्तदाकारत्वम् तन्निरुपणाधीननिरुपणार्हत्वमित्युक्तम् , ततश्चेदं ज्ञानं एव तद्विषयात्मकमस्तु , अत एवेश्वरादिज्ञानानामतीतादिविषयत्वं चोपपद्यते ।

तद्विषयत्व इति । आदिपदेननिर्विषयत्वाभावो गृह्यते । मुक्तसंविदस्सविषयत्वे सत्यत्यतीतविषयकत्वेन तदानीं विषयाभावादेव निर्विषयत्वव्यपदेशोऽपि घटत इति भावः । आद्य इति प्रकाशस्य नित्यतया तत्प्रकाशाभाववचनस्य तद्विषयत्वाभावपर्यवसानादिति भावः । द्वितीय इति । मोक्षदशायामपि विद्यमानस्य ध्वंसस्याविघकत्वाभावेन सत्यत्वात्तद्विरोधिनो निवर्त्यस्य समानसत्ताकयोरेव विरोधात् सत्यत्वं निवृत्त्या सद्वितीयत्वं च प्रसज्यत इत्यर्थः । आदिपदेन निवृत्तो ब्रह्मस्वरुपत्वे तस्यासाध्यत्वेन श्रवणादिवैयर्थ्यम् । भिन्नसत्ताकत्वेन ब्रह्मस्वरुपेणाविरोधित्वात् पूर्वमिवोत्तरकालमपि संसारप्रसङ्ग इत्यादिकं ग्राह्यम् । नष्टस्यापि विषयत्वाविरोधादित्यत्र पुनश्चते निवृत्ता नेति । अनिवृत्ततयाभेददर्शनमेव संसारः अतो न संसारप्रसङ्गः , निवृत्ततया विषयीकरणमेव निर्विषयत्वमिति भावः । स्वरुपपक्ष इति । ततश्च संसारदशायामपि संसारभावनिर्विषयत्वयोः प्रसङ्ग इति भावः । सद्वितीयत्वादीति । आदिपदेन नित्यत्वम् गृह्यते । मिथ्यात्वेत्विति ! अविद्याविषयीकरणयोर्निवृत्तत्वेनाविषयीकरणादिति भावः । तस्य विषयीकरणस्य । तस्याः-अविद्यायाः । आदिपदेनाविद्यायास्सत्यत्वे तन्मूलकप्रपञ्चस्यापि सत्यत्वं ज्ञाननिवर्त्यत्वमित्यादि विवक्षितम् । तुल्यन्यायादिति । मिथ्यात्वेऽप्य विद्याविषयीकरणयोर्ज्ञानेनाबाधे तुल्यन्यायात । प्रपञ्चबाधकवादोऽपि निरुन्ध्येतेत्यर्थः । आदिपदेनशुक्त्यादिज्ञानाद्रजतादिबाधो विवक्षितः ।

ननु भवतामात्मस्वरूपस्य संविद्रूपत्वेऽपि यथा निर्विषयत्वम् , तथाऽस्माकमपि स्यात् ॥ न स्यात् , अस्माकमात्मस्वरूपस्य प्रतीचः कदाचिदपि बाह्यार्थगोचरत्वानभ्युपगमात् । भवतस्तु तद्विषयाया एव तद्विषयत्वनिवृत्तेर्दुर्वचत्वात् ॥ अस्तु तर्हि भवतां धर्मभूतज्ञानवत् कदाचित् सविषयत्वम् , कदाचिच्च निर्विषयत्वमिति चेन्न , अस्माभिः परमार्थाकारान्तरापत्त्यभ्युपगमात् , भवतां तु तदनभ्युपगमात् तदयोगात् । अतो नित्यसंवित्स्वरूपप्रकाशमात्राधीनसिद्धीनां सर्वेषामपि पदार्थानां नित्यत्वमपि प्रसज्येत । तदधीनसिद्धित्वाभावे तु सिद्धिनिषेधे तुच्छत्वम् । तादधीन्यनिषेधे तु सत्यत्वम् । अतस्तन्मात्राधीनसि-

द्वयभ्युपगमे तद्वदेव तदधीनस्यापि नित्यत्वमवर्जनीयमेव । तथा च सति सर्वप्रपञ्चः सत्य इति जितं यथार्थवादिभिः । तद्भयात् संविन्नित्यत्वपरित्यागे साक्षात्सौगतत्वादिप्रसङ्गः । अतएव ; "स्वापमदमूर्च्छादिषु निर्विषया संवित्" इत्यपि भवद्भिर्दुर्वचमेव, निर्विषयनिराश्रयसम्वित्प्रकाशस्तदानीमनुभूतः (भूयत) इति ; कस्यचिदपि सावधानस्यापि समस्तसंस्कारतिरस्कारकदेहविगमादिक्लेशाभावेऽपि न परामर्शोऽस्ति । किन्तु अहमपि न विनष्टः ; विषया अपि स्थिताः, प्रकाश एव सुषुप्त्यादौ निवृत्त इति सर्वे प्रत्यवमृशन्ति । 'नाहं खलु' इत्यादिश्रुतिरपि ज्ञाननिषेधपरैव, न जानामीत्यत्रैव तात्पर्यात् । अस्माभिस्तु विषयप्रकाशलक्षणावस्थाविशेषरहितज्ञानद्रव्यमात्रसत्ता; 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्यादिश्रुतिबलादभ्युपेयते । न चास्ति तत्र प्रत्यक्षविरोधः, विषयप्रकाशव्यतिरिक्तदशायां तस्याः स्वप्रकाशायोग्यत्वात् । ज्ञानान्तरस्य तु तदानीं सामग्र्यभावादेवानुदयात् तावताऽपि तदातनज्ञाननिषेधश्रुतेश्चरितार्थत्वात् ।

प्रमाद—यदि कहें कि जिस तरह सिद्धान्ती भी आत्मा को ज्ञान स्वरूप होने पर भी निर्विषय मानते हैं, उसी तरह हम भी आत्मा को निर्विषय मानते हैं, तो अद्वैती विद्वान् यह भी नहीं कह सकते हैं, क्योंकि हम प्रत्येक आत्मा के स्वरूप को बाह्य वस्तुओं का विषय नहीं मानते हैं। आपकी संविदात्मा तो बाह्य वस्तुओं का विषय है, अतएव उसके बाह्यवस्तु विषयत्व की निवृत्ति का प्रतिपादन आप नहीं कर सकते हैं। यदि कहें कि जिस तरह सिद्धान्ती को अभिमत धर्मभूतज्ञान कभी सविषय तथा कभी निर्विषय होता है, उसी तरह हमारे अभिमत संवित् का कादाचित्क निर्विषयत्व हैं, तो ऐसा भी नहीं कह सकते, क्योंकि हम धर्मभूतज्ञान का परमार्थतः विषयीकरण स्वीकारते हैं, किन्तु आप तो ऐसा मानते नहीं हैं। अतएव आपके संवित् के निर्विषयत्व की सिद्धि नहीं हो सकती है। अतएव नित्य संवित् के स्वरूप के प्रकाशमात्र के द्वारा प्रकाशित होने वाली सभी वस्तुओं के नित्यत्व का प्रसङ्ग होगा। उन वस्तुओं का प्रकाश संवित् के स्वरूप प्रकाश के अधीन न मानें तो सभी वस्तुओं को तुच्छ मानना होगा। उन वस्तुओं को संवित् प्रकाशाधीन नहीं मानें तो उन वस्तुओं के सत्यत्व का प्रसङ्ग होगा। अतएव संवित् के अधीन मात्र सभी वस्तुओं की सिद्धि मानें तो, फिर संवित् की ही तरह संविदधीन भी वस्तुओं के नित्यत्व को अवश्य स्वीकारना होगा। और ऐसा होने पर सम्पूर्ण प्रपञ्च को सत्य मानने वाले वादियों की ही विजय होगी। यदि प्रपञ्च सत्यत्व के भय से आप संवित् के नित्यत्व को त्याग दें, तो फिर आप और बौद्धों में कोई अन्तर ही नहीं होगा। अतएव आप यह भी नहीं कह सकते है कि स्वाप, मद एवं मुर्च्छा आदि के काल में भी संवित् का निर्विषयत्व नहीं प्रतिपादित कर सकते हैं, क्योंकि किसी अत्यन्त सावधान व्यक्ति का भी ऐसा परामर्श नहीं है, जिससे सिद्ध हो सके कि सभी संस्कारों को विनष्ट करने वाले देहत्याग आदि जन्य से क्लेश शादि के अभाव में भी निर्विषय एवं आश्रय विहीन अनुभूति का अनुभव होता है। अतएव स्वापादि काल में भी निर्विषय संवित् की सिद्धि नहीं हो सकती है। बल्कि सभी अनुभव कर्ताओं को यही अनुभव होता है कि सुषुप्त्यादिकाल में भी था, विषय भी थे, केवल विषयों

का ज्ञान मात्र नहीं होता था। 'नाहम् खलु' इत्यादि श्रुति का भी तात्पर्य, सुषुप्त्यादि काल में ज्ञान के निषेध में ही है। हम तो 'न विज्ञातु विज्ञातेर्विपरिलोपो विद्यते' इत्यादि श्रुति के आधार पर यह मानते हैं, कि उक्त कालों में भी ज्ञान रहता है, किन्तु उस समयों धर्मभूतज्ञान के द्वारा विषयों का प्रकाश नहीं होता है। इस कथन का प्रत्यक्ष से विरोध इसलिए नहीं है कि ज्ञान का प्रकाश तब ही होता है; जब कि वह विषयों का प्रकाश करे, विषयों के प्रकाश काल व्यतिरिक्त काल में ज्ञान में स्वयम् प्रकाश की योग्यता नहीं रहती है। सामग्री के नहीं रहने से उक्त कालों में दूसरा ज्ञान भी नहीं उत्पन्न होता है। विषय प्रकाशनाभाव के द्वारा भी स्वापादि कालिक ज्ञान का निषेध करनेमें श्रुति चरितार्थ हो जाती है।

अस्माभिरिति। आकारान्तरम्—विषयीकरणम्। भवतात्विति। स्वरूपातिरिक्तस्य परमात्मनः। स्थानाभ्युपगमात् स्वरूपमेव विषयीकरणमिति वक्तव्यम् तस्य च निवृत्तिर्दुर्वचेत्यर्थः।

ननु स्वापादिषु प्राक्सविषयाया एव संविदो निर्विषयत्ववन्मुक्तौ निर्विषयत्वम् स्यादित्यत्राह। अतएवेति। न केवलं भवता दुर्वचत्वम्, निर्विषयनिराश्रयसंविदो मानाभावात् बाधाच्च तदानीमसिद्धिरेवेत्याह निर्विषयेति।

ननु "नाहं खल्वि" ति श्रुतौ "सम्प्रत्ययमहमस्मी" ति सुषुप्तौ सविषयत्वस्य निषेधात्तदा संविन्निर्विषयेत्यत्राह नहीति। विषयीकरणस्य ज्ञानस्वरूपत्वस्यैव वाच्यतया सविषयत्वविशिष्टज्ञाननिषेधस्य न जानामीत्यत्रैव पर्यवसानेन ज्ञाननिषेधपरत्वस्यैव त्वया वाच्यत्वादित्यर्थः।

इति श्रीमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषीव्याख्यायां चण्डमारुताख्यायां मुक्तसंविन्निर्विषयत्वभङ्गो नाम एकपञ्चाशस्स्कन्धः।



अतस्त्वत्पक्षे ज्ञानस्य कदाचिदपि निर्विषयदशा दुरुपपादा, मुक्तौ तु सुतरामिति यथाश्रुति सार्वज्ञ्यमेव तदा स्वीकार्यम्॥ अन्यपरास्ताः श्रुतय इति चेन्न, परब्रह्मोपासनप्रकरणात् तत्फलप्रतिपादनपरत्वेन च सांसारिकफलत्वायोगात्, तत्रतत्रैव च निवृत्तसमस्तपुण्य[illegible]पत्वादिप्रतिपादनात्, विध्यपेक्षिते फले समर्प्यमाणे केवलार्थवादत्वकल्पनायोगात्। अन्यथा श्रुतहानाश्रुतकल्पनादिदोषसमुद्भावात् (दूगमात)। अतस्सिद्धं न कथंचिदपि मुक्तदशायां सर्वविषयवैमुख्यलक्षणमान्ध्यं संविदः शङ्कनीयमिति॥

॥ इति शतदूषण्याम् मुक्तसंविन्निर्विषयत्वभङ्गवादः पञ्चाशः॥५१॥



प्रसाद—अतएव अद्वैत मत में ज्ञान का निर्विषयत्व कभी भी नहीं उपपन्न हो सकता है । मुक्ति में तो जीव भी सर्वज्ञ हो जाता है, मानना चाहिए । यदि कहें कि मुक्त जीव के सार्वज्ञ्य इत्यादि का प्रतिपादन करने वाली श्रुतियों का वह अभिप्राय नहीं जो सिद्धान्ती मानते हैं; तो यह भी नहीं कहा जा सकता है, क्योंकि वे श्रुतियाँ ब्रह्मोपासना के प्रकरण में आयी हैं; ब्रह्मोपासना का फल ब्रह्मसाधर्म्यापत्ति का प्रतिपादन करने के कारण, उनका कोई फल सांसारिक नहीं हो सकता है । किञ्च ब्रह्मोपासना के ही प्रकरण में विद्याओं का फल पूर्वाघ का नाश तथा उत्तराघ का असंश्लेषाभाव बतलाया गया है । विधि वाक्य के द्वारा अपेक्षित फल की प्राप्ति होने पर; उन वाक्यों को (मुक्त जीव का वैभव प्रतिपादन परक अर्थवाद वाक्य मात्र मानना उचित नहीं है; नहीं तो श्रुत अर्थ के त्याग तथा अश्रुत की कल्पना का प्रसङ्ग होगा । इस तरह सिद्ध हो गया कि मुक्तावस्था में बुद्धि में सर्वविषय वैमुख्य रूप संवित् का निर्विषयत्व नहीं स्वीकारा जा सकता है ।

इस तरह शतदूषणी के एकावनवें मुक्तसंवित् निर्विषयत्व भङ्ग नामक वाद का प्रसाद सम्पूर्ण हुआ ॥



## ॥ अथ सगुणनिर्गुणश्रुतिव्यवस्थावादः द्विपञ्चाशः ॥ ५२ ॥

सत्त्वानीव विरुद्धजातिजनुषा सिद्धानि सिद्धाश्रमे
वैरं यत्र मिथस्त्यजन्ति विधयः सर्वे निषेधैः सह ।
तद् रंगेशयमंगसंगिकमलालक्ष्येश्वरप्रक्रियं
शान्तावद्यमनन्तमंगलगुणं ब्रह्म प्रपद्येमहि ॥
निर्गुणश्रुतिभिः केचित् बाधन्ते सगुणश्रुतीः ।
तासामन्योन्यसौहार्दमाहुर्यतिवराश्रयाः ॥

प्रसाद—जिस तरह सिद्धों के आश्रम में परस्पर में विरुद्ध जाति में उत्पन्न जीव भी वैरत्याग करके रहते हैं, उसी प्रकार श्रीभगवान् को विषय बनाने वाले सभी विधि वाक्यों का भगवद्विषयक निषेध वाक्यों से किसी भी प्रकार का वैर नहीं है; उस श्रीरङ्गम् निवास रसिक, जिनके साथ सदा लक्ष्मी जी निवास करती हैं, जिनकी सम्पूर्ण जगत् के नियामकत्व विषयक प्रक्रियाएँ स्पष्ट रूप से परिलक्षित होती हैं, उन शान्त, निर्दोष, अनन्त कल्याण गुणों के आश्रय पर ब्रह्म की हम शरणागति करते हैं । कुछ अद्वैती विद्वान वेदान्त की सगुण श्रुतियों का निर्गुण श्रुतियों द्वारा बाध बतलाते हैं, किन्तु यतिराज श्री रामानुजाचार्य के आश्रित जीव, उन दोनों प्रकार की श्रुतियों में परस्पर में सौहार्द का ही वर्णन करते हैं ॥

अस्ति तावत् उपनिषत्सु ब्रह्मण्येव सगुणवादो निर्गुणवादश्च । यथा—'यः सर्वज्ञः सर्ववित्' ; 'पराऽस्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च'; 'सत्यकामः सत्यसङ्कल्पः' ; 'ब्रह्मणा विपश्चिता' इत्याद्याः परस्सहस्राः सगुणश्रुतयः । एवम् 'निर्गुणं', 'निरञ्जनं' ; 'निष्कलं निष्क्रियं शान्तम्' 'अपहतपाप्मा विजरः' 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्' ; 'अस्थूलमनणु' इत्याद्याः निर्गुणश्रुतयः । आसामन्योन्यविरोधस्तावत् आपाततः प्रतीयते । न च सिद्धे वस्तूनि विकल्पसम्भवः । तत्र विरोधस्थिरीकरणेन बाध्यबाधकभाव इति नीचाः, विषयव्यवस्थया सन्धिरिति साधवः ।

ननु कथं विषयव्यवस्था ? सा हि (१) आश्रयभेदेन वा, शीतोष्णवत्, (२) देशभेदेन वा, चित्रे नीलपीतादिवत्, (३) कालभेदेन वा, पाकजपरमाणुगुणवत्, (४) समुच्चयेन वा, प्रदेशवर्तिसंयोगतदभाववत् ; (५) प्रतिसम्बन्धिभेदेन वा, पितृत्वपितृव्यत्ववत् (६) ग्राहकभेदेन वा, रूपस्पर्शवत्, (७) गृहीतृभेदेन वा ; जातिव्यवस्थितभोगादिवत्, (८) विधेयनिषेध्यभेदेन वा ब्रह्महत्याग्नीषोमीयादिवत् ; (९) अन्येन वा केनचित् श्वेत पीतादिबोधवत् इति ।

प्रसाद—सगुण एवम् निर्गुण श्रुतियों का विषय ब्रह्म ही है। ब्रह्म के सगुणत्व का निम्न अनेक श्रुतियाँ प्रतिपादन करती हैं । वे हैं 'यः सर्वज्ञः सर्ववित्' जो ब्रह्म सर्वज्ञ एवं सर्ववेत्ता है । 'परास्यशक्ति र्विविधैव श्रूयते ; स्वाभाविकी ज्ञानबलक्रिया च ।' अर्थात् ब्रह्म की अनेक पराशक्तियाँ सुनी जाती हैं, उसकी ज्ञान और बल की क्रियाएँ स्वाभाविक हैं। 'सत्यकामः सत्यसकल्पः' श्रुति ब्रह्म के सत्य सकल्पत्व तथा सत्यकामत्व आदि गुणों को बतलाती हैं । 'ब्रह्मणा विपश्चिता' श्रुति ब्रह्म के सर्वज्ञत्व को विपश्चित् शब्द से बतलाती है । इसी तरह 'निर्गुणं निरञ्जनम्' 'निष्कलं निष्क्रियं शान्तम्' 'अपहतपाप्मा विजरो' 'यत्तदद्रेश्यम् अग्राह्यम्० तथा 'अस्थूलमनणु' इत्यादि श्रुतियाँ ब्रह्म में निर्गुणत्व का प्रतिपादन करती हैं । इस तरह ब्रह्म विषयिणी सगुण एवं निर्गुण श्रुतियों में सामान्यतः विरोध की प्रतीति आपाततः होती है । सिद्ध वस्तु के विषय में विकल्प का कोई अवसर नहीं होता है । विरोध को दृढ करने के कारण दोनों प्रकार की श्रुतियों में बाध्य-बाधक-भाव नीच लोग मानते हैं तथा साधु लोग दोनों प्रकार की श्रुतियों के विषय को भिन्न-भिन्न बतलाकर उनमें समन्वय स्थापित करते हैं ।

इस पर अद्वैती विद्वान् पूछते है कि दोनों प्रकार की श्रुतियों में सिद्धान्ती विषय की व्यवस्था कैसे कर सकते हैं । (१) जैसे शीत और उष्ण के आश्रय भिन्न-भिन्न होते हैं उस तरह से आश्रय भेद के द्वारा या (२) जैसे एक ही चित्र में नीला रूप का देश दूसरा तथा पीतरङ्ग का देश दूसरा होता है; उस तरह से देश भेद के द्वारा या (३) जैसे पाक जन्य परमाणुओं के भिन्न-भिन्न गुण भिन्न-भिन्न काल में उद्भूत होते हैं उसी तरह काल भेद के द्वारा? (४) या प्रदेशवर्ती संयोग तथा उसके अभाव के समान समु-

च्चय के द्वारा? (५) या जिस तरह पितृत्व तथा पितृव्यत्व के प्रतिसम्बन्धि भिन्न-भिन्न होते हैं उसीतरह प्रतिसम्बन्धी की भिन्नता के द्वारा (६) या जैसे एक घट आदि के रूप तथा स्पर्श के ग्राहक भिन्न-भिन्न होते हैं; उसी तरह से ज्ञान के साधन के भेद के द्वारा ? (७) या जैसे एक ही स्त्री की शरीर में मनुष्यत्व तथा द्विजातीयत्व भोग्यत्व आदि भोक्ता के कारण भेद होता है; उसी तरह भोक्ता के भेद के द्वारा? (८) या जैसे ब्रह्म हत्या का श्रुति निषेध करके अग्निषोमीयादि यागों का विधान करती है; उसी तरह विधेय निषेध्य के भेद द्वारा ? (९) या श्वेतपीत आदि के ज्ञान के समान किसी अन्य प्रकार से आश्रय भेद के द्वारा उनके विषय की व्यवस्था करती है ?

तत्रेति । अत्र साधुनीचपदाभ्यां 'नीचाः कलहमिच्छन्ति सन्धिमिच्छन्ति साधवः' इति न्यायो द्योत्यते । कालभेदेनेति । घटादिषु पाकजनीलरक्तादीनां प्रदेशभेदेनापि व्यवस्थासम्भवात् परमाणुग्रहणम् । समुच्चयेनेति । यथा संयोगस्य स्वाभावविरोधपरिहारः स्वावच्छेदेन कालभेदेन; प्रदेशान्तरे तु देशभेदेन, एवमिहापि देशकालभेदाभ्यां विरोधपरिहार इत्यर्थः । गृहीतृभेदेनेति । 'परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ । कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः' इत्युक्तरीत्या एकस्यामेवप्रमदातनौ मनुष्यैश्वरादिजातीयभोक्तृभेदाद्भोग्यतावैलक्षण्यं दृष्टम् तद्वदिति भावः । आदिशब्देन परिव्राट्कामुकयोः गुणव्यवस्थितौ भोग्यत्वतदभावौ गृह्येते । विधेयेति । यथा अग्नीषोमीयहिंसाविधेः 'नहिंस्यादि' ति हिंसानिषेधस्य च ब्रह्महत्याग्नीषोमीयाभ्यां व्यवस्था तद्वदित्यर्थः । अन्येनवेति । श्वेतपीतबोधयोस्तावदस्ति विरोधः, एकस्यैव पुरुषस्य एकस्मिन्नेव विषये एकस्मिन्नेव काले श्वेतः पीत इति बोधादर्शनात , एवं च श्वेतः पटः, पीतो घटः इति समूहालम्बनस्य स्वेनापि विरोधप्रसंगे उक्तप्रकारेभ्योऽन्येनैव व्यवस्थोच्यते , तत्र चान्यः प्रकारो घटपटरूपविषयभेदः , तद्वदिहाप्युक्तप्रकारेभ्योऽन्योयः कश्चित् प्रकारो व्यवस्थापकोऽस्तिवत्यर्थः ।

न तावदाद्यः , परमेव ब्रह्माधिकृत्य सगुणनिर्गुणश्रुत्योरुदयात् । न च जीवविषयाः काश्चित , अन्यास्तु परविषया इति विवेक्तुं शक्यम् ; विशेषाभावात् । न च सर्वज्ञत्वादिश्रुतीनां जीवविषयत्वम् ; प्रत्यक्षविरोधात , संसारोच्छेदप्रसङ्गाच्च । न चेदं यौगिकं सार्वज्ञम् , नित्यसर्वज्ञत्वोक्तेः । नापि निर्गुणश्रुतीनाम्, अत एव । उपलभ्यते हि बुद्धिसुखादिमत्तया जीवः , तदभावे च तस्य संसरणं निर्बीजम् ।

न द्वितीयः ; स हि सम्बन्धिदेशभेदो वा स्यात् ; स्वप्रदेशभेदो वा । आद्ये, रूपाद्यवच्छिन्नप्रदेशभेदेन सगुणत्वनिर्गुणत्वयोर्व्यवस्थेति स्यात् । तत्र तावत् एकस्यैव पुंसः क्वचित्सर्वज्ञत्वं क्वचिदान्ध्यमिति स्यात् । तत्तु व्याहतम् ; धर्मिभेदाभावात् ॥ प्रदेशवर्तिगुणोत्पत्तिवदि (देवे) ति चेन्न , प्रदेशवर्तिनोऽपि ज्ञानस्य सर्वविषयीकरणे तद्धर्मिणः कार्त्स्न्येन सर्वज्ञत्वानपायात् । यद्यपि प्रदेशान्तरे तस्य समवायो नास्ति; तथापि तत्र आन्ध्यादियोगित्वं क्वचित्केनापि सार्वज्ञ्येन विरुद्धमेव , यथावत्प्रकाशमाने अध्यासाद्यसम्भवात् ।

औपाधिकब्रह्मभेदाभेदवादनिराकरणेन (णे ?) चायमर्थो व्यक्तमनुसन्धेयः। प्रादेशिकगुणसमवायाभावकथनेन च न ब्रह्मणः कश्चिदतिशयः; सर्वद्रव्यसमत्वात्। एतेनैव स्वप्रदेशभेदोऽपि निरस्तः। स ह्यौपाधिकस्तावन्निरस्त एव। स्वाभाविकोऽपि तुल्यन्यायतया निरस्त एव। न च स्वाभाविकोंऽशस्तत्र सम्भवति, निरवयवत्वश्रुतिविरोधात्॥ निरवयवत्वमंशभेदेन [सं] भवत्विति चेत्; अंशनिरवयवत्वादेशिनोऽपि निरवयवत्ववचने सर्वस्याप्यवयविनो निरवयवत्वाविरोधेन सावयवत्वलक्षणनिषेध्यासिद्धौ निषेधासिद्धेः॥ समुदायेषु सांशतया तत्सिद्धिरिति चेन्न; अत्रापि तत्सम्भ(त्सद्भा)वात् तन्निषेधासिद्धेः। एकदेशस्यत्वेकदेशित्वनिषेध इति निरर्थो (र्थको) क्तिः।

नापि तृतीयः, प्रागुत्तरत्वविकल्पायोगात्, पूर्वमत्यन्तनिर्गुणत्वे पश्चादपि कारणाभावेन गुणोत्पत्त्ययोगात्, पश्चान्निर्गुणता हेतुतः सम्भवन्त्यापि [निर्गुणताहेतुः सम्भवतीत्यपि] सर्वविशेषमिथ्यात्वाभावे नात्यन्ताय स्यात्, वस्त्वन्तरसत्यत्वे तत्संयोगादिलक्षणस्यानर्जनीयत्वात्। वस्त्वन्तराणां च मिथ्यात्वमन्तरेणात्यन्तोच्छेदासम्भवात्। सत्कार्यवादसमर्थनेन निरन्वयविनाशादिनिराकरणात्।

प्रसाद—आश्रय भेद के द्वारा दोनों प्रकार की श्रुतियों के विषय की व्यवस्था इसलिए नहीं मानी जा सकती है कि, सगुण एवम् निर्गुण दोनों प्रकार की श्रुतियों का विषय ब्रह्म ही है। यह नहीं कहा जा सकता है कि कुछ श्रुतियाँ जीव परक तथा कुछ श्रुतियाँ ब्रह्मपरक हैं, ऐसा भी नहीं कहा जा सकता है, क्योंकि इस प्रकार के भेद में कोई भी प्रमाण नहीं है। सर्वज्ञत्वादि की प्रतिपादिका श्रुतियों का विषय जीव को इसलिए नहीं माना जा सकता है कि प्रत्यक्षतः ही जीवों के सर्वज्ञत्वादि बाधित हैं। तथा जीवों के सर्वज्ञ हो जाने पर संसार के उच्छेद का प्रसङ्ग होगा, क्योंकि सिद्धान्ती तो सर्वज्ञत्व की प्राप्ति को ही मोक्ष मानते हैं। इस सार्वज्ञ्य को यौगिक भी नहीं माना जा सकता है; क्योंकि श्रुति उस सर्वज्ञता को नित्य बतलाती है। निर्गुण श्रुतियों का भी आश्रय जीवों को इसलिए नही माना जा सकता है कि प्रत्यक्षतः जीवों के निर्गुणत्व का विरोध होता है। प्रत्यक्षतः जीवों की बुद्धि तथा सुख आदि के आश्रय रूप से उपलब्धि होती है। इन गुणों के विना जीवों का संसरण ही निर्मूल हो जायेगा।

दूसरा विकल्प इसलिए नहीं माना जा सकता है कि आप देशभेद का अर्थ क्या मानते है? सम्बन्धी का देशभेद अथवा अपने प्रदेश का भेद? सम्बन्धी का देशभेद मानने पर रूपादि से युक्त प्रदेश भेद के द्वारा ब्रह्म के सगुणत्व एवं निर्गुणत्व की व्यवस्था हो सकती है। ऐसी स्थिति में एक ही ब्रह्म की कहीं पर सर्वज्ञता होगी तथा कहीं पर मूर्खता होगी? किन्तु एक ही पुरुष में सर्वज्ञता एवम् मूर्खता का होना परस्पर में व्याहत है। क्योंकि धर्मी तो एक ही है, केवल सम्बन्धी देशमात्र की भिन्नता है। प्रदेशवर्तित्व० इत्यादि—यदि कहें कि धर्मी की एकता रहने पर भी संयोग तथा संयोगाभाव की तरह औपाधिक प्रदेशभेद के ही द्वारा दोनों प्रकार की श्रुतियों की व्यवस्था मान ली जा सकती है, तो यह भी

कहना ठीक नहीं है, क्योंकि प्रदेशवर्ती के भी ज्ञान के द्वारा सभी विषयों को अपना विषय बनाने पर उस ज्ञान का आश्रय पूर्ण रूप से सर्वज्ञ होगा ही। यद्यपि प्रदेशान्तर में जिस अंश विशेष में सार्वज्ञ्य नहीं होगा वहां पर, धर्मी में सर्वज्ञता नहीं रहेगी; फिर भी उस प्रदेशान्तर में भ्रान्तित्व इत्यादि नहीं रह सकते, क्योंकि ऐसा हो नहीं सकता है कि किसी भी सर्वज्ञ के अंश विशेष में सर्वज्ञता हो और किसी अंश विशेष में भ्रान्तित्व। जब सभी वस्तुओं का यथावत् ज्ञान हो तो उस समय अध्यास का होना सम्भव नहीं है। इन बातों का विस्तृत विवेचन ब्रह्म के औपाधिक भेदाभेद के निराकरण के प्रसङ्ग में देखना चाहिए। किञ्च ब्रह्म के गुणों का प्रादेशिक समवायाभाव बतलाने से ब्रह्म में कोई अन्तर भी नहीं आता; क्योंकि ब्रह्म को तो आप सभी द्रव्यों में समान रूप से व्यापक मानते हैं। उपाधि के भेद ही परस्पर सम्बन्ध से धर्मी में भेद उत्पन्न कर देते हैं, इस मत के खण्डन के ही द्वारा उपाधि भेद के द्वारा धर्मी में भेद मानने वाले का मत निरस्त हो गया। क्योंकि औपाधिक भेद का खण्डन तो किया ही जा चुका है, उसी तरह स्वाभाविक भेद मानने वाले का भी मत खण्डित हो जाता है। किञ्च ब्रह्म में स्वाभाविक अंश भी नहीं हो सकता है; क्योंकि श्रुतियाँ आत्मा के निरवयवत्व का प्रतिपादन करती हैं। यह भी नहीं कहा जा सकता है कि अंशके भेदके द्वारा भी निरवयवत्व बना ही रह सकता है, क्योंकि अंश के निरवयत्व के द्वारा अंशी का निरवत्व प्रतिपादन करने पर, सम्पूर्ण अवयवी का निरवयवत्व सिद्ध हो जाने से सावयवत्वरूप निषेध्य की असिद्धि हो जाने पर निषेध भी असिद्ध हो जायेगा। यदि कहें कि समुदायों में अंश युक्तत्व रहने के कारण सावयवत्व की सिद्धि हो जायेगी; तो ऐसा भी नहीं कहा जा सकता है; क्योंकि समुदाय के भी निरवयवत्व एवम् सावयवत्व इन दो अंशों द्वारा ब्रह्म के सावयवत्व की सिद्धि होगी। एक देश में रहने वाले सावयवत्व वस्तु के एक देशत्व का निषेध करना भी व्यर्थ है।

तीसरा पक्षभी नहीं स्वीकारा जा सकता है, क्योंकि कालभेद पक्ष के विषय में प्रथम कल्प के समान ही विकल्प होगा। जैसे वहाँ कहा गया है कि आप किस आश्रय में गुण तथा किस आश्रय में गुण का अभाव मानते हैं? उसी तरह यहाँ भी प्रश्न होगा कि किस काल में ब्रह्म में आप गुण तथा किस काल में गुणों का अभाव मानते है? और उपर्युक्त प्रकार से ही दोनों पक्षों का खण्डन हो जाने से यह तीसरा विकल्प ठीक नहीं है। पहले ब्रह्म को अत्यन्त निर्गुण मानकर पश्चातन काल में भी उसमें गुणों की उत्पत्ति नहीं मानी जा सकती है, क्योंकि उन गुणों की उत्पत्ति का कोई भी कारण नहीं है। किञ्च सभी भेदों को मिथ्या माने विना हेतुओं के द्वारा उत्पन्न होकर भी पूर्ण रूपेण निर्गुणता नहीं हो सकती है, क्योंकि जब ब्रह्म व्यतिरिक्त वस्तुओंको सत्य माना जायेगा तो उनका ब्रह्म से संयोगादि तो होंगे ही। किञ्च जब तक ब्रह्म व्यतिरिक्त वस्तुओं को मिथ्या नहीं माना जायेगा तब तक उनका अत्यन्त विनाशसिद्ध हो नहीं सकता है, क्योंकि सिद्धान्ती भी सत्कार्यवाद का ही समर्थन करते हैं, अतएव उन वस्तुओं का निरन्वय ( असम्बद्ध ) विनाश नहीं माना जा सकता हैं, इस तरह आपके मत में सत्य कार्य का नाश भी अवस्थान्तरापत्ति रूप ही है। अतएव अवस्थान्तर विशिष्ट द्रव्य रहेगा ही।

ननु विरोधादेकविषयत्वासम्भवादेव भिन्नविषयता कल्प्यते, तत एव तत्प्रकरणस्थब्रह्मश्रुतिलिङ्गादिकमपि अन्यथा नीयत इत्यत्राह नच जीवेति। न शवलम् जीवपरोयमिति निर्धारणासम्भवः; द्विविषयोरपि श्रुत्योर्जीवपरत्वमसम्भवि चेत्याह नचेति। संसारेति। मोक्षसाधनतत्त्वज्ञानस्य सत्त्वादिति भावः।

ननु योगाधीनं सार्वज्ञ्यं श्रुतिप्रतिपाद्यम्, तस्य चेदानीमभावान्न प्रत्यक्षविरोधादीत्या-

शङ्कयां नचेदमिति । नापि निर्गुणेति । जीवविषयत्वमित्यनुषङ्गः । तत एवेति । प्रत्यक्षविरोध-संसारोच्छेदाभ्यामित्यर्थः । तदुपपादयति उपलभ्यते हीत्यादिना । तदभावेचेति । ज्ञातृत्वकर्तृत्व भोक्तृत्वाभावान् संसरणं निर्बीजमित्यर्थः । सम्बन्धिदेशेति । सम्बन्धो यो देशस्तद्भेदः, उपाधि-भेद इति यावत् । उपाध्यवच्छिन्नेत्यादि । सम्बन्धिवस्त्वन्तरभेदमात्राद्व्यवस्थाया अयोगात् । भिन्नोपाध्यवच्छेदेन वृत्तया भिन्नदेशत्वादेव व्यवस्था वक्तव्येति भावः । धर्मिभेदेति । औपाधिक-प्रदेशभेदे सत्यपि वस्तुतो धर्मिण एकत्वादित्यर्थः । ननु स्वतो धर्म्यभेदे सत्यपि संयोगतदभाव-वदौपाधिकप्रदेशभेदेनैव व्यवस्थास्त्वित्यत्राह प्रदेशेति । कार्त्स्न्येनेति । कार्त्स्न्येन सार्वज्ञ्ये यत् कार्यम् कृत्स्नेऽपि प्रदेशेऽभ्रमासम्भवरूपं भवति तदेकदेशवर्तिनापि सार्वज्ञ्येन भवतीत्यर्थः । अय-मेवार्थो यद्यपीत्यादिना स्पष्टीकरणार्थमुच्यते यथावदिति । ज्ञानं स्वाश्रये भ्रमविरोधि न तु स्वाव-च्छेदेन, गौरवादिति भावः । प्रादेशिकेति । कार्त्स्न्येन गुणनिषेधे ह्यद्वितीयत्वसिद्धेरतिशयस्सि-ध्यति, नैवमेकदेशानिषेधे तत्र गुणसामान्यनिषेधे हेय गुणस्यापि निषेधादतिशयो वक्तव्यः, नचै-कदेशे हेयगुणा न सन्ति इत्युक्त्या कश्चिदतिशयस्सिध्येत् , हेयगुणाकरद्रव्यस्याप्येकदेश तदभा-वोपपत्तेः , पाद्याद्यवच्छेदेद दुःखितोऽपि जीवस्य प्रदेशान्तरे तदभावदर्शनादित्यर्थः । एतेनेति । उपाधिगत एव भेद उपाधिसम्बन्धिनि धर्मिणि परम्परासम्बन्धेन भेदकार्यनिमित्तमित्येक मतम् उपाधिभेदेन धर्मिणि भेद उत्पद्यत इत्यपरं मतम् ; तत्र पूर्वं प्रागुक्तम् द्वितीयमधुनोच्यत इति भेदः । एवम् भेदे सत्यौपाधिकभेदशब्दवाच्यत्वादुभयाः पूर्वपक्षनिरासेनैवायम् पक्षो निरस्तः इत्युक्तम् ।

नन्वेकस्मिन्नेव सगुणत्वनिर्गुणत्वयोरप्यंशभेदेन यथा व्यवस्थेष्यते एवं सावयवत्वनिर-वयवत्वयोरप्यंशभेदेन व्यवस्थेष्यत इत्याशङ्कते निरवयवत्व मिति । सर्वस्येति । घटादेरपि निर-वयवांशसम्भवे तदुद्देशेन निरवयवत्वात सावयवानामप्यंशानां निरवयवांशकत्वे निरवयवत्वप्रसंगे तदवयविनो घटादिस्तैरप्यंशैर्निरवयवतया तदवच्छेदेनापि सावयवत्वासंभवात् घटादावपि सावय-वत्वाप्रसिद्धेस्तन्निषेधायोग इत्यर्थः ।

ननु प्रत्येकांशावच्छेदेन निरवयवत्वेऽपि घटादीनां निरवयवांशसमुदायावच्छेदेनैव सावयवत्वान् निषेध्यप्रसिद्धिरिति शङ्कते । समुदायेष्विति । अत्रापीति । निरवयवत्वसावयवत्व-व्यवस्थापकांशाभ्यामेव ब्रह्मणः सावयवत्वादित्यर्थः ।

ननु समुदायस्य सावयत्वेऽपि सावयत्वनिषेधस्य तदेकदेशविषयत्वान्न निरवयवत्वश्रुति विरोध इत्याशङ्क्य, तस्य सावयवत्वे द्रव्यसाधारणत्वान्न तन्निषेधेन ब्रह्मणः कश्चिदतिशय इत्याह एकदेशस्येति । प्रागुक्तेति । आश्रयभेदेन व्यवस्थेति प्रथमकल्पे यथा कस्मिन् आश्रये गुणः कस्मिन् तदभाव इति विकल्पः; एवमिहापि कस्मिन् काले गुणः कस्मिन् तदभाव इति विकल्पः कार्य इत्यर्थः । तदेवोपपादयति पूर्वमिति । कारणाभावेनेति । द्रव्यान्तरस्य कारणत्वे पूर्वम् तत्संयोगप्रसङ्गः , तद्गतगुणस्य कारणत्वेऽपि स एव दोषः । पूर्वस्वगतगुणानामुत्तरगुणहेतुत्व-

शङ्का न कार्येत्यभिप्रायेणात्यन्तनिर्गुणत्वं इत्युक्तम्। स्वस्यैव स्वगुणहेतुत्वे पूर्वमेव गुणोत्पत्तेर्गुणत्वानुपपत्तिरिति भावः। अत्यन्ताय कार्त्स्न्येनेत्यर्थः। वैरूप्यन्तरेति। द्रव्यान्तरसत्वत्वं विवक्षितम्। तस्य च मूर्तत्वे विभागः संयोगादीत्यादिपदेन विवक्षितः। सत्कार्यवादेति। सतो द्रव्यस्यावस्थान्तरयोगः कार्यतेति समर्थनात् कार्यस्य सतो नाशोऽप्यवस्थान्तरमेव स्यात्। अतोऽवस्थान्तरविशिष्टम् द्रव्यं तिष्ठेदेवेत्यर्थः।

अतएव चतुर्थोऽपि निरस्तः, समुच्चये प्रत्येकमुक्तदूषणा (दोषस्य) समुच्चयस्याप्यपरिहार्यत्वात्। न हि ब्रह्मांशस्य कदाचित्संसरणं कदाचिदपवर्ग इति भास्करयादवप्रकाशमताद्दवीयः। दूषितम् चैतत् कालावच्छिन्नसार्वज्ञ्यदूषणादिना, यथोक्तम्—

"सार्वज्ञ्यसर्वशक्त्यादिगुणकः केन सिध्यति। ई[नि]श्वरस्यापि विज्ञेयाः [यः] स्वतः सर्वगुणाः[णः] श्रुतेः। सार्वज्ञ्यादिरवतस्त्वे तु विवादो यदि कल्प्यते। सत्यत्वादौ विवादः किं न स्यान्निर्गुणवादिनाम्।।" इति। न पञ्चमः, पुत्रत्वपितृत्वादिवत् सगुनिर्गुणत्वयोः प्रतिसम्बन्ध्युपाधिकत्वाभावात्, नीलपीतादिवन्निरपेक्षत्वनैयत्यात्। न हि तत्त्वतो नीलमेव कञ्चित् प्रति पीतम्।। पुरुषभेदेनोष्णोऽनुष्णश्च कृष्णवर्त्मा कदाचित् भवतीति चेन्न; तत्रानुष्णत्वाभावात्। प्रतिबन्धकबलेन तु कश्चिदुष्णत्वेनोपलभते। तत्कार्यं च स्फोटादिकं तदा न जायते।। 'शीतो भव हनूमतः' 'तावैष वह्निः पवनेरितोऽपि न मां दहत्यत्र समन्ततोऽहम्। पश्यामि पद्मास्तरणास्तृतानि शीतानि सर्वाणि दिशां [शा] मुखानि।।' इत्यादि कथमिति चेत्—इत्थम्—[तत्र हि] प्रभावविशेषप्रतिबद्धतया दाहकत्वाभाव एव [हि] तात्पर्यम्, यद्वा चान्द्रमसमहस इव देवताप्रभावोपनीतसलिलाद्यवयवनिवहसम्वलनवशादननुभूतौष्ण्यस्य [नुद्भूतौष्ण्यस्य] दहनस्योपलब्धस्य मानशीतिमारोपेण शीतव्यपदेशः।

प्रसाद—उपर्युक्त प्रतिपादन के द्वारा ही चतुर्थ विकल्प निरस्त हो गया, क्योंकि यह समुच्चय देश एवम् काल का समुच्चय रूप है। अतएव इस पक्ष में भी कालभेद एव देशभेद के पक्षों में होने वाले दोष भी इस पक्ष में अवश्य होंगे। ब्रह्मांश का कभी संसरण तथा कभी मोक्ष मानना भी भास्कर एवं यादवमत के ही समान दोष दूषित है और इस मान्यता का खण्डन मैंने कादाचित्क सार्वज्ञ्य के दूषणादि के द्वारा पहले ही किया है। जैसा कि कहा भी गया है-जीव के सर्वज्ञत्व तथा सर्वशक्तिमत्व आदि की सिद्धि कैसे होती है। ईश्वर का भी सार्वज्ञ्यादि स्वाभाविक ही माना जा सकता है, क्योंकि श्रुतियाँ उसके सभी गुणों का प्रतिपादन करती हैं। यदि आप ईश्वर के सार्वज्ञ्यादि के विषय में विवाद की कल्पना करें तो प्रश्न है कि क्या ईश्वर को निर्गुण मानने वालों का जीव के सत्यत्वादि के विषय में विवाद नहीं है? पाचवाँ विकल्प इसलिए नहीं माना जा सकता है कि, ब्रह्म के सगुणत्व एवं निर्गुणत्व एक

ही व्यक्ति में रहने वाले पुत्रत्व एवम् पितृत्व के समान औपाधिक नहीं है, इनकी उपलब्धि नीलपीत आदि के समान एक दूसरे से बिल्कुल भिन्नाश्रय गत हैं। कोई नील वस्तु किसी दूसरे के प्रति पीला नहीं हो जाती है। यदि कहें कि एक ही अग्नि को किसी के प्रति उष्ण एवं किसी के प्रति अनुष्ण देखा जाता है, तो ऐसा भी नहीं कहा जा सकता है, क्योंकि अग्नि का अनुष्णत्व प्रतिबन्धक कृत है, स्वाभाविक नहीं। प्रबन्धक के ही कारण अग्नि के द्वारा दाहादि कर्म नहीं होता। यदि कहें कि 'शीतो भव हनुमतः' अग्नि हनुमान के लिए शीतला हो जाओ, 'हे तात! वायु के द्वारा चतुर्दिक प्रज्वालित अग्नि मुझे नही जला रहा है। सभी दिशाओं में कमल बिछा दिये गये के समान मैं शैत्य का अनुभव कर रहा हूं।' इत्यादि स्थलों में भी सीता के वाक्य तथा प्रह्लाद के प्रभावातिशय्य के अग्नि का दाहकत्व प्रतिबन्धित हैं। अथवा चन्द्रमा की कान्ति के समान देवता के प्रभावातिशय्य के कारण वहां पर जलादि के अवयव संहत हो गये हों, जिसके कारण हनुमान तथा प्रह्लाद अग्नि के औष्ण्य का अनुभव नहीं कर सके, इसीलिए अग्नि में शीतत्व का आरोप करके उपर्युक्त व्याहार हुआ हैं।

प्रत्येकेति। यद्यप्यस्मिन् पक्षे पूर्वं निर्गुणप्रदेशस्यापि द्रव्यान्तरतद्गुणादिना पश्चाद्गुणोत्पत्तिः सम्भवति, न च प्रागपि तत्प्रदेशस्य तत्संयोगादिना सगुणत्वापत्तिः, प्राक् प्रदेशान्तरस्थितेनापि निर्गुणप्रदेशे पश्चात्संयोगाद्युत्पादनसम्भवात, एवं पूर्वं सगुणस्य पश्चान्निर्गुणतायामपि नोक्तदोषः, निरन्वयविनाशाभावेऽपि द्रव्यस्य ध्वंसाख्योत्तरावस्थायाः प्रदेशान्तरे वृत्तिसम्भवात् गुणप्रदेशावच्छेदेनात्यन्तनैर्गुण्योपपत्तेः, तथापि यत्प्रदेशे द्रव्यवत्त्वं तत्प्रदेशे संयोगस्यावर्जनीयत्वात सगुणप्रदेशत्वमेव स्यात, तथा च प्रदेशभेदेन व्यवस्थाया अयोगः, अतः समुच्चयपक्षे निर्गुणप्रदेशे न कदापि द्रव्यसम्भव इति सगुणप्रदेश एव प्राग्वा पश्चाद्वा द्रव्यस्य सत्त्वंवाच्यम्; तथा च तद्गुणद्वयमव्याहतमिति भावः।

नापि षष्ठः, ग्राह्यभेदस्य ग्राहकभेदाधीनत्वे रूपस्पर्शादिभेदविलयप्रसङ्गात्। हिंसाऽहिंसा ( दि ) वाक्ययोरेकस्मिन्नेव क्रतावन्वये [ऽपि] विरोधाभावप्रसङ्गाच्च। न च भिन्नकरणग्राह्यरूपस्पर्शयोरिव सगुणत्वनिर्गुणत्वयोरविरोधः, भावाभावरूपत्वात; रूपस्पर्शयोस्तु सहानवस्थानहेतोः कस्यचिदप्यदर्शनात (दभावात)।

नापि सप्तमः, आनुकूल्यप्रातिकूल्यादेः सप्रतिसम्बन्धिकत्वेन जातिव्यवस्थितभोगप्रयुक्तेः। सगुणत्वनिर्गुणत्वयोस्तु तदभावेनानुपपत्तेः, उपपत्तौ वा ब्रह्मणोऽव्यवस्थितस्वभावत्वप्रसङ्गात।

न चाष्टमः, निर्गुणश्रुतीनां सर्वगुणनिषेधपरत्वेन विधेयगुणादिशेषपरिशेषासिद्धेः॥ गुणविधिवशादेव निर्गुणश्रुतयः सङ्कोचमर्हन्तीति चेन्न; असंकुचितनिर्वाहे सति सङ्कोचानुपपत्तेः॥ तथा सति सगुणश्रुतीनामप्रामाण्यं प्रसज्येतेति चेन्न; अपच्छेदनयेन प्रमाणत्वेऽपि बाध्यत्वोपपत्तेः॥ पौर्वापर्यायोगेनापच्छेदनयानवतार इति चेन्न; अपच्छेदनये मा

मापौर्वापर्यस्य निमित्तपौर्वापर्यमात्राधीनत्वात् अत्राप्यर्थतो विधिनिषेधयोः पौर्वापर्यसिद्धेः । विधिर्ह्यन्यानपेक्षतया पूर्वो भवति, निषेधस्तु 'अ' निषेध्यप्रसङ्गसाकाङ्क्षतया परः ॥ एवं सति हिंसाविधिनिषेधवाक्ययोरप्यपच्छेदनयावतार इति चेन्न ; तत्र विधिवाक्यस्यात्यन्ताप्रामाण्यप्रसङ्गात्, अत्र तु सगुणवाक्यानां मिथ्या (विद्यादि) विषयाणामपि दृष्टिविशेषे उक्तन्यायेन तत्तत्फलाभिलापवत्मन्द्यमायापुरुषविशेषविषयोपासनविधिशेषतयाऽपि प्रामाण्योपपत्तेः । अतः उभयोः प्रामाण्येऽपि बाध्यबाधकभावव्यवस्था । अत एव तत्त्वतो निर्गुणत्वम् च सिध्यतीति न निर्गुणश्रुतीनां सङ्कोचहेतुमुपलभामहे ।

प्रसाद—छठा पक्ष इसलिए नहीं स्वीकारा जा सकता है कि, यदि ग्राहक के भेद के द्वारा ग्राह्य का भेद होने लगेगा तो फिर रूप स्पर्श आदि का भेद ही विनष्ट हो जायेगा। किञ्च 'अग्निषोमीयं पशुमालभेत' 'माहिंस्यात् सर्वभूतानि' इत्यादि हिंसा तथा अहिंसा के प्रतिपादक वाक्यों का अन्वय एक ही वाक्य में होता है फिर भी उन वाक्यों का आपस में कोई भी विरोध नहीं है । यह भी नहीं कहा जा सकता है, कि जिस तरह एक ही आश्रयगत रूप का भिन्न इन्द्रियों से ग्रहण होने के कारण उनका आपस में विरोध नहीं होता, उसी तरह सगुणत्व एवम् निर्गुणत्व का अविरोध ग्राहकभेद के कारण होता है, क्योंकि दृष्टान्त एवं दार्ष्टान्तिक में भावत्व एवं अभावत्व को लेकर विरोध है । रूप एवम् स्पर्श में सहानवस्थानत्व का कोई भी हेतु आज तक नहीं देखा गया है । किन्तु एक ही वस्तु के सगुणत्व एवं निर्गुणत्व में सहानवस्थान रूप विरोध है । सातवाँ पक्ष इसलिए अमान्य है कि स्त्री आदि किसी भी वस्तु का अनुकूलत्व एवम् प्रतिकूलत्व का अविरोध प्रति संबन्धियों की भिन्नता के कारण है ; किन्तु ब्रह्म की सगुणता एवं निर्गुणता में प्रति सम्बन्धि की भिन्नता का अभाव होने के कारण विरोध है । यदि एक ही ब्रह्म में सगुणत्व एवं निर्गुणत्व दोनो उपपन्न हो जायँ तो फिर ब्रह्म के स्वभाव को अव्यवस्थित मानना होगा । आठवाँ विकल्प इसलिए नहीं माना जा सकता है कि निर्गुण श्रुतियाँ सभी गुणों का निषेध करती हैं, अतएव निर्गुणत्व को विधेय गुणविशेष का परिशेष नहीं माना जा सकता है, यह भी नहीं कहा जा सकता है कि सगुण श्रुतियों द्वारा किए जाने वाले ब्रह्मके गुण विधान को ही दृष्टि पथ में रखकर निर्गुण श्रुतियों के अर्थ में सङ्कोच करना आवश्यक है । क्योंकि जब उनका हमारे सिद्धान्तानुसार असंकुचित निर्वाह सम्भव है, तो फिर उनके संकुचित निर्वाह का कोई प्रश्न ही नहीं उठता है । यह भी नहीं कहा जा सकता है कि निर्गुण श्रुतियों का असंकुचित निर्वाह मानने पर सगुण श्रुतियाँ अप्रामाणिक हो जायेंगी; प्रामाण्य रहने पर भी अपच्छेदन्याय से उनका बाध्यत्व उपपन्न ही होता है । यह भी नहीं कहा जा सकता है, कि अपच्छेदन्याय वहीं पर प्रवृत्त होता है, जहाँ पर पौर्वापर्य हो, सगुण श्रुतियों में पौर्वापर्य का अभाव होने के कारण, यहाँ पर अपच्छेद न्याय नहीं लगता है; क्योंकि अपच्छेद न्याय में प्रमाण के पौर्वापर्य का निर्णय निमित्त के पौर्वापर्य के द्वारा किया जाता है । सगुण तथा निर्गुण श्रुतियों के प्रसङ्ग में भी अर्थ को दृष्टि पथ में रखकर विधि एवम् निषेध के पौर्वापर्य का निर्णय किया जा सकता है । निरपेक्ष होने के कारण विधि की प्रवृत्ति पहले होती है और निषेध्य के प्रसङ्ग साकांक्ष होने के कारण निषेध विधि के पश्चात् होता है । यदि कहें कि ऐसा होने पर तो हिंसा का विधान करने वाले तथा हिंसा का निषेध करने वाले वाक्यों में भी अपच्छेदन्याय प्रवृत्त होगा, तो यह नहीं कह सकते हैं, क्योंकि ऐसा होने

पर हिंसा विधि वाक्य के अत्यन्त अप्रामाण्य का प्रसङ्ग होगा । प्रकृत प्रसङ्ग में तो सगुण वाक्यों के मिथ्या विद्यादि विषयक होने पर भी, दृष्टिविशेष करने पर, अपच्छेदन्याय के द्वारा, विभिन्न फलों की अभिलाषा से ससरण करने वाले पुरुष विशेष (ईश्वर) विषयक उपासना विधि के शेष रूप से उनका प्रामाण्य सिद्ध हो जाता है । इस तरह दोनों प्रकार की श्रुतियों का प्रामाण्य रहने पर भी दोनों प्रकार की श्रुतियों में बाध्य–बाधक भाव की सिद्धि हो जाती है । इस तरह यह भी सिद्ध हो गया कि ब्रह्म का निर्गुणत्व ही तात्त्विक है । इस तरह स्पष्ट है कि निर्गुण श्रुतियों के अर्थ में सङ्कोच करने का कोई भी कारण नही है ।

किं रूपादीनां धर्म्यनतिरेकपक्षे रूपोपलम्भेऽपि स्पर्शानुपलम्भार्थं रूपस्पर्शयोर्भेदो वाच्यः तथा च रूपात्मकस्य धर्मिणस्तयोर्भिन्नत्वाविरोधे प्रसक्ते ग्राहकभेदद्व्यवस्थोच्यते–चक्षुषा गृह्यमाणं तदनात्मकम्, किन्तु स्पर्शात्मकमिति, तद्वदत्रापीत्यभिप्रायः ? किं वा रूपस्य विजातीयरूपान्तरेणेव स्पर्शेनाप्यसामानाधिकरण्यात्मकविरोधे प्रसक्ते ग्राहकव्यवस्थया विरोधपरिहारो वाच्यः, तद्वदत्रापीत्यभिप्रायः ? इति विकल्पं हृदि निधायाद्यं दूषयति ग्राह्यभेदस्येति । रूपेति । ग्राह्यभेदादेव ग्राहकभेदस्य कल्पनीयतया ग्राह्यभेदस्य ग्राहकभेदाधीनत्वे अन्योऽन्याश्रयादिति भावः । नीलपीतशीतोष्णाद्यवान्तरभेदोऽप्यत्र विवक्षितः । हिंसेति । एकस्यैव ग्राहकभेदेन धर्माधर्मात्मकत्वसम्भवादिति भावः । द्वितीयं दूषयति नचेति ।

ननु भावाभावयोरिव प्रसक्तविरोधयोः रूपस्पर्शयोः कथं तर्हि सामानाधिकरण्यमित्यत आह रूपस्पर्शयोस्त्विति । कस्यचिदिति । भावाभावरूपत्वस्य चाभावादित्यर्थः । आनुकूल्येत्यादि । आदिशब्देनानुकूलप्रतिकूलानात्मकत्वं गृह्यते । द्वितीयादिशब्देन भोगाभावः । तदभावेन–सप्रतिसम्बन्धिकत्वाभावेनेत्यर्थः । अभ्युपगम्याप्याह उपपत्तौवेति । आनुकूल्यादिकम् प्रतिसम्बन्धिभेदेन व्यवस्थितमिति भावः । अव्यवस्थितेति पदच्छेदः ।

ननु प्रमाणत्वेऽपि यदि बाध्यत्वं तदा विपरीतो बाध्यबाधकभावः कुतो न स्यात; तथा च कथं निर्गुणत्वं तात्त्विकमित्यत आह अपच्छेदनयेनेति । पौर्वापर्येति । न हि सगुणनिर्गुणवाक्ययोः पाठक्रमोऽस्तीति भावः । निमित्तेति । मात्रपदेन पाठक्रमो व्यावर्त्यते । निमित्तपौर्वापर्यस्याप्यत्राभावात् कथमपच्छेदनयावतार इत्यत आह अत्रापीति । प्रमाणपौर्वापर्यमात्रम् हि तन्न्यायापेक्षितम्, तच्च निमित्तपौर्वापर्यादिव प्रकारान्तरेणापीति भावः । तत्रेति । अपच्छेदे प्रयोगान्तरे प्रामाण्यं सम्भवात् । सगुणवाक्यानामपि वक्ष्यमाणरीत्या तदुभयव्यावृत्त्यर्थमत्यन्त पदम् ।

ननु सगुणवाक्यानामप्यत्यन्ताप्रामाण्यं स्यात्, न च व्यावहारिकविषयतया प्रामाण्यम् । मिथ्यार्थप्रतिपादने प्रयोजनाभावेन तात्पर्याभावात्तत्राप्रामाण्यात्, सत्यत्व तु तेतत्वज्ञानेन मोक्षफलसम्भवादित्यत आह अत्रत्विति ।

अतएव नवमोऽपि दशोत्तरः, अस्मत्सिद्धान्तनीतिमन्तरेणोभयप्रमाण्यनिर्वाहासिद्धेः । उभयाप्रामाण्यस्य वैदिकैः सामान्यतस्तावदनभ्युपगमात् । उभयोरप्यन्यपरत्ववादिनां

निरीश्वरमीमांसकनिगमतरुवन्दकानां सिद्धार्थतात्पर्यसमर्थनादिभिरुन्मूलितत्वात् । अन्यतराप्रामाण्यपक्षेऽप्यन्ततोऽस्मन्नयमन्तरेण गत्यभावात् । न हि निर्गुणवाक्यमेव बाधितुम् युक्तम्, तदुपदेशनैष्फल्यप्रसंगात् । न च स्वरूपपराणां वाक्यानामुपासनविधिशेषत्वेन यथाकथञ्चन नेयता शङ्क्या, अस्मन्तराद्धान्तापराध प्रसंगात् । अतः पारिशेष्यान्निर्गुण वाक्यैः सगुणवाक्यानामेव बाधः ।

प्रसाद—आठवें विकल्प के खण्डन से ही नवें विकल्प का भी उत्तर हो गया। क्योंकि हमारे सिद्धान्ताभिमत नीति को अपनाए विना दोनों प्रकार की श्रुतियों का प्रामाण्य सिद्ध नहीं हो सकता है। और वैदिक जनता दोनों में से किसी प्रकार की श्रुति का अप्रामाण्य नहीं मानती। ईश्वर को नहीं मानने वाले मीमांसक दोनों प्रकार की श्रुतियों को ब्रह्म परक नहीं मानते हैं। उन मीमांसकों के पीठूओं को तो इसीसे उन्मूलन हो गया जब कि शारीरक मीमांसा भाष्य में, श्रुति वाक्यों का तात्पर्य सिद्ध ब्रह्म के प्रतिपादन में है, इस बात का समर्थ कर दिया गया। दोनों में से एक प्रकार की श्रुति का प्रामाण्य सिद्ध करने के लिए भी अद्वैताभिमत नीतियों को अपनाना होगा। यह भी नहीं कहा जा सकता है कि निर्गुण वाक्यों का सगुण वाक्यों से बाध माना जाय, क्योंकि ऐसा मानने पर निर्गुण वाक्योपदेश के वैयर्थ्य का प्रसङ्ग होगा। स्वरूप के प्रतिपादक निर्गुण वाक्यों को उपासनापरक विधि वाक्यों का शेष मानकर इनके किसी प्रकारसे निर्वाह की शङ्का नहीं की जा सकती है। ऐसा करने पर वेदान्त सिद्धान्त के विरोध का प्रसङ्ग होगा। अतएव परिशेषात् निर्गुण वाक्यों द्वारा सगुण वाक्यों का बाध स्वीकारना होगा।

निर्गुणत्वस्य तात्त्विकत्वासिद्धिमात्रे अभिनिवेशवतः शङ्कां परिहरति उभ..ेति । उक्ताभिनिवेशत एव कर्मविधिशेषतया आन्यपर्यशङ्का परिहरति उभयोरिति । तन्वन्यतरदेव..तु प्रमाणम्, एवंचोभयोः प्रामाण्यनिर्वाहाय न त्वत्सिद्धान्तानुसरणम; तथाच निर्गुणवाक्यस्यैवा-प्रामाण्यसम्भवान्न सगुणत्वविरोध इत्यत्राह अन्यतरेति । तदुपदेशेति । नचेष्टापत्तिः, "तमेव विदित्वातिमृत्युमेति" "तमेवैकं जानथात्मानं" "एकधैवानुद्रष्टव्यमि" त्यादिना निर्गुणज्ञानान्मोक्षश्रवणात्, नच सगुणवाक्यानामप्यप्रामाण्ये नैष्फल्यप्रसङ्गदोषः; तत्र फलाश्रवणेन इष्टापादनत्वात् । न च तदुपासनादपि फलम् श्रूयत इति वाच्यम, तथासत्यारोपितेनापि उपासनोपपत्त्या गुणानां तात्त्विकत्वासिद्ध्या तेन निर्गुणवाक्यस्य बाधायोगादिति भावः ।

नन्वस्तूभयोः प्रामाण्यम; तथापि निर्गुणवाक्यानां उपासनाविधिशेषतया प्रामाण्यम् सगुणवाक्यानां तत्त्वपरतयेति विपरीतम् कुतो नेष्यत इत्याशंक्य निराकरोति नचेति । निर्गुण-ज्ञानस्य हि ब्रह्मैक्यावाप्तिः फलमिति राद्धान्तः; तत्फलश्रवणात, न च तत्त्वतो यद्भिन्नम् तेनाभेदः सम्भवति, तथाचाभिन्नस्यैवाभेदः फलमिति वाच्यम, इदं च न भेदमिथ्यात्वमन्तरेण, न च मिथ्याभूतभेदोपमर्देन पूर्वसिद्धा भेदावाप्तिस्तत्त्वज्ञानादन्येन भवति, अतस्तादृशफलहेतुज्ञानं तत्त्वज्ञानमेव—तत्त्वारोपितविषयमुपासनमिति निर्गुणवाक्यस्य नोपासनविधिशेषतासम्भव इति भावः ।

यद्यपि सत्यज्ञानादिवाक्यं स्वरूपपरमपि सामानाधिकरण्यधर्माण्यं (ण्यं पदसाधारण्यं) शरण्यद्भिः भवद्भिस्तत्तत्प्रवृत्तिनिमित्तविशिष्टस्वरूपपरमित्युपपादितम्, तथापि ज्ञानानन्दादिशब्दावगतं ब्रह्मस्वरूपं न ज्ञातृत्वानन्दत्वादिविशेषसहमित्युप (पनी) पद्यते । न हि ज्ञानस्य ज्ञानम् आनन्दस्यानन्दो वा गुणपक्षपातिभिरपि भवद्भिरभ्युपजिगांस्यते । अतः शब्दादर्थाच्च गुणनिषेधसिद्धिः । न च वाच्यं सुखमात्ररूपत्वे तद्भावापत्तेर्मोक्षस्य पुरुषार्थता न स्यात् , न हि सुखं स्यामिति कश्चिदिच्छति , अपि तु सुखी स्यामित्येव, अतः सुखसम्बन्धेन वैशिष्ट्यमवर्जनीयमिति । सुखापरोक्षमात्रेण पुरुषार्थतासिद्धौ सम्बन्धस्याप्रयोजकस्य कल्पनायोगात् ॥

द्रव्यत्वोपादानत्वादिभिः सगुणत्वमनुमीयत इति चेन्न—द्रव्यशब्देन वस्तुत्वादिमात्रविवक्षायां मुख्यामुख्यविकल्पेन दोषात् , अन्ततस्योरपि परिहरणीयत्वात । एतेनोपादानत्वमपि निरस्तम् , आत्मत्वेप्यात्मभेदानभ्युपगमात दृष्टान्तहीनम् । तथा आत्मशब्देन आत्मत्वजाति–चैतन्यादिगुणविशिष्टाकारविवक्षायामसिद्धः । ज्ञानत्वविवक्षायामप्रयोजकत्वं विरोधो वा । एवमन्यदपि दूष्यम् । न च वाच्यम् ; अहं जानामीत्यादिप्रत्यक्षेणैव बुद्धिसुखादिविशिष्ट एवात्मा प्रतीयत इति–तत्तद्वृत्तिविशेषविशिष्टस्यैवाहङ्कारस्य तथा प्रतीतेः । अन्यथा स्थूलोऽहमित्यादिप्रत्यक्षेण स्थौल्यादिगुणवैशिष्ट्यस्यापि प्रसङ्गात , देहव्यतिरेकसाधनात तन्निषेधे अहङ्कारव्यतिरेकसाधनात तद्धर्मनिषेधस्यापि सिद्धेः ।

अतः प्रत्यक्षाद्यप्राप्तार्थप्रतिपादकनिर्गुणश्रुतिसामर्थ्यादेव निर्गुणे ब्रह्मणि सिद्धे, मायावच्छिन्न मिथ्यागुणविशिष्टेश्वरगोचराः सगुणश्रुतय इति ॥

प्रसाद—किञ्च यद्यपि 'सत्यंज्ञानम्' इत्यादि सामानाधिकरण्य वाक्यों को स्वरूप परक मानने वाले आप लोग भी मानते हैं कि ये सामानाधिकरण्य वाक्य तत्–तत् प्रवृत्ति निमित्त से विशिष्ट स्वरूप का ही प्रतिपादन करते हैं, फिर भी शब्दों के द्वारा ज्ञात ब्रह्म का स्वरूप सत्यत्व; ज्ञानत्व आदि से विशिष्ठ है; इस बात का प्रतिपादन ये वाक्य नहीं करते हैं । ब्रह्म में गुणों के पक्षपाती आप लोग भी ज्ञान का ज्ञानवान् तथा आनन्द का आनन्दवान् अर्थ नहीं मानते हैं । इस तरह ब्रह्मके गुणोंका निषेध श्रुतिके शब्दतः तथा अर्थतः दोनों प्रकार से हो जाता है । यदि कहें कि ब्रह्म को सुख स्वरूप मानने पर मुक्तावस्था में ब्रह्म भावापत्ति होने से सुखस्वरूप हो जाने के कारण मोक्ष पुरुषार्थ नहीं सिद्ध हो पायेगा , क्योंकि कोई भी यह नहीं चाहता है कि मैं सुख हो जाऊँ; अपितु सब लोग सुखी होना चाहते हैं । अतएव स्वरूप को सुख विशिष्ट अवश्य मानना चाहिए । तो यह भी नहीं कहा जा सकता है, क्योंकि सुख के साक्षात्कार मात्र से पुरुषार्थता की सिद्धि हो जाने से, स्वरूप में सुख के सम्बन्ध रूपी प्रयोजक की कल्पना अनावश्यक

है। यदि कहें कि ब्रह्म जगत् का उपादान कारण है। जो उपादान होता है, वह द्रव्य अवश्य होता है। उपादान द्रव्य आगन्तुक तथा अपृथक् सिद्ध धर्मों का आश्रय होता है। इस तरह ब्रह्म के उपादानत्व एवं द्रव्यत्व हेतु के द्वारा उसके विशिष्टत्व का हम अनुमान करते हैं, तो यह भी नहीं कह सकते हैं, क्योंकि यदि द्रव्य शब्द के द्वारा आपको वस्तुत्व मात्र अपेक्षित है; तो प्रश्न है कि वह वस्तुत्वादि मुख्य है कि अमुख्य और अन्तमें इन दोनों में से कोई भी कल्प उपपन्न नहीं हो पायेगा। इसी तरह उपादानत्व हेतु के द्वारा भी ब्रह्म की विशिष्टता का अनुमान असम्भव है, आत्मत्व हेतु के द्वारा भी उसकी विशिष्टता का अनुमान इसलिए नहीं किया जा सकता है; कि हम दूसरी आत्मा स्वीकारते ही नहीं, अतएव यह दृष्टान्त विकल अनुमान होगा। किञ्च आत्मा शब्द के द्वारा आत्मतत्व जाति को चैतन्यादि गुणों से विशिष्ट आकार रूप से सिद्धि ही नहीं हो सकती है। यदि आप को आत्मा शब्द से ज्ञानत्व विवक्षित हो तो फिर इससे विशिष्ट वादियों के मत का विरोध होगा, किञ्च वह आत्मत्व हेतु विशिष्टता साधक नहीं हो सकता है। इस तरह विशिष्टता विषयक दूसरे विचार भी दूषणीय हैं। यहाँ पर यह भी नहीं कहा जा सकता है कि, 'मैं जानता हूँ' इत्यादि प्रत्यक्ष के द्वारा ही आत्मा बुद्धि तथा सुख आदि से विशिष्ट प्रतीत होती है। क्यों कि वह जो प्रतीति होती है, वह विभिन्न वृत्तियों से विशिष्ट अहङ्कारकी प्रतीति होती है; आत्मा की नहीं। यदि यह न मानें तो; मैं स्थूल हूँ, इत्यादि रूपसे होने वाली प्रतीतियों के बल पर आत्मा के स्थूलत्वादि विशिष्ट होने का प्रसङ्ग होगा। यदि आत्मा के देहादि व्यतिरिक्त होने से उसके स्थूलत्वादि विशिष्टता का निषेध कहें तो आत्मा में अहङ्कार व्यतिरिक्त होने से उसके ज्ञान सुखादि विशिष्टता का निषेध हो जायेगा। अतएव प्रत्यक्षादि प्रमाणों से असिद्ध आत्मा की प्रतिपादिका निर्गुण श्रुति सामर्थ्य के द्वारा ही निर्गुण ब्रह्म की सिद्धि हो जाने पर, यह सिद्ध होता है कि सगुण श्रुतियों का विषय मायावच्छिन्न चैतन्य मिथ्या गुण विशिष्ट ईश्वर हैं।

ननु "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्यादिवाक्यानामुपासनपरत्वाभावस्य सर्वसम्प्रतिपन्नत्वात् सामानाधिकरण्यनिर्वाहाय त्रैगुण्यसिद्धिरनिवार्येत्यत आह यद्यपीति। निर्विशेषपरमेव सविशेषपरत्वेन यद्यपि सामानाधिकरण्यबलादुच्यते, अत्रापि सामानाधिकरण्यस्यान्यथोपपन्नत्वादर्थतो गुणनिषेधप्रतीतेश्च गुणनिषेधपरत्वमेव सत्यादिवाक्यस्य अन्यथासिद्धिश्चाखण्डार्थसाधने द्रष्टव्येति भावः। शब्दादिति दृष्टान्तार्थम्। यद्वा शब्दतो गुणनिषेधकश्रुतिभिर्बाधमुक्त्वा अर्थतो गुणनिषेधकश्रुत्यादि सार्वज्ञ्यादिगुणश्रुतेर्बाधमाह यद्यपीत्यादिना। वस्तुतोऽखण्डार्थवादोक्तरीत्या स्वरूपपरमेवेदम्, त्वदुक्तन्यायेन विशिष्टपरत्वाभ्युपगमेऽपि ज्ञानानन्दादिगुणनिषेधासिद्धेः, सिद्ध इत्यर्थः। उक्तमुभयथा गुणनिषेधमुपसंहरति अतः शब्दादिति। आर्थनिषेधो हि तर्कमूलः, तस्मिंश्च तर्के बलवत्प्रतितर्के निरस्ते श्रुतेरार्थनिषेधपरत्वमेवासिद्धमिति शङ्कां निराकरोति नचेति। सुखमात्रेति। ब्रह्मणः सुखित्वे तदभेदे सत्यापि सुखावाप्तेस्तद्भावापत्तिः पुरुषार्थो भवति, सुखरूपत्वे तु ब्रह्माभेदेऽपि सुखाव्याप्तेः पुरुषार्थो न स्यादित्यर्थः। वैशिष्ट्यम्-विशिष्टत्वम्, सविशेषत्वमित्यर्थः। सुखापरोक्षमात्रेणेति आपरोक्ष्यम्-अपरोक्षम्, स्वार्थेष्यञ् आत्मनः सुखापरोक्ष्यमात्रेण सुखस्य पुरुषार्थतासिद्धौ सुखसम्बन्धः पुरुषार्थतायामप्रयोजकः, तथाच ब्रह्मणि तत्कल्पनमयुक्तमित्यर्थः। नचैवमपि सुखापरोक्ष्यसम्बन्धाभ्युपगमप्रसङ्गः सर्वत्र ज्ञानस्यात्मस्वरूपत्वसमर्थनात्, यं प्रति सुखमपरोक्षं तं प्रति पुरुषार्थः, तच्चाभेदेऽप्यविरुद्धम्; निर्गुणश्रुते-

स्तर्कसहकृतसगुणश्रुत्या बाध इत्यभिप्रायेण शङ्कते द्रव्यत्वेति । आत्मत्वमिति । अभेदे दृष्टान्तत्वा सम्भवात् ब्रह्मभिन्नो जीवो दृष्टान्तो वाच्यः ; तादृशस्य चानभ्युपगमाद्दृष्टान्तहीनमित्यर्थः । विरोधोवेति । ज्ञानत्वस्य गुणाभावव्याप्तेर्घटज्ञानादिषु दर्शनाद्विरुद्धो हेतुरित्यर्थः ।

ननु ईश्वरः सदावाप्तसमस्तकल्याणगुणः तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् , ब्रह्म स्वज्ञानाबाध्यधर्मवत् विचार्यत्वादित्यादिकमाशङ्क्य निराकरोति एवमन्यदपीति । प्रेप्सावत्वे प्रमाणाभावात् प्रथमहेतोरसिद्धिः ; सत्तानवधारणात्मकस्वरूपज्ञानादेव विचारोपपत्तेः स्वरूपसत्तानिश्चयस्यैव विचारफलत्वोपपत्तेश्च द्वितीयहेतोरप्रयोजकतेति भावः । प्रत्यक्षविरोधान्निर्गुणश्रुतिर्दुर्बलेत्यभिप्रायवतः शङ्कान्निराकरोति न च वाच्यमिति । तत्तद्वृत्तिः-बुद्धिसुखदुःखाद्यात्मवृत्तिः । अन्यथेति । एतादृशप्रतीतिबलात्तत्सिद्धावित्यर्थः । अहंकारव्यतिरेकेति । नचासमर्थस्य द्विरुपत्वादात्मधर्म एवाहंकार प्रतीयत इति कुतो न स्यादिति वाच्यम् , "कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे" ति श्रुत्याहंकारधर्मत्वसिद्धेरित्यभिभावात् । निर्गुणश्रुतेः प्राबल्ये कारणान्तरं यदन्नेनोपसंहरति अत इति । प्रत्यक्षाद्यप्राप्तेति । सर्वज्ञत्वादिकं तु जगत्कारणत्वाद्याक्षिप्तमिति न तत्र श्रुतेस्तात्पर्यम् , सगुणवादिनैव सगुणत्वे प्रत्यक्षाद्युपन्यासाच्च न श्रुतेस्तत्र तात्पर्यमिति भावः ।

सिद्धान्तः-अत्रोच्यते-यदुक्तं सगुणनिर्गुणश्रुतीनामाश्रयभेदादिना निर्वाहे दूषणम् , तदस्माकमपीष्टमेव । यत्तु विधेयनिषेध्यभेदेन विषयव्यवस्थायामुक्तम् ; 'असंकुचितनिर्वाहे सति सङ्कोचोऽनुपपन्नः' इति , तत् तदा शोभते , यदि सगुणश्रुतिबाधमन्तरेणासंकुचितनिर्वाहः स्यात् । बाधात् सङ्कोच एव न्याय्यः ।। संकोचोऽपि क्वचित्कबाध एवेति चेत् ; सत्यम् , न तु सार्वत्रिकः , तत एव तस्य संग्रहणीयता । अन्यथा उत्सर्गापवादनय एव निर्मूलः स्यात् । यच्चोक्तमपच्छेदनयेन प्रमाणत्वेऽपि बाध्यत्वमुपपद्यत इति, तदपि मीमांसामांसलितचेतसां जुगुप्सनीयम् । अनियतविरोधपौर्वापर्ये ह्यपच्छेदनयः । अन्यतरापच्छेदे बाधकाभावेन प्रामाण्यसिद्धेः , युगपदपच्छेदे विकल्पत उभयोः प्रामाण्यसम्भवात् क्रमेणापच्छेद एव केवलं "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति" इति न्यायेन पूर्वबाधः ! तथापि प्रयोगान्तरे प्रामाण्यं सिध्यत्येव , नियतविरोधपौर्वापर्ये तूपक्रमाधिकरणन्यायेन परानुत्पत्तिरेव / ततश्चोत्सर्गापवादन्यायस्यैव सगुणनिर्गुणश्रुत्योर्विषयता । अतो विहितव्यतिरिक्तगुणविषयो निषेधः ।

प्रसाद—उपर्युक्त पूर्वपक्ष का यहाँ से उत्तर दिया जा रहा है । अद्वैती विद्वानों ने सगुण एवं निर्गुण श्रुतियों के आश्रय भेदादि के द्वारा, विषय व्यवस्था का जो खण्डन किया है वह हमें भी अभिप्रेत है । विधेय एवं निषेध्य के भेद से विषय व्यवस्था के विषय में अद्वैती विद्वानों ने यह जो कहा है कि,

निर्गुण श्रुतियों का असंकुचित निर्वाह सम्भव होने पर उनका संकुचित निर्वाह मानना अनुपपन्न है । तो उनका यह कथन तब अच्छा लगता ; जब कि सगुण श्रुतियों के बाध के बिना ही निर्गुण श्रुतियों का असंकुचित निर्वाह होता । सगुण श्रुतियों का बाध होने पर तो उनका सङ्कोच ही उचित है । यदि कहें कि निर्गुण श्रुतियों में सर्वत्र सङ्कोच करना उचित नहीं होगा , तो आपका यह कहना ठीक ही है, क्यों कि सार्वत्रिक संकोच मानने पर तो उनकी संग्रहणीयता ही समाप्त हो जायेगी । यदि ऐसा नहीं मानें तो उत्सर्गापवादन्याय का मूल ही समाप्त हो जायेगा । अद्वैती विद्वानों ने यह जो कहा है कि अपच्छेदापवाद न्याय के द्वारा सगुण श्रुतियों का प्रामाण्य रहने पर भी बाध्यत्व उपपन्न होता है, उनका यह भी कहना मीमांसाभिज्ञों के लिए निन्दनीय ही है । अपच्छेदन्याय की प्रवृत्ति वहीं होती है, जहाँ पर विरोध तथा पौर्वापर्य का निश्चय नहीं होता है । दोनों में से किसी एक का अपच्छेद (बाध ) होने में किसी बाधक के न रहने के कारण प्रामाण्य की सिद्धि हो जाने से समकाल में ही अपच्छेद होने पर विकल्प होने के कारण दोनों का प्रामाण्य सम्भव होने से, क्रमशः ही अपच्छेद होता है । इस तरह 'पूर्वाभावेहि नोत्पत्ति-रुत्तरस्य सिद्धयति' इस सूत्र के द्वारा केवल पूर्व का ही बाध सिद्ध होता है । फिर भी दूसरे भाग में अपच्छेदन्याय के द्वारा बाधित का भी प्रामाण्य होता है । जहाँ पर विरोध तथा पौर्वापर्य दोनों निश्चित होते हैं वहाँ पर अपच्छेदन्याय की प्रवृति न होकर उपक्रमाधिकरण के अनुसार पर की अनुत्पत्ति होती है अतएव सगुणतथा निर्गुण श्रुतियाँ उत्सर्गापवाद नियम का विषय हैं । इस तरह विधित्सित दिव्य गुणों से भिन्न गुणों का ही निषेध निर्गुण श्रुतियाँ करती हैं ।

अन्यथेति । सार्वत्रिकबाधस्य सङ्कोचादपि ग्राह्यत्वे हिंसा निषेधकश्रुत्यसङ्कोचाय पश्वालम्भश्रुतेर्बाधः स्यादित्यर्थः ।

ननु सगुणवाक्यस्य सार्वत्रिकबाधेऽपि व्यावहारिकविषयतया सर्वत्र स्वविषये प्रामाण्यं सम्भवति, संकोचे तु निर्गुणवाक्यस्य यस्मात् सङ्कोचः तत्र न कथं चिदपि प्रामाण्यमिति बाधात् सङ्कोचाद्बाध एवात्र न्याय्यः; हिंसावाक्यस्य तु अत्यन्तबाधे न कथञ्चिदपि प्रामाण्यम् , प्रातिभासिकस्य विधानायोग्यत्वात् , अहिंसा वाक्यसङ्कोचे तु प्रामाण्यमिति बाधात् संकोचस्तत्र न्याय्यः, इति चेत् , उच्यते, सगुणवाक्यानां बाधे तेषामुत्सर्गप्राप्त तत्त्वावेदकत्वलक्षणप्रामाण्यं हीयेत , निर्गुणवाक्यानाम् सङ्कोचे सर्वेषां सगुणनिर्गुणवाक्यानां तत्त्वावेदकत्वमेव सिध्यति , तत्त्वावेदकत्वं यदि नौत्सर्गिकं तदा निर्गुणवाक्यानामपि तत्त्वावेदकता न स्यात् ।

ननु निर्गुणवाक्यानां संकोचे यस्मात् संकोचः तत्र प्रामाण्यं न स्यादिति चेत् ; एवमपि सर्ववाक्यानां तत्त्वावेदकत्वसिद्धये तदपि सोढव्यमेव । किञ्च यदि तत्राप्रामाण्यं दोषः तर्हि निर्गुणवाक्यानां गुणविषये प्रामाण्याभावेऽपि दोष स्यात् ।

ननु तद्वाक्यार्थतया प्रतीयमाने अप्रामाण्यम् दोष इति चेन्न ,—लक्षणाद्युच्छेद प्रसङ्गात् । तस्मान्निर्गुणवाक्य निषेधप्रतियोगिपदसंकोचमात्रं सर्वेषां प्रामाण्यसिद्ध्यै युक्तम ।

ननु सगुणवाक्यानां निषेध्यानुवादकत्वेन निषेधतात्पर्यात्तत्त्वावेदकत्वमस्तु, आह च नवीनः "एकवाक्यत्वस्याभ्यर्हितत्वात् सगुणवाक्यानां गुणानुवादकतया निर्गुणवाक्यैरेकवाक्यत्वमेव युक्तम् , किञ्च परमते क्वचित्प्रमितब्रह्मानुवादेन किं तत्र सर्वज्ञत्वादिगुणा विधीयन्ते ?

किंवारुणैकहायनीन्यायेन युगपत्सर्वगुणविशिष्टम् ब्रह्म वेदान्तैः प्रतीयते ? नाद्यः ; उद्दिश्यानेकगुणविधाने वाक्यभेदप्रसङ्गात् , चित्राध्ययनयवत् , तत्र हि "चित्रया यजेत पशुकाम" इत्यादिवाक्ये अग्निषोमीयपशूद्देशेन गुणविधिमाशंक्य उद्दिश्य स्त्रीत्वचित्रत्वगुणद्वयविधौ वाक्यभेदात् नामधेयत्वं चित्रापदस्य समर्थितम् , नापि द्वितीयः , अगृहीते ब्रह्मपदार्थे वाक्यार्थप्रतिपत्तेर योगेन सत्यादिवाक्येन तत्प्राप्तेर्वाच्यतया ब्रह्मपदेन तदनूद्य सार्वज्ञ्यादि विधानमित्येव स्यात् , न तु विशिष्टविधानम् , यथा च वाक्भेदो दुर्वारः , किञ्च प्रयोजनाभावात् श्रुतेर्न गुणे तात्पर्यम् , निर्गुणज्ञानस्य तु मोक्षः फलम् , जगत्कारणत्वाद्याक्षिप्तत्वाच्च न सर्वज्ञत्वादिश्रुतेस्तत्र तात्पर्यमिति निषेधार्थत्वमेव युक्त" मिति; तन्न, तथा सति ब्रह्मणि सार्वज्ञ्यादीनां व्यावहारिकत्वस्याप्यसिद्धिप्रसङ्गात् ।

ननु क्वचिद्विद्यमानस्यैव निषेधात् सार्वज्ञ्यादेश्चान्यत्रासम्भवात् ब्रह्मण्येव विद्यमानता वाच्येति चेन्न,-सर्वविषयकैकज्ञानाप्रसिद्धावपि तत्तद्वस्तुज्ञानानां प्रसिद्धतया तत्समुदायनिषेधोपपत्तेः । किञ्च "अथात आदेशो नेति नेति" इति निषेधेन सत्यादिवाक्यमनुवादतया एकवाक्यम् स्यात् , तथा च शून्यवादावतारः । किञ्च अप्राप्तत्वाच्च ब्रह्मणि गुणानां नानुवादः , जगत्कारणत्वादिना कथञ्चित्सार्वज्ञ्यादिप्राप्तावपीतरेषामप्राप्तेस्तेषामपि स्वाभाविकत्वाद्यप्राप्तेश्च । अन्यथा अनुभूति र्निर्विशेषेत्याद्यनुमानैस्त्वदुक्तधर्मधर्मिभावखण्डहेतकैश्च निर्गुणत्वस्यापि प्राप्ततया तद्विधानमनुपपन्नम् । प्रत्युत निर्गुणत्वसाधकतर्काणां प्राबल्यस्य त्वदाभमतत्वात् सगुणत्वस्य न्यायाप्राप्तत्वात् तात्पर्यं युक्तम् । किञ्चाधिष्ठानत्वाक्षिप्ते ब्रह्मणः सत्यत्वे ज्ञाननिवर्त्यत्वाक्षिप्ते जगतो मिथ्यात्वे जीवब्रह्मणोरभेदे च श्रुतेस्तात्पर्याभावप्रसङ्गः । एवञ्च यदुक्तम् सार्वज्ञवाक्यं जगत्कारणस्य ज्ञप्तिस्वरूपप्रतिपादनार्थं मिति तदपि न स्यात् , प्रपञ्चमिथ्यात्वेन ब्रह्मणो वित्तिरूपस्याक्षेपात् । न हि वित्तेर्ब्रह्मस्वरूपाद्यन्यत्वे ब्रह्मसिद्धिसम्भवः, तस्या अपि मिथ्यात्वात् ।

यच्चोक्तम् प्रयोजनाभावान्न श्रुतेर्गुणे तात्पर्यमिति । तन्न, ब्रह्मणः फलप्रदत्वौपयिकगुणप्रतिपादनेन ब्रह्मोपासने प्रवृत्त्यौत्कट्यसिद्धेः । एवं प्राप्योत्कर्षत्वाच्च सार्वज्ञ्यादेः तज्ज्ञाने प्रवृत्त्यौत्कट्यसिद्धिः । सार्वज्ञ्यादेरुपास्यत्वाच्च तत्प्रतिपादनं सप्रयोजनमेव । "तमेव विदित्वे" त्येवव्यवच्छेदान्न तस्योपास्यतेति चेत , सजातीयदेवतान्तरस्यैव निषेधात् , "त" मिति प्रकृतकारणत्वादिगुण विशिष्टस्यैव ब्रह्मणः परामर्शात् ; " तमेवम् विद्वानमृत " इत्येवशब्देन प्रकृत प्रकारपरामर्शाच्च ।

यदुक्तम् अत्रापि 'पुरुष एवेदं सर्व' मिति प्रस्तुतसार्वात्म्यमेवशब्दार्थः, विराडादिप्रपञ्च सृष्टेः तदर्थमेवाभिधानात् , यच्च सार्वात्म्यं जडप्रपञ्चस्य परमार्थत्वे चिद्रूपात्मनो वस्तुतस्तद्भावत्यायोगात् मिथ्याप्रपंचस्य अधिष्ठानब्रह्मभासतया परिशेषादेव भवति, अन्यथा प्रस्तुतपृथिव्यादिज्ञानस्यापि मुक्तिहेतुत्वाभिधाने "तमेवे" त्येवकारविरोधादिति । तन्न, किं "पुरुषएवे" ति अधिष्ठानत्व प्रयुक्तं सर्वतादात्म्यमेव प्रतिपाद्यते ? किं वा सार्वात्म्योपपादकसर्वाधिष्ठानत्वसिद्धं सर्वाभावस्वरूपम् ? आद्ये अतत्त्वावेदकत्वं स्यात् ; तस्यैव "एवं विद्वा" निति परामर्शादतत्त्वज्ञानान्मो-

क्षश्च । द्वितीये अनेन वाक्येन ब्रह्मस्वरूपे कस्यचिद्विशेषस्याप्रतिपन्नत्व "एव" मिति परामर्शासम्भवः । स्वरूपमात्रपरामर्शश्च 'त' मित्येव सिद्धः । अशक्यश्च प्रकारवाचिना एवशब्देन स्वरूपपरामर्शः ।

ननु माभूद्गुणश्रुतिरनुवादः, किन्तु विधिरेव, एवं च निषेधस्य प्रसञ्ज साकांक्षतया गुणविधायकानामपि निषेध्यगुणप्रसञ्जनमुखेन निषेधतात्पर्यकतया निषेधैकवाक्यत्वेन तत्त्वावेदकत्वमिति चेन्न,—पश्वालम्भवाक्यस्यापि प्रसञ्जकत्वप्रसङ्गात् । प्रसञ्जकान्तरसद्भावस्तु उभयत्र तुल्यः व्यर्थहिंसाया इवात्रापि हेयगुणानां प्रसक्तत्वात् । हेयगुणप्रसक्तिश्चात्मत्वादिसाधारणधर्मात् । सार्वज्ञ्यादीनामप्रसक्तत्वात् तत्प्रसक्त्यर्थं सगुणवाक्यमिति यदि, तद अग्नीषोमीयपश्वालम्भस्याप्रसक्त त्वात् तत्प्रसक्त्यर्थं तद्वाक्यमित्यपि तुल्यम् । सार्वज्ञत्वादिकं कारणत्वेन प्रसक्तमिति त्वयैवाभिहितम् । किंच यदि सार्वज्ञ्यादिकमप्रसक्तम् तर्हि प्रक्षालनादितिन्यायेनाप्रसञ्जनमेव वरम् । किंचैवं 'नेति नेती' ति निषेधार्थं सत्यादिवाक्यस्य प्रसञ्जकत्वेनैक वाक्यत्वम् स्यात् । तस्मान्न निषेधैकवाक्यत्वसम्भवः ।

किन्तर्हि निर्गुणश्रुतेरत्यन्तबाध एवेष्यत इत्याकांक्षायामाह ततश्चेति ।

यच्चोक्तं सगुणवाक्यानां मिथ्याविषयाणामपि दृष्टिविधिवत् फलविशेषार्थोपासनार्थतया प्रामाण्यमिति-तदपि न, तत्रैव मोक्षाख्यस्य फलस्य बहुलमुपलब्धेः । पुण्यपापप्रहाणपूर्वकस्वाभाविकरूपाविर्भावरूपफलविशेषस्य सांसारिकत्वोक्तिः साहसिकेभ्य एव स्वदते ॥ अस्तु तर्हि मिथ्यार्थविषयसगुणोपासनेनापि विधिबलान्मोक्ष इति चेन्न ; तथा सति निर्गुणवाक्यानामेव मिथ्यार्थविषयत्वकल्पनं किं न स्यात ? तत्त्ववेदनस्यैव मोक्षहेतुत्वमिति नियमनिष्कासनात् । तथाच तत्त्वोपदेशश्च निष्प्रयोजनः स्यात्, अन्यथापि मोक्षसिद्धेः । अतो विषयव्यवस्थयैवोभयप्रामाण्यसिद्धिः । अतो नवमस्य कल्पस्यानवतार एव ।

यत् पुनरुक्तं न ज्ञानम्, आनन्दस्यानन्दो वा जायटीतीत्यर्थतो गुणनिषेधसिद्धिरिति—(१) किं तत्र धर्मस्य धर्मान्तराभ्युपगमेनानवस्थादिरभिप्रेतः, (२) उतैकजातीययोर्धर्मधर्मिभावो नोपपद्यत इति ; (३) यद्वा ज्ञानानन्दाद्यवान्तरजातीयस्य तत्तदवान्तरजातीयाधारत्वं न दृष्टमिति, (४) अथ ज्ञानानन्दयोरज्ञानानन्दरूप एवाश्रयो दृष्ट इति ; (५) अथवा ज्ञानानन्दरूपस्यात्मनो ज्ञानानन्दादिकं शशादेरिव शृङ्गादिवमुपलम्भबाधितमिति ? नाऽऽद्यः ; अनुक्तोपालम्भरूपत्वात् । न हि वयं धर्मभूतचैतन्यादेः चैतन्यान्तरादिकं ब्रूमः । धर्मस्य चोपलम्भादेव धर्मान्तराभ्युपगमे कथमनवस्था ? नापि द्वितीयः ;

धर्मधर्मिणोः सर्वत्र सत्तादिभिर्यथाकथञ्चिदेकजातीयत्वावश्यम्भावात् । प्रभाप्रभावदादिषु विशेषतोऽपि सजातीययोर्धर्मधर्मिभावो दृष्टः । अवयविवादे च परमाणुद्व्यणुकादिष्वाश्रयिषु पार्थिवत्वादिविशेषसाजात्यमिष्टम् । नापि तृतीयः, अन्यत्राद्दष्टेरन्यत्र निषेधकत्वाभावात् । अन्यथाऽतिप्रसङ्गात् । तत्र दृष्टान्तेनानुमाने तु श्रुत्यादिबलेन कालात्ययापदेशात् नापि चतुर्थः, असिद्धेः । ननु किं ज्ञानतया आनन्दतया च ज्ञातोपलभ्यत इति चेत्-किं वा जडतया दुःखतया चोपलभ्यते ॥ तदपि नास्तीति चेत्; कस्तर्हि विरोधः ॥ सन्दिग्ध स्वरूपत्वमिति चेन्न, तावता विरोधहेतुत्वासिद्धेः । शास्त्रादिभिस्तु विशेषनिष्कर्षात् । पञ्चमस्तु प्रत्यक्षश्रुतिभ्यामेव प्रतिक्षिप्यत इति नानुपपत्तिं पश्यामः ।

प्रसाद—अद्वैती विद्वानों ने यह जो कहा है कि सगुण वाक्यों के विषय मिथ्या हैं, फिर भी उनका उपासनापरक होने से उसी तरह से प्रामाण्य है, जिस तरह फल विशेष के लिए उपदिष्ट दृष्टि विधियों का प्रामाण्य है; तो अद्वैती विद्वानों का उपर्युक्त कथन भी ठीक नहीं है; क्योंकि सगुण वाक्यों के ही प्रकरण में मोक्ष नामक फल की बहुलतया उपलब्धि होती है। अद्वैती विद्वानों का यह कथन भी उनका साहस मात्र है, कि सम्पूर्ण पापों के नाश पूर्वक स्वाभाविक स्वरूप का आविर्भाव रूप फलविशेष ससारान्तर्गत है। यदि कहें कि मिथ्या वस्तु विषयक सगुणोपासना के द्वारा भी मोक्ष होता है, यह बात विधि वाक्यों के बल पर सिद्ध होती है, तो यह कथन उचित नहीं है। मैं पूछता हूँ कि आप निर्गुण वाक्यों को ही मिथ्या वस्तु विषयक क्यों नहीं मानते हैं ? नियम भी है कि तत्वज्ञान ही मोक्ष का कारण है। विधि वाक्यों के बल पर सगुणोपासना को मोक्षप्रद मानने पर, आपके मत में तत्त्वोपदेश भी व्यर्थ हो जायेगा, क्योंकि तत्त्वोपदेश के विना भी सगुणोपासना द्वारा ही मोक्षावाप्ति की सिद्धि हो जाती है। अतएव विषय की व्यवस्था के द्वारा ही दोनों वाक्यों का प्रामाण्य सिद्ध हो सकता है।

अद्वैत विद्वानों ने यह जो कहा है कि ज्ञान का धर्म ज्ञान नहीं होता है; आनन्द का धर्म आनन्द नहीं होता। इस तरह अर्थतः भी ब्रह्म के गुणों का निषेध हो जाता है। यहाँ पर प्रष्टव्य है कि क्या आप यह कहना चाहते हैं कि (१) धर्म का भी धर्म मानने पर अनवस्था दोष होगा ? (२) अथवा यह कहना चाहते हैं कि एक जाति की वस्तुओं में धर्म-धर्मीभाव नहीं होता है ? (३) अथवा यह कि ज्ञान एवम् आनन्द आदि भिन्न जाति की वस्तु एवम् भिन्न जाति की वस्तु से विशिष्ट नही होती हैं ? (४) अथवा यह कहना हैं आपका कि ज्ञान एवम् आनन्द का आश्रय अज्ञानानन्द ही होता है ? (५) या यह कहना चाहते हैं कि ज्ञानानन्द स्वरूप आत्मा के ज्ञानानन्दादि शशादि के शृङ्गादि के समान अत्यन्त अनुपलब्ध हैं। इनमें प्रथम पक्ष इसलिए नहीं माना जा सकता है कि हम स्वयम् इसे नहीं मानते। हम धर्मभूतज्ञान का ज्ञानान्तर नहीं स्वीकारते हैं। यदि किसी धर्म के धर्मान्तर की उपलब्धि होती है तो फिर अनवस्था दोष कैसे होगा ? दूसरा विकल्प इसलिए नहीं माना जा सकता है कि धर्म एवम् धर्मी में सर्वत्र सत्ता आदि के द्वारा किसी न किसी प्रकार एक जातीयता अवश्य होती है। प्रभा एवम् प्रभावान् में विशेष रूप से भी धर्म धर्मीभाव देखा जाता है। अवयवी स्वीकार करने वाले वैशेषिकों के भी मत में परमाणु के आश्रय द्व्यणुकादि में विशेष रूप से सजातीयता स्वीकारी जाती है। तीसरा पक्ष इसलिए नही

माना जा सकता है कि, अन्यत्राभिप्रेत दृष्टिका अन्य स्थल में निषेध नहीं किया जा सकता है । अन्यथा शशशृङ्ग की अनुपलब्धि के द्वारा शश के समान गौ में शृङ्गानुपलब्धि का प्रसङ्ग होगा । दृष्टान्त मुखेन ब्रह्म का निर्गुणत्वानुमान करने पर हेतु 'यः सर्वज्ञः' इत्यादि श्रुति के द्वारा कालात्ययापदिष्ट हेतु होगा । चौथे विकल्प इसलिए नहीं स्वीकारा जा सकता है कि उसकी सिद्धि ही नहीं हो सकती है । यदि पूछें कि क्या ज्ञान और आनन्द रूप से ज्ञान की उपलब्धि होती है ? तो इसका उत्तर है कि क्या ज्ञान की जड और दुःख रूप से उपलब्धि होती है ? यदि नहीं होती है तो फिर उसमें कौन सा विरोध है । यदि ज्ञान की संदिग्ध स्वरूपता मानें तो, इससे विरोध तो होता नहीं । और आनन्दो ब्रह्म' 'आनन्दम् ब्रह्मणो विद्वान्' इत्यादि श्रुतियाँ ब्रह्म को गुण विशिष्ट रूप से स्पष्टतया बतलाती हैं । पांचवें विकल्प का बाध तो प्रत्यक्ष एवम् श्रुति द्वारा ही हो जाता है , अतएव एक ही ब्रह्म में सगुण एवम् निर्गुण श्रुतियों के विषय-व्यवस्था में तथा ज्ञानानन्दादि स्वरूप ब्रह्म के ज्ञानत्वानन्दत्वादि विशिष्ट होने में कोई भी अनुपपत्ति नहीं है ।

तत्रैवेति । मोक्षस्य सत्यज्ञानसाध्यत्वान्नारोपितविषयमुपासनमिति भावः ।

ननु तत प्रकरणे श्रयमाणं फलं न मोक्ष इत्यत्राह पुण्यपापेति । दोषान्तरमाह तथाचेति । तत्त्ववेदनस्यैव मोक्षहेतुत्वमिति नियमाभावादित्यर्थः ।

ननु कथं तत्त्वोपदेशस्य निष्प्रयोजनत्वम् ? मिथ्यार्थविषयोपासनवत्तत्त्व ज्ञानस्यापि मोक्षार्थत्वात् , सगुणविद्यानामनेकासामुपदेशात् , अन्यथातत्त्वोपदेशादपि मोक्षसिद्धौ मिथ्यात्वोपासनस्यापि उपदेशो निष्प्रयोजनः स्यादिति चेन्न ,--तत्त्वज्ञानादेव मोक्ष इति नियमानङ्गीकारे तत्त्वोपदेशात्तत्त्वोपदेशविभागो न स्यादित्यत्र तात्पर्यात् । अनवस्थादिरिति । धर्मे धर्ममङ्गीकृत्य तस्मिन् धर्मे धर्मव्यवहारसिद्धये धर्मिण एव स्वधर्मगतत्वाङ्गीकारेऽन्योन्याश्रयः , धर्मे धर्मव्यवहारस्य स्वरूपविषयत्वाङ्गीकारे प्रथमधर्मस्याप्यभावप्रसङ्गः इत्यादिरादिशब्देन विवक्षितः । अथ ज्ञानेति । ज्ञानस्य ज्ञानाश्रयत्वे ज्ञानाश्रयस्य ज्ञानत्वाभावदर्शनबाधितमित्यर्थः । धर्मस्य धर्मान्तराभ्युपगमेऽनवस्थामभ्युपगम्य परिहार उक्तः; इदानीन्तदभ्युपगमे ऽप्यनवस्था नास्तीत्याह धर्मस्यचेति । यद्यपि भूतलघटयोरपि सजातीय धर्मधर्मिपक्षे निदर्शनत्वे सम्भवति, तथाप्यपृथक्सद्धर्मधर्मिभावः सजातीययोर्नेति विशेषणेऽपि दूषणार्थं मवयविवाद इत्याद्युक्तम् । अन्यथेति । शशशृङ्गानुपलब्ध्या शश इव गव्यपि शृङ्गाभावनिश्चयप्रसङ्गादित्यर्थः ।

नन्वन्यत्र ज्ञानस्यानुपलब्धेः प्रत्यक्षसहकारितया वा स्वातन्त्र्येण वा ऽत्मनि ज्ञानाभावसाधकत्वं न विवक्षितम् , किन्त्वयं घट इत्यादिज्ञाने ज्ञानत्वस्य ज्ञानाभावव्याप्तिग्रहोपयोगितयेत्यत्राह दृष्टान्तेनेति । श्रुत्या दिति । ईश्वरे 'यः सर्वज्ञ" इत्यादिश्रुतिबाधः जीवे 'एषहि द्रष्टे' त्यादिश्रुत्या जानामीत्यादिप्रत्यक्षेण च बाध इत्यर्थः । विरोध इति । विरोधहेतुरित्यर्थः ।

ननु साधकबाधकाभावेन नित्यसंशयान्न कदापि ज्ञानत्वनिर्णयसम्भवः ; अतः कथम् विरोधहेतुत्वासिद्धिरित्यत्राह शास्त्रादिभिरिति : 'एष हि द्रष्टा श्रोता घ्राता रसयिता बोद्धा कर्ता विज्ञानात्मा पुरुषः;' 'आनन्दो ब्रह्म' 'आनन्दं ब्रह्मणो विद्वा' निति श्रुतिः । आदिशब्देन सुखम-

हमस्वाप्समिति परामर्श हेतुभूतसौषुप्तिकाहमर्थानुभवः प्रत्यक्त्वस्वयम्प्रकाशत्वानुकूलत्वादिविशिष्ट-विषयो गृह्यते । प्रत्यक्षश्रुतिभ्यामिति । प्रत्यक्षेण श्रुत्या च ज्ञानानन्दत्वोपलम्भात्तदभावस्यासम्भ-वात् तत्प्रत्यक्षमसिद्धमित्यर्थः ।

यत्तूक्तं सुखापरोक्ष्यमात्रेण पुरुषार्थ [ता] सिद्धौ सम्बन्धस्याप्रयोजकस्य कल्प-नमयुक्तमिति—तदपि निजहृदयविसंवादि जल्पितम् । तथा हि—न हि परस्य सुखापरोक्ष्य-मात्रेण स्वयमपि लब्धपुरुषार्थो भवति, तथा सति एकस्य सुखस्य दुःखस्य सर्वार्थत्वप्र-संगेन प्रत्यक्षानुमानशास्त्रादिसमस्तप्रमाणक्षोभप्रसङ्गात् । स्वरसतश्च परोपकारापकारयोरपि प्रवृत्तिनिवृत्तिप्रसङ्गात् । अतः स्वसम्बन्धितयैव सुखमपरोक्षतयाऽर्थनीयं भवति ॥ स्वरूपस्य तर्हि भवतां कथं सुखत्वमिति चेत्, सच्चिदानन्दरूप आत्मेति वदता भवता नैवं चोद-नीयम् । स हि सदात्मा सुखत्वविशिष्टाकारेण प्रकाशात्मतया सम्बध्यत इति निपुणम् चिन्तय ।

यत्तु सगुणत्वानुमाने दूषणमुक्तम्, न तेनास्माकं चेतसि चमत्कारः । जीवे-श्वरयोः प्रत्यक्षागमाभ्यां सगुणत्वसिद्धेः । यत्तु अहं जानामीत्यादिप्रत्यक्षस्य वृत्तिवि-शिष्टाहङ्कारविषयत्वमुक्तम्, तत्तु अहमर्थात्मत्वसमर्थनादौ परिहृतं द्रष्टव्यम् । अतो जीवस्य सवगुणशून्यत्ववचनम् प्रत्यक्षादिसर्वप्रमाणविरुद्धम् । ईश्वरस्य तु आगमैकसमधिगम्यस्या-गमविरुद्धम् ।

प्रसाद—अद्वैती विद्वानों ने यह जो कहा है कि सुख के साक्षात्कार मात्र से उसकी पुरुषा-र्थता की सिद्धि हो जाने के ही कारण ब्रह्म को सुख विशिष्ट मानना अनावश्यक है; वह भी वे लोग अपने हार्दिक भावों के विपरीत कहते हैं । क्योंकि लोक में देखा जाता है कि कोई दूसरे के सुख को देखकर स्वयम् सुखी नहीं होता । अन्यथा एक व्यक्ति का ही सुख या उसका दुख सबों का पुरुषार्थ अथवा अपुरुषार्थ बन जाता और ऐसा होने पर सभी प्रत्यक्ष अनुमान तथा शास्त्रादि प्रमाण जिनसे कोई सुखी तथा कोई दुःखी सिद्ध होता है, क्षुब्ध हो जाते । किञ्च किसी को दूसरे का परोपकार अथवा अपकार में प्रवृत्त होने का अवसर ही नहीं आता । इसलिए सिद्ध होता है कि सबों को अपना ही सुख पुरुषार्थ होता है । यदि कहें कि तो फिर सिद्धान्ती के मत में स्वरूप कैसे सुखस्वरूप सिद्ध हो पायेगा ? तो इसका उत्तर है कि आपको तो कम से कम ऐसा नहीं ही पूछना चाहिए, आप तो आत्मा को सच्चिदानन्द स्वरूप मानते हैं । वह सत् स्वरूप आत्मा सदा सुख विशिष्ट रूप से ही सबों के साथ प्रकाश तथा आत्मा रूप से सम्बद्ध होता है ।

अद्वैती विद्वानों ने ब्रह्म सगुणत्वानुमान में जो दोष दिखाया है उससे हम उनकी बुद्धि तीव्रता को देखकर चमत्कृत नहीं होते । प्रत्यक्ष के द्वारा जीव तथा आगम के द्वारा ईश्वर के सगुणत्व की ही सिद्धि होती है । अद्वैती विद्वानों ने यह जो कहा है कि 'मैं जानता हूँ' इत्यादि प्रत्यक्ष का विषय वृत्ति विशिष्ट

अहङ्कार है, उसका खण्डन उन्हें अहमर्थात्मत्व समर्थनवाद में देखना चाहिये। अतएव जीव को सर्वगुण शून्य बतलाने वाला अद्वैती विद्वानों का वाक्य प्रत्यक्ष तथा श्रुति के विपरीत है। श्रुतियाँ भी आत्सा कर्त्ता भोक्ता द्रष्टा इत्यादि रूप से बतलाती हैं। और उनका ईश्वर को निर्गुण बतलाने वाला वाक्य श्रुति विरुद्ध है; क्योंकि ईश्वर शास्त्रैकसमधिगम्य है।

नहीति। यदि स्वसम्बन्धि वा स्वासम्बन्धि वा सुखं आपरोक्ष्यमात्रेण पुरुषार्थः तदा सुखमात्रं किंचित्प्रत्यपरोक्षतः प्रकाशत इति सर्वान् प्रति पुरुषार्थः स्यात; एवम् दुःखमपि, न च यस्यापरोक्षविषयः सम्प्रति पुरुषार्थः, मुक्तस्य सुखप्रत्यक्षराहित्येनापुरुषार्थत्वप्रसङ्गादिति भावः। अनुमानेति। मुखविकारादिना सुखदुःखादिकं परस्मिन्ननुमीयते। शास्त्रेति। 'स्वर्गकामो यजेत' 'योपकुरुते तं शतेन यातया' दित्यादि। आदिपदेन पराभिमतार्थोपस्थभावौ विवक्षितौ। स्वर-सत इति। परोपकारेऽपि प्रवर्तन्ते परोपकारादपि निवर्तन्ते साधव इत्याशङ्कावारणार्थमिदमुक्तम स्वप्रयोजनोद्देशेन परोपकारे प्रवर्तन्ते स्वदुःखभयादेव परोपकारान्निवर्तन्ते इति भावः। परिहार साम्याभिप्रायेण हि प्रतिबन्द्युद्भावनम, न च प्रकृते तत्सम्भवति; सत्यत्व चित्त्वानन्दत्वादिध-र्मशून्यस्वरूपमात्रवादिनस्तव तदवलम्बिपरिहारायोगादित्यभिप्रायेणाह रुचिदिति। सहीति। आकारः—स्वरूपम। आत्मासुखत्वविशिष्टाकारेण प्रकाशात्मतया सम्बध्यय प्रकाशतया आत्मतया च सम्बध्यते, प्रकाशत्वेन रूपेण सम्बन्धात सुखस्य प्रकाशः प्रकाशत्वेन रूपेण सम्बन्ध्यात्मा सुखी, एवञ्च स्वरूपसुखस्य स्वकीयत्वं स्वप्रकाशात्मनस्तस्यैव सुखप्रकाशत्वञ्च सिद्धमिति स्वसम्ब-न्धिसुखापरोक्षसिद्धेः स्वरूपसुखस्य पुरुषार्थतोपपन्नेत्यर्थः। सुखापरोक्षप्रतिबन्धित्वमपि आत्मत्वे-नैव तेन सुखस्यस्वप्रत्यपरोक्षत्वमिति भावः। सम्बन्धिभेदाभावेऽपि सम्बन्धितावच्छेदकभेदा-त्सम्बन्ध उपपद्यते; घटस्य स्वरूपमित्यादौ तथा-दर्शनादिति भाव। प्रत्यक्षादीति। उपादान-त्वादिहेतुकानुमानदूषणं यद्यप्यनुपद मेवाभ्युपगतम, तथापि मुखविकासादिहेतुकानुमानस्य सम्भ वात् सर्वप्रामाणविरुद्धमित्युक्तम।

इति श्रीमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायाम् शतदूषणी व्याख्यायाम चण्डमारुताख्यायाम् सगुणनिर्गुणश्रुतिविषयव्यवस्था नाम द्विपञ्चाशः स्कन्धः॥५२॥



एददुक्तम भवति-निर्गुणश्रुतिवदेव सगुणश्रुतयोऽपि तत्त्वविषयाः प्रमाणभूताश्च। अत एव न तासां मिथो बाध्यबाधकभावः। उत्सर्गापवादनयाच्च विहितव्यतिरिक्तविषयो-ऽत्र निषेधः, अतो भिन्नविषयत्वान्न विरोधगन्धः। विरोधाभावाच्च न बाध्यबाधकभावः, तदभावाच्चोभयप्रामाण्यम् यथार्थरूपम् स्वतःप्रतीयमानमनपोदितमिति। उक्तम् च श्रीम-द्गुरुभिस्तत्त्वसारे—

"यत् ब्रह्मणो गुण-शरीर-विकार-जन्म-कर्मादिगोचरविधिप्रतिषेधवाचः ।
अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति; तन्न विधयः प्रतिषेधबाध्याः ॥" इति ।

॥ इति शतदूषण्यां सगुणनिर्गुणश्रुतिव्यवस्थावादः द्विपञ्चाशः ॥५२॥



प्रसाद—कहने का अभिप्राय है कि निर्गुण श्रुतियों के ही समान सगुण श्रुतियाँ भी तत्त्वापादिका हैं, तथा प्रामाणिक है । अतएव उनमें परस्पर में बाध्यबाधक भाव नहीं है । उत्सर्गापवादन्याय के अनुसार सगुण श्रुति प्रतिपादित दिव्यगुणों से भिन्न हेय प्राकृतिक गुणों का ही निर्गुण श्रुतियाँ ईश्वर में निषेध करती हैं । इस तरह दोनों प्रकार की श्रुतियों का विषय भिन्न-भिन्न होने के कारण दोनों में बिल्कुल विरोध नहीं है । परस्पर में विरोध न रहने के कारण उनमें बाध्य बाधकभाव भी नहीं है । दोनों में बाध्यबाधक भाव का अभाव होने के ही कारण दोनों प्रकार की श्रुतियों के वास्तविक प्रतीयमान स्वतः प्रामाण्य का अपनोदन नहीं किया जा सकता है । श्रीवरदाचार्य स्वामी ने तत्त्वसार नामक ग्रन्थ में कहा भी है । यद् ब्रह्मणो०इत्यादि । अर्थात् ब्रह्म के गुण, शरीर, विकार, जन्म एवम् कर्म आदि का विधान तथा निषेध करने वाली सगुण एवम् निर्गुण श्रुतियों में परस्पर में कोई विरोध नहीं है, क्योंकि उन दोनों प्रकार की श्रुतियों के विषय भिन्न-भिन्न हैं । अतएव निर्गुण श्रुतियों द्वारा सगुण श्रुतियों का बाध नहीं होता है।

इस तरह शतदूषणी के सगुणनिर्गुणश्रुतिव्यवस्था विषयक बावनवें वाद का प्रसाद समाप्त हुआ ॥



## ❀ अथ ब्रह्मोपादानत्वान्यथानुपपत्तिभङ्गवादः त्रिपंचाशः ॥५३॥ ❀

सद्ब्रह्मादिमुखैः पदैः श्रुतिषु यत् तत्त्वं समुद्घोषितं
स्यामित्येव चराचरं जगदिदं सृष्ट्वा प्रविश्याभवत् ।
तस्मै विस्मयनीयमङ्गलगुणस्थेम्ने सदा स्थायिने
सर्वावस्थसमस्तवस्तुवपुषे धाम्ने परस्मै नमः ॥

प्रसाद—श्रुतियों में जिस परम् तत्त्व को सत् , ब्रह्म आदि शब्दों से समुद्घोषित किया गया है; 'एकोऽहम् बहुस्याम्' यह श्रुति बतलाती है कि वह पर ब्रह्म अपने अव्यक्तावस्था से व्यक्तावस्था में आने के लिए सत्य सकल्प के द्वारा इस सम्पूर्ण जड़सेचेतनात्मक जगत् की सृष्टि करके, उसके भीतर अन्तर्यामी

रूप से प्रवेश कर गया। वह परम ब्रह्म सभी कल्याणकारी दिव्य गुणों का आश्रय है, परब्रह्म का ही यह सम्पूर्ण जगत् शरीर है, हम उसी परमज्योति स्वरूप पर ब्रह्म को नमस्कार करते हैं।

स्यामित्येवेति। 'बहुस्या' मिति सङ्कल्प्यैव, ननु बहु स्यादिति सङ्कल्प्य, इत्यर्थः। अनेनोपादानत्वमुक्तम्। अभवदिति। यथासङ्कल्पं बह्वभवदित्यर्थः। उपादानावेऽपि चेतनाचेतनगतदोषासस्पृष्टत्वमाह विस्मयनीयेत्यादि। दोषाणां विशेषणगतत्वप्रदर्शनार्थमुपादानत्वोपादेयत्वसिद्ध्यर्थं इदंसदादिपदानां परमात्मपरत्वसिद्ध्यर्थं चाह सर्वावस्थेति।

अस्तु तर्हि ब्रह्मोपादानत्वान्यथानुपपत्त्या विश्वमिथ्यात्वसिद्धिः। तथाहि—केवलनिमित्तेश्वरवादप्रतिक्षेपेण (पमुखेन) ब्रह्मण एवोपादानत्वमपि, 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादिभिस्समर्थितम्। (१) तदेतदुपादानत्वं किं मृद्घटादिवत् स्वरूपतः, (२) उत बालयुवादिवत् सूक्ष्मचिदचिद्विशिष्टवेषेण ? (३) अथवा रज्जुसर्पादिवत् अविद्यावैचित्र्यनिबन्धनञ्चन्त्येवेति।

प्रसाद—ब्रह्म जगत् का अभिन्ननिमित्तोपादान कारण है इस बात को सदैव श्रुति बतलाती है। किन्तु ब्रह्मके जगत् के उपादानत्व की सिद्धि जगत् को मिथ्या माने बिना नहीं हो सकती है। वैशेषिक एवं नैयायिक ईश्वर को जगत् का केवल निमित्त कारण मानते हैं। भगवान् बादरायण ने ईश्वर के केवल निमित्तत्व का खण्डन करते हुए 'प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्।' इस सूत्र में ब्रह्म को जगत् का प्रकृति (उपादान कारण) भी बतलाया है। अब प्रश्न है कि ब्रह्म का उपादानत्व किस प्रकार का है? (१) जैसे मिट्टी घट के रूप में साक्षात् परिणत हो जाता है, उसी तरह का स्वरूपतः है? (२) या जैसे शरीर विशिष्ट देह में ही बालत्व, युवत्व आदि परिणाम होते है, उस तरह का उपादानत्व सूक्ष्मचिदचिद् शरीर विशिष्ट रूप से है, (३) या अविद्या की विचित्रता के कारण रज्जू में प्रतीयमान सर्पादि के समान भ्रान्ति जन्य ब्रह्म की जगदुपादानता है?

केवलेति। ब्रह्म न जगदुपादानम्, ईक्षापूर्वकस्रष्टृत्वात्; अचेतनाशुद्धजनद्विरूपत्वाच्चेति प्राप्ते-सिद्धान्तितम् 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा' दिति। प्रकृतिश्च उपादानकारणम् च, ब्रह्माभ्युपगन्तव्यम्, प्रतिज्ञादृष्टान्तानुपरोधात्। प्रतिज्ञा तावत् 'येनाश्रुतं श्रुतं भवती' त्यादिका, सा चोपादानकारणत्व एव युज्यते, तज्ज्ञानेन सर्वस्य तत्कार्यस्य ज्ञानात्, दृष्टान्तोऽपि 'यथा सोम्यैकेन मृत्पिण्डेने' त्यादिरुपादानगोचर एवाम्नायते, स चोपादानत्व एव ब्रह्मणो युज्यते। किञ्च 'यतो वा इमानी' ति पंचम्युपादान एव, 'जनिकर्तुः प्रकृति' रित्यपादानसंज्ञाविधानात्, तस्मात् ब्रह्मोपादानम्। 'सोऽकामयत बहुस्या' मिति बहुभवनकामनाविषयत्वोपदेशाच्च; 'तदात्मानं स्वयमकुरुते' ति आत्मन एव जगद्रूपेण कृतिश्रवणाच्चेति।

ननु नात्र पंचम्योपादानत्वसिद्धिः, तस्या अनेकार्थत्वात्, अपादानार्थत्वेऽपि 'ध्रुवमपायेऽपादान' मित्यपादानसंज्ञासिद्धेः, 'जनिकर्तुः प्रकृति' रित्यनेनापादानसंज्ञायामपि प्रकृतिग्रहणस्य कारणमात्रार्थत्वेनोपादानत्वसिद्धेः, अन्यथा पुत्रात्प्रमोदो जायत इत्यत्रानुपपत्तेः, अत एव न्यासकृता 'ध्रुवपदानुवृत्त्या जनिकर्तृसम्बन्धिनोऽपादानसंज्ञायां प्रत्यासत्त्योपादानस्यैव स्यात्;

प्रकृतिग्रहणात्सर्वत्र भवति; तेन पुत्रात्प्रमोदो जायत इत्यादि सिद्धयती' त्युक्तम् , अतएव 'यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपामुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिते' ति मुरारिणा कारणमात्रे प्रकृतिपदं प्रयुक्तम् , नापि 'सोऽकामयत बहुस्या' मिति श्रुत्या तत्सिद्धिः ; तस्याः 'यदेकमव्यक्तमनन्तरूप' मिति श्रुतिसिद्धानन्ततत्तत्पदार्थप्रेरकानन्तरूपैः बहुभवनसंकल्पपरत्वात् , ' सच्च त्यच्चाभव' दिति च सत्त्वादिगुणाभिव्यक्तिपरम् , सृष्ट्यनुप्रवेशानन्तरभावित्वात् , अन्यथोपादानस्य सङ्कल्पपूर्वकमुपादेयं सृष्ट्वा तदनुप्रविश्य पुनस्तद्भवनायोगेन वाक्यं अयुक्तार्थं स्यात् , एतेन 'तदैक्षत बहु स्यां प्रजायेये ' त्येतदपि व्याख्यातम् , एतेनैव ' तदात्मानं स्वयमकुरुते ' त्येतदपि व्याख्यातम् । "तदात्मानं सृजाम्यहम " इतिवदुपपत्तः , नह्यात्मानं प्रपंचात्मनाकुरुतेति श्रूयते , इति । उच्यते ; जनिकर्तृसूत्रं प्रत्याचक्षाणो भाष्यकार एव सूत्रस्येममर्थं प्रत्याह । ध्रुवमपायेपादान' मिति सूत्रेण एतद्विषयसिद्धया हीदं सूत्रं प्रत्याचख्यौ । " अयमपि योगः शक्यो ऽवक्तुम , कथम् ? गोलोमाविलोमभ्यो दूर्वा जायत इति अपक्रामन्ति तास्तेभ्य" इत्यादि प्रत्याख्यानभाष्यम् यदिहीदं हेतुमात्रार्थं स्यात्तदा पुत्रादौ 'ध्रुवमपाय' इति सूत्राप्रवृत्तेः सूत्रस्य तदर्थत्वान्न प्रत्याख्यानावकाशः । पुत्रात् प्रमोद इत्यत्र का गतिरिति चेत् ? प्रक्रियामञ्जरीपदमञ्जर्यादिषूक्तो ' विभाषा गुणे स्त्रिया' मित्यत्र विभाषेति योगविभागः । नन्वेवं तत एव 'यतो वे' त्यत्रापि पंचम्यस्त्विति चेन्न,-योगविभागस्योन्नेयत्वेन प्रत्यक्षसिद्धयपेक्षया दुर्बलत्वात् । तद्विषयत्वमपि प्रयोगान्यथानुपपत्तिकल्प्यम् ; बाहुलकविधिविषयत्ववत् ; इह च 'जनिकर्तुः प्रकृति' रिति प्रत्यक्षशास्त्रसिद्धापादानविषयत्वोपपत्तेः नान्यथानुपपत्तिः । मुरारिप्रयोगात्प्रकृतिपदं कारणमात्रार्थमिति त्वयुक्तम् ; चन्द्रस्य समुद्रैकदेशपरिणामत्वेऽपि बाधकाभावात् । यथाकथञ्चित्प्रसोत्पत्त्यर्थककाव्य प्रयोगमात्रादर्थसिद्धौ 'कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः' इति श्रीहर्षप्रयोगाच्चक्रभ्रमहेतुत्वस्य गुणत्वं दण्डस्य समवायिकारणत्वञ्च स्यात् । यच्चोक्तम् ; 'ध्रुवमपायेऽपादान' मित्यपादानसंज्ञेति । तन्न , अपायहेतुक्रियां प्रत्यवधित्वेन कारकस्यापादानसंज्ञाविधानात् , अत्र च तादृशक्रियाया अश्रवणादपायाभावाच्च ।

न च शृङ्गाच्छरो जायत इत्यादावपि अपरिणतभागस्यत्वात्तस्यापायावधित्वादपादानत्वमिहापि तद्वदेव सम्भवतीति वाच्यम् , तद्वदेवैकदेशोपादानत्वसिद्धः विभोरात्मनोपायायोगाच्च । 'सोऽकामयत बहुस्या' मित्यत्र यदि विग्रहद्वारा बहुभवनं विवक्षितं तदा ब्रह्मशरीरतया श्रुतिशतसिद्धप्रकृतत्वदभिमतप्रपंचरूपविग्रहद्वारा बहुभवने कः प्रद्वेषः ? किंच 'बहुस्या' मिति विग्रहसृष्टिरूपाभिधाने असङ्कल्पितप्रपञ्चसृष्ट्यभिधानम् सङ्कल्पितविग्रहस्य सृष्ट्यनभिधानचायुक्तम् ।

"सच्च त्यच्चाभव' दिति च सत्त्वादिगुणाभिव्यक्तिपरमित्यप्ययुक्तम् , ब्रह्मणः सत्त्वादिगुणासिद्धेः । न च सृष्ट्यनुप्रवेशानन्तरं सद्भवनाभिधानानुपपत्तिः , सृष्ट्यभिधानेन विवर्तत्वासिद्धया तत्सिद्ध्यर्थं सत्योद्भवनाभिधानात्, पूर्वकालत्वस्य चाविवक्षितत्वात । एतेन 'तदैक्षत बहु स्या' मित्येतदपि व्याख्यातम् ॥

ननु तेजः प्रभृतिरूपेण त्वया बहुभावो वाच्यः, तेजः प्रभृति चेतनमीक्षणादिश्रवणात्, न च चेतनं प्रत्युपादानत्वं ब्रह्मणः सम्भवतीति चेन्न,-अत्र हि योग्यतावशात् प्रथमतेजः पदेन भूतात्मक तेजो गृह्यते, द्वितीयेन तदवच्छिन्नमुत्तरकार्यस्य निमित्तमुपादानञ्च ब्रह्मोच्यते ; उभयत्र भगवत्पर्यन्तमेव वा । 'तदात्मानं स्वयमकुरुते' इत्यत्रापि विग्रहसृष्टिपरत्वमनुपपन्नम्, तदित्यततः परामर्शात् ।

ननु 'सोऽकामयते' इत्युक्त आत्मा 'ततो वै सदजायते' ति तच्छब्देन परामृश्यते, तदेव 'तदात्मान' मित्यत्रापीति चेन्न,--तदिति नपुंसकलिङ्गानुपपत्तेः । इदम् सर्वमभिप्रेत्य सूत्रकारेण समर्थितमिति ।

न तावत् प्रथमः, निर्विकारत्वनिरवद्यत्वश्रुतिकोप (क्षोभ) प्रसङ्गात् । न चांश भेदेन कालभेदेन वा विषयव्यवस्था, निरवयवत्वाकालकाल्यत्वादिस्वभाव [त्व] विरोधप्रसङ्गात् । न च सावयवत्वादिकमपि तथैव व्यवस्थाप्यम्, तथाऽपि तदात्मके ब्रह्मण्येव समस्तदोषप्रसङ्गस्य दुष्परिहरत्वात् । न च ब्रह्मांशाना ब्रह्मणोऽत्यन्तभेदं वा ब्रह्माध्यस्तत्वं वा स्वप्नेऽप्यङ्गीकारोषि ॥ श्रुतिबलादेव ब्रह्मणि सर्वात्मके सावयवत्वनिरवयत्वसदोषत्वनिर्दोषत्वोपादानत्वादि ( कं ) सर्वमभ्युपगच्छाम इति चेन्न, व्याघातोत्सादे पूर्वपक्षस्यापि अप्रतिक्षेप्यत्वात् । तथा चालं ब्रह्ममीमांसानिरूपणक्लेशेन ।

प्रसाद-- ब्रह्म का जगदुपादानत्व स्वरूपतः मानने पर ब्रह्म को निर्विकार एवम् निरवद्य बतलाने वाली श्रुति का विरोध होगा । ब्रह्म के निर्विकारत्व आदि की व्यवस्था अंश भेद अथवा काल भेद के कारण नहीं हो सकती है, क्योंकि ब्रह्म के सांशत्व को स्वीकारने पर ब्रह्म के निरवयवत्व का विरोध होगा, काल भेद के कारण व्यवस्था मानने पर ब्रह्म के कालाविषयत्व का विरोध होगा । ब्रह्म में सावयत्वादि की व्यवस्था अंश भेद के द्वारा भी नहीं मानी जा सकती है, क्यों कि वैसा मानने पर भी सावयव ब्रह्म में ही सभी दोषों का प्रसङ्ग अपरिहार्य होगा । किञ्च सिद्धान्ती ब्रह्म के अंशों का न तो ब्रह्म से अत्यन्त भेद मानते हैं और न तो उनको ब्रह्म में अध्यस्त ही मानते हैं । सिद्धान्ती यह नहीं कह सकते हैं कि श्रुतियों के ही आधार पर हम ब्रह्म में सावयवत्व निरवयत्व, सदोषत्व-निर्दोषत्व तथा उपादानत्वादि को स्वीकारते हैं ; क्योंकि परस्पर में विरुद्ध सावयवत्व निरवयवत्व आदि में विरोध नहीं मानने पर, आपको पूर्वपक्ष का भी खण्डन नहीं करना चाहिए । फलतः ब्रह्म मीमांस का निरूपण ही व्यर्थ हो जायेगा ।

अकालकाल्येति । 'कालकालो गुणी' ति श्रुत्याऽकालकाल्यत्वमर्थात् सिद्धम् । तथेति । अवयवकालभेदाभ्यामित्यर्थः । सावयवत्वनिरवयवत्वव्यवस्थापकावयवभेदस्यापि सङ्कोचकाभावेन श्रुत्या निषिद्धत्वादवयवादिभेदेन व्यवस्था न सम्भवति ; अभ्युपेत्य दूष्यत इति भावेन तथापीत्युक्तम् । अंशानां ब्रह्मणो भिन्नत्वादध्यस्तत्वाद्वा तद्गतदोषैर्न ब्रह्मणो निरवद्यत्वश्रुतिविरोध इत्यत्राह नचेति । उपादानत्वादीत्यादिपदेन उपादेयत्वग्रहः ;

नापि द्वितीयः, विशिष्टस्योपादानत्वे प्रमाणाभावविवेकेन विशेषणस्यैवोपादानत्व

पातात् । यदि पुनर्विशिष्टमुपादानमित्यत्र विशेष्यं चेत्युभयमप्युपादानमिति विवक्षितम् ; तदा विशेष्यस्यापि सविकारत्वप्रसङ्गो दुर्वारः । तथाच किं विशेषणवैशिष्ट्यवृथाग्रहेण ? किञ्च, यदि चिदचिदीश्वरैः संभूय जगदाख्यं कार्यमारभ्यते; तदा कार्याणां सर्वेषां त्रिस्वभावत्वप्रसङ्गः, यथा शुक्लकृष्णरक्ततन्त्वारब्धे पटे शुक्लकृष्णरक्तस्वभावत्वम् । सीसताम्रारब्धकांस्यवद्वा कार्यस्यैव वा; त्रितयोत्तीर्णस्वभावत्वप्रसङ्गः । लाक्षारसावसिक्तकार्पासकुसुमरागवत् रुमाप्रक्षिप्तकाष्ठलावण्यवद्वा विश्वस्याप्यनभिभवनीयेश्वरस्वभावत्वापत्तिः । किञ्च विशिष्टस्योपादानत्वं किं श्रौतम्, उत कल्पितम् ? न पूर्वः, कारणवाक्यस्थसद्ब्रह्मात्मादिशब्दानां ब्रह्मस्वरूपमात्रे रूढत्वात् । उक्तं च भवतां भाष्येऽपि, 'शरीरिभूतपरमात्माभिधायिभिः सद्ब्रह्मादिभिः शब्दैः' इति । न च स्वरूपे च विशिष्टे च शक्तिरित्यनेकार्थताक्लृप्तिः ; कल्पकाभावात् कल्पनागौरवोपहतत्वाच्च । एवं, 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत् ;' 'तदात्मानं स्वयमकुरुत ;' 'यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यादिभिरपि ब्रह्म स्वरूपस्यैवोपादानत्वं श्रूयते । नाप्युत्तरः ; कल्पकाभावात्, प्रत्युत समस्तभेदरहितस्यैव कारणवाक्येऽवधारणात् तद्विरोधिविशेषणकल्पनं वाक्यतात्पर्यविरुद्धं च ।

प्रसाद—किञ्च सूक्ष्म चिदचिद् विशिष्ट वेष से भी ब्रह्म को जगत् का उपादान नहीं मान सकता है। विशिष्ट ब्रह्म को उपादान कारण मानने पर निर्विशेष ब्रह्म जगत का कारण नहीं हो सकता है, अपितु विशिष्ट ही, इस तरह के विचार से विशेषणों का ही उपादानत्व सिद्ध होगा । यदि विशिष्ट की उपादानता मानकर विशेषण और विशेष्य दोनों को उपादान कारण मानने पर विशेष्य को भी सविकारत्वापत्ति होगी। किञ्च ब्रह्म में व्यर्थ विशेषण वैशिष्ट्य स्वीकार करने से कोई लाभ भी नहीं है । यदि कहें कि चित्, अचित् एवम् ईश्वर ये तीनों सम्मिलित रूप से जगत के उपादान है तो फिर जगत् की सारी वस्तुओं में 'कारण गुणाः कार्यगुणानारभन्ते' इस नियम के अनुसार इन तीनों तत्वों के स्वभाव का होना अनिवार्य होगा । यह ठीक उसी तरह होगा जिस तरह लाल; काले एवम् उजले धागों से बने वस्त्र में तीनों के रङ्ग विद्यमान रहते हैं । अथवा रङ्गा एवम् ताम्बा मिलाकर बने पात्र में उन दोनों से भिन्न जैसे कांस्यत्व होता है, उसी तरह यहाँ भी जगत् में चेतन, अचेतन एवं ईश्वर इन तीनों के स्वभाव से भिन्न ही स्वभाव को होना चाहिए । अथवा लाक्षारस में भिगोए गये कपास के पुष्प की लालिमा की तरह अथवा नमक में डाले गये काष्ठ के नमकीनपन के समान जगत् का भी स्वभाव ईश्वर के ही समान अनभिभवनीय होना चाहिए। किञ्च आप विशिष्ट ब्रह्म की उपादानता श्रुति के बल पर मानते हैं, अथवा कल्पना के बल पर? प्रथम कल्प तो इसलिए नहीं माना जा सकता है कि कारण वाक्य के सद् ब्रह्म आदि शब्द ब्रह्म के स्वरूप परक रूप से ही रूढ है। आपके श्रीभाष्य में भी कहा गया है कि सत् ब्रह्म आदि शब्द जगत् की आत्मा रूप से ब्रह्म का अभिधान करते हैं। आप यह भी नहीं कह सकते हैं कि सत् ब्रह्म आदि शब्दों की शक्ति स्वरूप एवं विशिष्ट दोनों में है ; क्योंकि वे अनेकार्थक हैं, क्योंकि इस प्रकार की

कल्पना का कोई आधार नहीं है । श्रीभाष्य में इन शब्दों को स्वरूप परक ही बतलाया गया है । इन शब्दों को विशिष्ट परक मानने का कोई प्रयोजन भी नहीं है । इस तरह की कल्पना में गौरव दोष भी होगा । किञ्च 'ब्रह्म वनम् ब्रह्म स वृक्षः' अर्थात् ब्रह्म ही वन तथा वृक्ष है जिससे जगत् की सृष्टि हुई, 'तदात्मानम् स्वयम् अकुरुत' ब्रह्म स्वयं जगत् के रूपमें हो गया । 'यद् भूतयोनि परिपश्यन्ति धीराः' अर्थात् ब्रह्मनिष्ठ जिस ब्रह्म को जगत् का उपादान कारण मानते हैं । इत्यादि वाक्य भी ब्रह्म के स्वरूप को ही जगत् का उपादान कारण मानते हैं । कल्पित भी विशिष्ट ब्रह्म की जगदुपादानता नहीं मानी जा सकती हैं, क्योंकि उस कल्पना का आश्रय कोई नही है । किञ्च समस्त भेद रहित ही ब्रह्म के जगत् की कारणता का कारण वाक्यों में निश्चय किए जाने के कारण, उस निश्चय के विरोधी ब्रह्म में विशेषण की कल्पना, कारण वाक्य के तात्पर्य के विपरीत भी है ।

किञ्च यदीति । त्रिवृत्करणानन्तर भाविकार्याणां चिदचिदीश्वरसंघातारब्धत्वात्तद-भिप्रायेण सर्वेषामित्युक्तम् । यथेति : केषांचित् चित्स्वभावत्वमेव केषांचित् अचित्स्वभावत्वमेव दृश्यत इति भावः ।

ननु भाष्ये स्वरूपरूढिरुक्ता ; न तु विशिष्टशक्तिर्निषिद्धा , अत उभयत्र शक्तिक्लृप्तिः स्यादित्यत आह नचेति । कारणवाक्यस्यतदादिपदानां ब्रह्मस्वरूप परत्वस्य भाष्येऽभिहितत्वात् न विशिष्टशक्तावपि किंचित्प्रयोजनमित्यपि हृदयम ।

जगत्कारणविधिपराणि वाक्यानि कारणवाक्यशब्देन पूर्वं विवक्षितानि, अथ सिद्धे जगत्कारणे तद्विशेषादिपराणि वाक्यान्युदाहरति एवमिति ।

अतः इदमिति निर्दिष्टकृत्स्नप्रपञ्चरूपेण बहु स्यामिति स्वरूपस्यैव बहुभवनसङ्कल्प पूर्वकोऽयं विश्वारम्भः ; मृद्घटादिदृष्टान्तानुसाराच्च स्वरूपस्यैवोपादानत्वं सिद्धमिति स्वरू-पनिर्विकारत्वश्रुतिविरोधपरिहारे तृतीयः पक्षः परिशिष्यते । यथा चैकैव रज्जुः सर्पभूदल-नाम्बुधारादिरूपेण भ्रमादनुवर्तते ; यथा चैकस्मिन्नेव निरवयवे गगने युगपदनन्तभेदभिदु-रगन्धर्वनगरारम्भः ; यथा च मुखचन्द्रादेः दर्पणतरङ्गाद्युपाधिभेदेन नानात्वोपलम्भः ; तथा निरंशेऽपि निर्विशेषस्वप्रकाशे स्वतश्शुद्धे ब्रह्मणि असम्भवद्विकारे दुर्निरूपदोषमूल-विक-ल्पासह-विचित्रचिदचिदात्मकजगदध्यास इत्यभ्युपगन्तव्यमिति तत्त्वावेदकनिर्विकारजगदु-पादानश्रुतितात्पर्यविद्यया ( यम् । अविद्यया च ) सर्वमन्यत् प्रपञ्चसत्यत्वग्राहकं ग्रहवत् निग्राह्यमिति ।

प्रसाद—अतएव यही मानना चाहिए कि 'सदेवेदम्' श्रुति में 'इदम्' शब्द से सम्पूर्ण प्रपञ्चका निर्देश किया गया है । ब्रह्म 'बहुस्याम्' यह संकल्प करके ही जगत् की स्वरूपतः ही सृष्टि करता है । 'वाचारम्मण' श्रुति में दिए गये मृद घट के उदाहरण के अनुसार भी ब्रह्म के स्वरूप की ही जगदुपादा-नता सिद्ध होती है । इस तरह स्वरूप के निर्विकारत्व का परिहार करने के लिए तीसरा ही पक्ष अव-

शिष्ट है। जैसे एक ही रज्ज, सर्प, भूदलन, तथा जलधारा आदि के रूप से भ्रम के कारण अनुवर्तित होती है, तथा जैसे एक ही निरवयव आकाश में समकाल में ही अनेक भेदों से युक्त गन्धर्व नगर बन जाता है, किञ्च जैसे मुख चन्द्र आदि की दर्पण तथा तरङ्ग आदि उपाधियों की भिन्नता के कारण अनेकत्व की प्रतीति होती है, उसी तरह निरंश भी निर्विशेष, स्वयम् प्रकाश तथा स्वतः शुद्ध तथा निर्विकार ब्रह्म में जिसका निरूपण नहीं किया जा सकता है; उस दोष मूलक तथा सत्त्वासत्त्वविचारासह, विचित्र जड चेतनात्मक जगत् का अध्यास स्वीकारना चाहिए; ब्रह्म के जगदुपादानकत्व का प्रतिपादन करने वाली तत्त्वावेदक श्रुतियाँ निर्विकार ब्रह्म को ही जगत का उपादान बतलाती हैं, और ब्रह्म व्यतिरिक्त सम्पूर्ण जगत् आविधिक हैं; अतएव प्रपञ्च के सत्यत्व की ग्राहकता ग्रह के समान निग्राह्य है।

विकल्पासहः सत्त्वासत्त्वविचारासहः।

अत्र प्रतिविधीयते—स्वरूपपरिणामपक्षदूषणं तावदस्माकमपि सम्मतमेव। तथापि बहु (ल) प्रमाणोपस्थापितबहुमुखव्याघातशतसादितात् भवन्मतात् त्रिचतुरविरोधसितासित भास्करादिमतानुरोधेन कार्यकारणसंरक्षणमेव समुचितम्। यत्तु (यत) विशिष्टपक्षे प्राप्ताप्राप्तविवेकेन विशेषणस्यैवोपादानत्वमापन्नमिति, तत्र विशेषणस्य साक्षाद्विकाराश्रयत्वप्रसङ्गः इष्टः। विशेष्यस्यापि परम्परयाऽऽश्रयत्वेऽप्याश्रयत्वमात्राविशेषादुपादानशब्दवाच्यत्वप्रतिक्षेपस्त्वशक्यः। यथा भवतोऽप्यविद्याया एव साक्षाद्विवर्ताश्रयत्वेऽपि तस्या एव साक्षिभूतब्रह्माधीनसत्ताकत्वात् ब्रह्म विवर्तत इत्युक्तिः—तथा परिणामस्यापि साक्षात् ब्रह्मशरीरभूतद्रव्यगतत्वेऽपि तस्य तदाधारतया (तदारब्धतया) तदधीनतामात्रात् ब्रह्म परिणमतीति वक्तुं शक्यम्। नैतावता विशेष्यस्य साक्षाद्विकाराश्रयत्वप्रसंगः। परस्पराश्रयत्वं तु भवत इवास्माकमपि संमतमदोषावहं च। यथा बालो युवा जात इत्यादौ विशेष्यभूतात्मस्वरूपस्य निर्विकारत्वे, विशेषणे साक्षाद्बालत्वाद्यवस्थायोगेन आत्मपर्यन्तो (न्त) बालयुवशब्दप्रयोगः, तद्वद्त्राप्युपादानकार्यशब्दयोः प्रयोग इति न दोषः। एवं विशेष्यस्य निर्विकारत्वं विशिष्टग्रहणाशक्तिश्चेत्युक्तं भवति। अन्यथा अष्टवर्षत्व ब्रा ह्मणत्वादीनामात्मासम्बन्धेनोपनयनादिविधीनामप्रवृत्तिरिति कर्मब्रह्ममीमांसयोरारम्भ एव कापेयकल्पः स्यात्॥ तथाऽपि कथमवस्थाद्वयरहितस्वरूपे कस्यचिदुपादानोपादेयवाचोयुक्तिश्चित्तमारोहेदिति चेन्न, विशेषणवत् विशेष्येऽप्यवस्थाद्वययोगात्, तत्तदवस्थतत्तद्वैशिष्ट्यानामागन्तुकत्वेनावस्थात्वात्, मिथो भिन्नत्वाच्च, आत्मनो बालयुवदेहवैशिष्ट्यवत्।

श्लो. आगन्तुरपृथक्सिद्धो धर्मोऽवस्थेति कीर्त्यते।

विशेष्येऽपि च वैशिष्ट्यभेदोऽवस्थान्तरायते॥

प्रसाद—उपर्युक्त पूर्वपक्ष का उत्तर है कि ब्रह्म के स्वरूपतः परिणाम का खण्डन हम लोगों को भी अभिप्रेत है, फिर भी अनेक प्रमाणों द्वारा उपस्थापित तथा अनेक विरोधो से व्याहत आपके मत को तीन चार विरोधों से युक्त भास्कर तथा यादवमत के अनुसार ही कार्य कारण भाव का संरक्षण आवश्यक है। भास्कर मत में कार्य कारण सम्बन्ध में तीन प्रधान दोष हैं (१) ब्रह्म को निर्विकार बतलाने वाली श्रुति का विरोध; (२) ब्रह्म को निर्वद्य बतलाने वाली श्रुति का विरोध तथा (३) भेद भेद समवेश। यादव मत में उपर्युक्त तीन दोषों के साथ चौथा प्रधान दोष जीवादि की अनादिता का भङ्ग है।' किन्तु इन मतों में कार्य कारण विषयक उतने दोष नहीं हैं, जितने दोष मिथ्यावादियों के मत में हैं। अद्वैती विद्वानों ने यह जो कहा है कि विशिष्ट को जगत् का उपादान मानने पर प्राप्ताप्राप्त विवेक के द्वारा विशेषणांश का ही उपादानत्व सिद्ध होता है, तो हमको भी विशेषण का साक्षात् उपादानत्व अभिप्रेत है, विशेष्य की भी परम्परातः उपादानत्वाश्रय मानने पर भी, सामान्यतः आश्रय होने के कारण उसकी उपादान शब्द वाच्यता का निषेध नहीं किया जा सकता है। जिस तरह अद्वैती विद्वान् साक्षात् अविद्या के ही विवर्त का आश्रय होने पर भी; अविद्या के साक्षीभूत ब्रह्म के अधीन सत्ता होने के कारण; ब्रह्मका ही विवर्त जगत् को मानते हैं, उसी तरह यद्यपि जगत् रूप में साक्षात् ब्रह्म के शरीर भूत जड द्रव्य का ही होता है, फिर भी वह शरीर ब्रह्माश्रित है तथा जगत जगदात्मा ब्रह्म के अधीन है, अतएव ब्रह्म का जगत् का उपादानत्वविधान होता है। आश्रय होने मात्र से ब्रह्म के साक्षात् विकाराश्रयत्व का प्रसङ्ग नहीं है। जिस तरह ब्रह्म का परम्परयाश्रयत्व आप मानते हैं, उसी तरह हम लोग भी; और इस मान्यता में कोई दोष भी नहीं है। जैसे बालक युवा हो गया इत्यादि प्रयोग में विशेष्यभूत आत्मा के स्वरूप के निर्विकार रहने पर भी विशेषणभूत शरीर में बालत्व आदि अवस्थाओं का साक्षात् सम्बन्ध होने के कारण यह बालक है, यह युवक है, इत्यादि प्रयोग आत्मा पर्यन्त होते हैं; इसी तरह यहाँ पर भी उपादान तथा कार्य शब्द का प्रयोग यहाँ समझना चाहिए। इस तरह विशेष्य भूत ब्रह्म की निर्विकारता तथा ब्रह्म शब्द की विशिष्ट के ग्रहण में शक्ति स्वीकारी जाती है। यदि ऐसा न हो तो 'अष्टवर्षत्व' 'ब्राह्मणत्व' आदि का आत्मा से सम्बन्ध न होने के कारण, उपनयनादि विधियों की प्रवृत्ति नहीं हो सकती है। फलतः कर्म मीमांसा तथा ब्रह्म मीमांसा का आरम्भ ही, वानरारम्भ के समान दुःखद हो जायेगा। यदि कहें कि ब्रह्मकी दो अवस्थाएँ होती नहीं हैं, अतएव एक ही ब्रह्म की उपादानावस्था तथा कार्यावस्था कैसे स्वीकारी जा सकती है? तो इसका उत्तर है कि विशेषण के ही समान ब्रह्म की दो अवस्थाएँ स्वीकारी जाती हैं। विभिन्न अवस्थाओं में होने वाली विशेषताएँ भी आगन्तुक होने के कारण अवस्था शब्द से अभिहित की जाती हैं। ये अवस्थाएँ परस्पर में उसी तरह भिन्न हैं, जिस तरह शरीर की बालत्व युवत्व आदि अवस्थाएँ। आगन्तुक और अपृथक् सिद्ध धर्म को अवस्था कहते हैं। विशेष्य में भी वैशिष्ट्य का भेद अवस्था कहलाता है।

त्रिचतुरेति। भास्करमते निर्विकारत्व श्रुतिविरोधः निरवद्यत्वश्रुतिविरोधः भेदाभेद-समावेश इति त्रयः स्थूलदोषाः, यादवप्रकाशमते एतैः जीवाद्यनादित्वभङ्ग इति चत्वारो दोषाः। कार्यकारण संरक्षणम् कार्यत्वकारणत्वयोरबाध्यत्वकल्पनम्। साक्षादिति। साक्षादाश्रयत्वमद्वारकमाश्रयत्वं, परम्परयाऽश्रयत्वं सद्वारकमाश्रयत्वम्। यथा यागस्य सद्वारकं स्वर्गकारणत्वं प्रोक्षणादेश्च सद्वारकमपूर्वविशेषत्वम्। अशक्य इति। अवस्थाश्रयत्वमेवोपादानत्वम्, न तु साक्षादवस्थाश्रयत्वम्; गौरवात्, आश्रयत्वे सति साक्षात्त्वविरहेणानुपादानत्वादर्शनाच्चेति भावः॥

ननु यदि क्वचित्सद्वारकाश्रयत्वमुपलभ्येत तदोपादानत्वश्रुतेर्निर्विकारत्व श्रुत्यविरोधेन तद्विषयता स्यात् , न च कारणत्वशेषत्वादिवत्तदुपलभामहे, इति चेन्न;-"तदभावो नाडीषु तच्छ्रुतेरात्मनि च' त्युक्तप्रासादखट्वान्यायेन सद्वारकाश्रयत्वस्य लोकसिद्धेः । खट्वायां पर्यंके शयनेऽपि प्रासादे शेत इति हि प्रतीयते ॥ न च निर्विकारत्वश्रुतेः साक्षात्सम्बन्ध्यविषयतानियामकाभावः , उपादानत्वश्रुतेरेव नियामकत्वात् । किंच निर्विकारश्रुतेर्हेयसम्बन्धनिषेधपरत्वाद्येन सम्बन्धेनान्यत्र हेयत्वं दृष्टं तेनैव सम्बन्धेन प्रसक्तौ तत्सम्बन्धनिषेधस्यैव स्वरसत्वात् । किञ्च विकारो हि स्वरूपान्यथाभावः ; तस्यैव निषेधान्न विरोधशङ्कालेशः । एकदेशिमतेन प्रतिबन्द्यभिप्रायेण दृष्टान्तमाह यथेति । साक्षादिति । द्रव्यगतत्वेऽपीत्यनेनान्वयः । साक्षाद्ब्रह्माश्रितत्वाभावेऽपीति भावः । तदारब्धतयेति । ब्रह्मोपादानत्वं सम्प्रतिपन्नम् ; परिणामविवर्तयोरेव विवादः । अनेन घटस्य भूतलतादधीन्यात्तदाश्रयभूतलस्य घटावस्थाश्रयत्वप्रसङ्गः प्रत्युक्तः । एतावता परिणामाश्रयत्वमात्रेण ।

ननु विवर्तपक्षे मिथ्यात्वान्न दोषावहत्वम् ; परिणामपक्षे सत्यत्वाद्दोषावहत्वम स्यादित्यत्राह यथा बाल इति । उपसंहरति एवमिति । विशिष्टेति । विशिष्टस्योपादानत्वेन ग्रहणमस्माभिः कर्तुं शक्यत इत्यर्थः । यद्वा उपादानशब्दस्य विशिष्टबोधनशक्तिरिति वार्थः । पारिप्लवमत्यनुग्रहार्थशङ्कापूर्वकम् मतान्तरमाह तथापीति । अवस्थाद्वययोगमुपपादयति तत्तदवस्थेति । अवस्थाद्वित्वोपपादनार्थम मिथो भिन्नत्वा दित्युक्तम् । वैशिष्टय भेदः-वैशिष्ट्यविशेषः ।

एतेन स्वभावसङ्करादयो दोषा न प्रसङ्गमर्हन्ति । न हि बालस्य युवाभावे देहदेहिनोः प्रतिनियताः स्वभावाः सङ्कीर्यन्ते । न च शुक्लकृष्णरक्ततन्त्वारब्धे स्वभावसङ्करः, विभक्तदशायामिव संसर्गदशायामपि शौक्ल्यादीनां यथात्वं प्रतिनियतांशविषयत्वात् एवमत्रापि विशिष्टकार्ये यथास्वमंशप्रतिनियतत्रिस्वभावत्वे प्रसज्यमाने अस्माकमिष्टप्रसङ्गः । अत एवातीतस्वभावत्वमुद्भूतस्वभावत्वमित्यादिचोद्यमपि परिहृतम् , ब्रह्मस्वरूपस्य निर्विकारत्वात् , जगदात्मकपरिणामदशायामपि व्यवस्थितस्वभावत्वात् । न च दृष्टान्तमात्रेणार्थसिद्धिः , न चात्र व्याप्तिसम्भवः , अन्यथा त्वत्पक्षेऽप्यविद्याविशिष्टब्रह्मविवर्ते स्वभावसङ्करादयस्तदवस्थाः ।

प्रसाद—सविकारत्व के साक्षाद् विशेषणगत होने के ही कारण ब्रह्म में स्वभावसङ्करत्व आदि दोष नहीं होंगे । बालक के युवक हो जाने मात्र से शरीर तथा आत्मा के स्वभाव का साङ्कर्य इसीलिए नहीं होता है कि, शरीर तथा आत्मा के स्वभाव भिन्न-भिन्न हैं । उजला , काला एवं लाल इन तीनों प्रकार के सूतों से बने वस्त्र के स्वभाव का साङ्कर्य नहीं सम्भव है । जिस तरह बिना बुने हुए प्रत्येक प्रकार के सूतों का अपना-अपना रङ्ग पृथक् होता है; उसी प्रकार , कपड़े के रूप में बुने गये भी प्रत्येक प्रकार के सूतों में अपना-अपना ही रङ्ग होता है । इसी तरह यहाँ भी विशिष्ट कार्य से जगत् में चित्

अचित एवं अन्तर्यामी तीनों का अपना अपना स्वभाव पृथक ही रहता है। यह मान्यता सिद्धान्त में अभिप्रेत है। चेतनाचेतन एवं ईश्वर के व्यवस्थित स्वभावत्व स्वीकार करने के ही कारण ब्रह्म के उत्तीर्ण स्वभावत्व एवं अनभिभवनीय स्वभावत्व विषयक शङ्काओं का भी परिहार हो गया। क्योंकि ब्रह्म का स्वरूप निर्विकार है, जगत् रूपमें परिणाम की दशा में भी ब्रह्मका अपना स्वभाव व्यवस्थित ही रहता है। रक्तकृष्णादि तन्त्वारब्ध पट में स्वभाव साङ्कर्य के उदाहरण मात्र से भी ब्रह्म के स्वभाव साङ्कर्य की सिद्धि नहीं हो सकती है। स्वभावत्व को साङ्कर्य व्याप्त भी नहीं कहा जा सकता है, बालक के युवा होने पर भी उसके स्वभाव में साङ्कर्य नहीं देखा जाता। यदि व्यवस्थित स्वभावत्व नियम को नहीं माना जाय तो अद्वैती विद्वानों के भी मत में अविद्याविशिष्ट ब्रह्म का प्रपञ्च रूप से विवर्त मानने पर स्वभाव साङ्कर्यादि का प्रसङ्ग होगा।

एतेनेति। सविकारत्वस्य साक्षाद्विशेषणगतत्वाश्रयणादित्यर्थः। त्रिस्वभावत्वस्य स्वभावसङ्करपर्यन्ततयैव दोषत्वात्तन्मुखेन तद्ग्रहणम्। आदिपदेनोत्तीर्णस्वभावत्वेश्वरस्वभावत्वे गृह्यते। अतएवेति। व्यवस्थितत्रिस्वभावत्वाङ्गीकारादित्यर्थः। उत्तीर्णस्वभावत्वोद्भूतस्वभावत्वानङ्गाकारे हेतुमाह ब्रह्मे ति। निर्विकारत्वात्, स्वस्वभावपरित्यागेन स्वभावान्तरग्रहणं न सम्भवति, व्यवस्थितस्वभावत्वात् स्वसंसृष्टे स्वभावापत्तिहेतुत्वं च न सम्बवतीत्यर्थः। शुक्लकृष्णतन्त्वारब्धे स्वभावसाङ्कर्यं नास्तीत्युक्तम्; इदानीं तदङ्गीकृत्याह न च दृष्टान्तेति। स्वभावत्वं साङ्कर्यव्याप्तमित्यत्राह नचात्रेति। बालस्य युवभावे साङ्कर्यादर्शनादित्यर्थः। अन्यथेति। स्वभावसाङ्कर्यव्याप्त्यङ्गीकारे स्वभावत्वमङ्गीकृत्य स्वभावसाङ्कर्यानभ्युपगमेन परिहारस्यासम्भवे अस्मत्पक्षोक्ता दोषास्तव स्युरित्यर्थः।

यदुक्तं विशिष्टस्योपादानत्वं किं श्रौतम्; उत कल्पितमिति-तत्र क्वचिच्छ्रौतं क्वचित् श्रुतार्थापत्तिकल्पितमिति, वाक्यशेषशाखान्तरनयसिद्धमिति वा विभागः। तथाहि 'तद्धे दंतर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यां व्याक्रियत' इत्यादिषु कारणवाक्येष्वव्याकृतादिशब्देन न ब्रह्मस्वरूपमात्रं प्रतिपाद्यते, ब्रह्मस्वरूपे रूढ्यभावात्, 'तन्नामरूपाभ्यां व्याक्रियत' इत्यनेनैव योगविवक्षायाः स्पष्टत्वाच्च। अतः इदमर्थस्यैव प्रलयकाले नामरूपव्याकरणनिवृत्तिमात्रं विवक्षितम्। इदमर्थश्चिदचिदात्मकः प्रत्यक्षादिसिद्धः। स एव कदाचित् सूक्ष्मावस्थाप्राप्त्या व्यष्टिसमष्टिरूपविकाररहित इत्युक्तं भवति। एवं स्थिते प्रलयदशायामपि सूक्ष्मयोश्चिदचिद्वस्तुनोः सद्भाव उक्तो भवति। तर्हि ब्रह्मणस्तत्र कथं प्रसङ्ग इति चेत् 'तम एकीभवति' इत्यादिप्रतिपन्नस्य सूक्ष्मतमसोऽपि; 'यस्य तमः शरीरम्' इत्यादिभिः ब्रह्मशरीरत्वप्रतीतेः कारणवाक्यान्तरेषु ब्रह्मावस्थानप्रतीतेश्च अव्याकृतशब्द एवाव्याकृतचिदचिद्विशिष्टब्रह्मपर इति निश्चीयते। एवम्, 'असद्वा इदमग्र आसीत,' 'असदेवेदमग्र आसीत्' इत्यत्राप्यसच्छब्देन स्थूलाकारप्रध्वंसायमानसूक्ष्माकारविशिष्टचिदचिच्छरीरकं ब्रह्म

भिधीयते , न तु केवलं ब्रह्म ; असत्त्वविरोधात् । नापि प्रागभावमात्रम् , 'तदसदेव सन्मनोऽकुरुत स्यामिति', 'तदात्मानं स्वयमकुरुत' इत्यादिवाक्यशेषविरोधात् । सूत्रितं च; 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् युक्तेः शब्दान्तराच्च' इति । अतएव, 'तदात्मानं स्वयमकुरुत' इत्यत्रापि नात्मशब्दो ब्रह्मस्वरूपमात्रविषयः, [पूर्वं] असच्छब्द निर्दिष्टसूक्ष्मद्रव्यविशिष्टविषयत्वात् । यथा खल्वव्यतिरेकविवक्षया विशेष्ये स्वशब्दपर्यायोऽयमात्मशब्दः , तथा धर्मविशिष्टेऽपि विशिष्टव्यतिरेक विवक्षया तत्प्रयोगो युज्यते । अत एव हि शरीरविषयेऽप्यात्मानमवलोकयतीत्यादिरभियुक्तानां प्रयोगः । न चात्र भ्रमो निदानम् , परिशुद्धात्मवेदिभिरपि तथा प्रयोगात् । न च त (अ) त्रोपचारः ; निमित्तैक्ये संभवति तत्कल्पनानुपपत्तेः ।

प्रसाद—पूर्वपक्षी ने यह जो पूछा है कि विशिष्ट का उपादानत्व श्रुति सिद्धि है अथवा कल्पित? उसका उत्तर है कि कहीं पर श्रुतिसिद्ध, और कहीं पर श्रुतार्थापत्ति कल्पित तथा कही पर वाक्यशेष शाखान्तरनय सिद्ध । तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' अर्थात् सृष्टि से पूर्व जगत् नाम रूप विभागानर्हंसद्रूप ही था, ब्रह्म ने सृष्टिकाल आने पर इसके नामरूप का विभाग किया । इत्यादि कारण वाक्यों में 'अव्याकृत' शब्द से ब्रह्म के स्वरूप मात्र को नहीं कहा गया है, क्योंकि ब्रह्म आदि शब्दों के समान अव्याकृत शब्द स्वरूपमात्र में रूढ नहीं है। 'तन्नामरूपाभ्यां व्याक्रियत' श्रुति में स्पष्ट रूप से योग विवक्षित हैं । अतएव प्रलयकाल में इदमर्थ के नाम रूप की निवृत्ति मात्र ही विवक्षित है, प्रत्यक्षादि सिद्ध चेतनाचेतनात्मक जगत् ही कभी सूक्ष्मावस्था में व्यष्टि समष्टि रूप विकार से रहित रहता है । इस तरह प्रलय दशा में भी सूक्ष्म चेतनाचेतन वस्तुओं का सद्भाव उक्त है । यदि कहें कि तो फिर प्रलय काल में ब्रह्म के सूक्ष्म चेतना चेतन विशिष्ट होने का प्रसङ्ग कैसे होता है ? तो इसका उत्तर है कि प्रलय काल में अकेला सूक्ष्म तमस् रहता है । इत्यादि वाक्य में प्रतीत सूक्ष्म तमस् भी 'यस्य तमः शरीरम्' वाक्य में ब्रह्म का शरीर प्रतीत होता है । तो दूसरे कारण वाक्यों में, ब्रह्म की स्थिति की प्रतीति न होने के कारण; अव्याकृत शब्द ही अव्यक्त चेतनाचेतन विशिष्ट ब्रह्म का वाचक है । 'असद्वा इदमग्र आसीत्' असदेवेदमग्र आसीत' इत्यादि भी वाक्यों में असत् शब्द से जिसके स्थूल आकार विनष्ट हो गया उस सूक्ष्माकार विशिष्ट चेतनाचेतन शरीरक ब्रह्म को कहा गया है । केवल ब्रह्म ही नही क्योकि ब्रह्म का असत्व से विरोध है । असत् शब्द से प्रागभावमात्र को भी नहीं कहा गया है , क्योंकि ऐसा मानने पर 'असत्' शब्द वाच्य ब्रह्म ने सोचा 'उसने शरीर की सृष्टि की ।' इत्यादि श्रौत वाक्यों से भी विरोध होगा । अभाव के द्वारा क्रियाकारित्व असम्भव है । भगवान् बादरायण ने भी शारीरक मीमांसा में कहा है—'असद् व्यपदेशान्नेति चेन्न, धर्मान्तरेण वाक्यशेषात् युक्तेः शब्दान्तराच्च' अर्थात यदि कहें कि 'असद्वा इदम्' श्रुति में कार्य का प्रलयकाल मे असत्त्व व्यपदेश मे कारण कार्य एव कारण में अनन्यता नहीं हैं; तो ऐसा नहीं कहा जा सकता है, क्योंकि सृष्टिकाल में विद्यमान स्थूलचिदचिद्विशिष्ट विरोधी सूक्ष्मचिदचिदवस्थारूपधर्मान्तर से युक्त होने के कारण उसे असत् कहा गया है । क्योकि तदसदेव सन्मनो कुरुत' इत्यादि वाक्यों में उसी असत् शब्द वाच्य का मनस्कार देखा जाता है । किञ्च लोक में प्रागभावस्थ घट को पिण्ड शब्द से अभिहित किया जाता है । 'तदात्मानम् स्वयमकुरुत' श्रुति में भी आत्मा शब्द ब्रह्म

स्वरूपमात्र को न बतलाकर असत् शब्द से निर्दिष्ट सूक्ष्मद्रव्य को भी बतलाता है। जिस तरह स्वशब्द का पर्यायवाची आत्म शब्द विशेष्यमात्र में स्वरस है, उसी तरह उसका विशिष्ट से अभिन्न की विवक्षा से उसका धर्म विशिष्ट में प्रयोग उचित है। प्रामाणिकपुरुष शरीर के भी अर्थ में आत्मा शब्द का प्रयोग करते हुए कहते हैं—यह अपने को देख रहा है। इस प्रयोग को भ्रान्त प्रयोग इसलिए नहीं कहा जा सकता है कि परिशुद्धात्मवेत्ता भी इस तरह का प्रयोग करते हैं। निमित्त की एकता के कारण इसे औपचारिक प्रयोग भी नहीं कहा जा सकता है। एकाधिक तथा अत्यन्त विशकलित अर्थों में ही साम्यविशेषको लेकर औपचारिक प्रयोग होता है।

'तम एकीभवती' त्यादि। तमसः शरीरत्वोक्तिस्तद्वाचकाव्याकृतशब्दस्य ब्रह्मपरत्वसम्भवद्योतनार्था। कारणेति। 'ब्रह्म वाइदमेक एवाग्र आसी' दिति ब्रह्मणः अप्ययस्थानत्वेनावस्थानप्रतीतेरित्यर्थः। ततश्च वाक्यद्वये नाव्याकृतब्रह्मणोरुभयोरपि लयस्थानत्वप्रतीतेरव्याकृतस्य ब्रह्मशरीरतयाऽव्याकृतशब्दस्य ब्रह्मपर्यन्ताभिधानसामर्थ्याद्याव्याकृतशब्दस्य विशिष्टपरत्वात। 'तद्धेदं तर्हीं' ति श्रुतिर्विशिष्टोपादानत्वे मानमिति सिद्धम्। असच्छब्देनेति। 'असद्वा इदमग्राआसी' दिति वाक्यस्य लयपरत्वात् पूर्वस्थूलाकारप्रध्वंसायमानत्वमुक्तम्; तच्च वास्तवं [त्वं] न त्वसच्छब्दार्थः, 'इदमसदासी' दित्येतत्प्रतियोगिकत्वावगमात। प्रध्वंसशब्देनाभावमात्रं वा विवक्षितम्। इदमग्रेऽसदासीदिति प्रागभावमात्रं प्रतीयते न ब्रह्मेत्यत्राह नापीति। एतेन सूक्ष्मावस्थचिदचिन्मात्रमुच्यते इत्यपि निरस्तम्, मनस्कारासम्भवात्। 'असद्वा इदमग्र आसी' दिति कार्यस्य प्रागसत्त्वव्यपदेशात् कार्यकारणयोरन्यत्वं नेति चेन्न,—पूर्वं सत एव कार्यस्वरूपस्य स्थूलावस्थाविरोधिसूक्ष्मावस्थारूपधर्मान्तरेण योगादसत्त्वव्यपदेशः। कुत इदमवगम्यते? 'तदसदेव सन्मनोकुरुत' 'तदात्मनं स्वयमकुरुते' इति वाक्यशेषात्। युक्तेः पिण्डावस्थायां घटो नास्तीति व्यवहारस्य पिण्डावस्था विषयस्य दर्शनात्। शब्दान्तरात्—'सदेव सौम्येदमग्र आसी' दिति शब्दान्तराच्चेति सूत्रार्थः। असच्छब्दनिर्दिष्टेति। तच्छब्दस्यासद्विषयत्वात्तत्समान विषयत्वादात्मशब्दस्येत्यर्थः। स्वरूपशब्दवदात्मशब्दस्य विशेष्यपरामर्शित्वं स्वरसमित्यत्राह यथाखल्विति। अतएवहीति। अत्रावलोकयतीत्यत्र चाक्षुषज्ञानविषयत्वम् गम्यते, तच्छरीरस्यैव साक्षादिति तद्वारैव शरीरिणोऽवलोकनविषयत्वम्, अतोऽवलोकनकर्तृपरामर्श्यात्मशब्दो विशिष्टपर एवेति भावः। शरीरविषयेऽपीति। विशेषणीभूतशरीरविषयेऽपीत्यर्थः। निमित्तमव्यतिरेकः।

अस्तु वा ब्रह्मस्वरूपवाची तत्राऽऽत्मशब्दः, तथापि वैशिष्टयं दुस्त्यजम्, यथा भगवान् श्वेतः इत्यत्र विग्रहद्वार सिध्यति; तथाऽत्रापि; 'अकुरुत' इत्यादिसामर्थ्याच्छरीरद्वारेति सिध्यत्येव। अतः, 'ब्रह्मवनम' इत्यादिनोपादानत्वोद्दे (पदे) शोऽपि विशिष्टविषयः। मृत्तत्कार्यदृष्टान्तादिकं च विशिष्टप्रदर्शनार्थमेवेति न ततोऽपि विरोधः। एवं च सति ब्रह्मस्वरूपवाचिब्रह्मात्मादिशब्दैः कारणनिर्देशेऽपि निर्विकारश्रुत्यन्यथानुपपत्त्या विशिष्टस्योपादानत्वं कल्प्यताम्। यद्वा वाक्यशेष शाखान्तरादिसिद्धानुप्रदेश-सर्वशरीर-

त्वादिवशेनात्रापि इदमिति निर्दिष्टस्य अग्र इति निर्दिश्यमानकालविशेषोपलक्षितसूक्ष्मावस्थस्य तदानीम् ब्रह्मात्मकत्वप्रतिक्षेपाय ब्रह्मात्मकत्वप्रतिपत्तये ब्रह्मादिशब्दसमानाधिकरणनिर्देश इति सिध्यतीति न स्वरूपपरिणामवादस्य विवर्तवादस्य वा कश्चिदवकाशो दृश्यते ।

प्रसाद—वहाँ पर यदि आत्मा शब्द को ब्रह्म स्वरूप का वाचक भी माना जाय तो, भी उसके वैशिष्ट्य को त्यागा नहीं जा सकता है। जैसे 'भगवानश्वेत हैं' इस वाक्य में श्वेत शब्द भगवान की श्वेतता विग्रह द्वारा बतलाता है, उसी तरह 'अकुरुत' वह क्रिया पद ब्रह्म के क्रिया सामर्थ्य को शरीर द्वारा सूचित करता है। अतएव 'ब्रह्म वनम्' इत्यादि वाक्यों में भी विशिष्ट ब्रह्म का ही उपादानत्व बतलाया गया है, 'वाचारम्भण' श्रुति में भी मृतिका तथा उसके कार्यों का उदाहरण ब्रह्म की विशिष्टता ही बतलाता है। अतएव आत्मा शब्द को विशिष्ट परक मानने में कोई भी विरोध नहीं हैं। इस तरह ब्रह्म के स्वरूप के वाचक ब्रह्म तथा आत्मा आदि शब्दों द्वारा कारण का निर्देश किए जाने पर भी निर्विकार श्रुति को अन्यथानुपपत्ति के कारण विशिष्ट ब्रह्म को ही उपादान मानना चाहिए। अथवा वाक्य शेषों शाखन्तर प्रसिद्ध अनुप्रवेश तथा सर्वशरीरत्वादि के द्वारा यहाँ भी 'इदम्' पद के द्वारा निर्दिष्ट 'अग्रे' पद से निर्दिश्यमान काल विशेषोपलक्षित सूक्ष्मावस्थावस्थित जगत् के सृष्टि से पूर्वकाल में अब्रह्मात्मकत्व का खण्डन करने के लिए तथा ब्रह्मात्मकत्व की प्रतीति कराने हेतु ब्रह्मादि शब्द का जगत् के सामानाधिकरण्येन निर्देश किया गया है, यह सिद्ध होता है, अतएव स्वरूपतः परिणामवाद अथवा विवर्तवाद का कोई यहाँ अवसर ही नहीं है, यह भी माना जा सकता है।

अत इति। विशिष्टोपादानतया उपादानत्वविधिवाक्यसिद्धत्वादुपादानत्वोद्देशोऽपि विशिष्टविषयार्थ इत्यर्थः। ततश्चोपादानोद्देशेन ब्रह्मत्वविधिपरो ब्रह्मशब्दः सूक्ष्मचिदचिद्विशिष्टार्थ इत्यर्थः ॥

ननु दृष्टान्ते साक्षादवस्थाश्रयमृदाद्युक्त्या दार्ष्टान्तिकेऽपि साक्षादवस्थाश्रयत्वेनोपादानत्वम् प्रतीयते, तत्कथं विशिष्टोपादानत्वसिद्धिरित्यत्राह मृत्तत्कार्येति। दृष्टान्तवाक्यं विशिष्टस्य उपादानभावमुपपादयितुं प्रसिद्धोपादानमाह, नैतावता साक्षाद्विकाराश्रयत्वप्रसङ्गः, तदंशे दृष्टान्तविवक्षाया अभावात्। एकविज्ञानेन सर्वविज्ञानप्रसिद्ध्यर्थमुपादानोपादेयभावेनैक्यमात्रं हि दृष्टान्तेन साध्यते। ब्रह्मस्वरूपवाचीति। 'इदं ब्रह्मासी' दिति कृत्स्नस्यापि कार्यवर्गस्य ब्रह्मभावः प्रतीयते 'अग्र' इत्युक्त्या अयं ब्रह्मभावोपदेशो न स्वतःसिद्धशरीरात्मभावनिबन्धनः-- किन्तूपादानोपादेयभावनिबन्धन इत्यवगम्यते, स्वरूपेण चोपादानत्वं निर्विकारत्व श्रुतिविरुद्धम्। अतोऽद्वारकसाधनत्वस्य सद्वारकसाधनत्वस्य च लोके दर्शनात् साक्षात्साधनत्वस्यासम्भवेन अतसाधनत्वान्यथानुपपत्त्याऽपूर्वद्वारकत्ववदुपादानत्वस्यापि चिदचिद्द्वारकत्वङ्कल्प्यते। अद्वारकाश्रयत्वस्य सद्वारकाश्रयत्वस्य च लोके दर्शनात् अवस्थाश्रयत्वं सद्वारकं कल्प्यते, घटेनाध्रियमाणस्योदकस्य देवदत्तोऽप्याश्रय एव, अन्यथा श्रयानुपपत्तेः। एवं सद्वारकाश्रयत्वम् प्रासादे खट्वायां शेत इत्यादौ प्रसिद्धमेव। एवञ्च ब्रह्मभावश्रवणसहितनिर्विकारत्वं श्रुतमन्यथानुपपद्यमानं विशिष्टोपादानत्वकल्प-

कम् । यद्वेति । तृतीयान्तस्य सूक्ष्मावस्थस्येत्यनेनान्वयः । वशेन लब्धस्य ।कालविशेषोपलक्षित-सूक्ष्मावस्थस्येत्यर्थः । इममग्रे एकं सदासीदित्यनेन इदंशब्दनिर्दिष्टस्य स्थूलावस्थाप्रहीणब्रह्मभावः प्रतीयते , एकशब्दस्य स्थूलावस्थाप्रहाणार्थत्वात , स्थूलावस्थाश्रयत्वस्य च साक्षात्परंपरया च सम्भवात् , तत्प्रहाणमपि तथा , तत्र ब्रह्मणः साक्षात्परम्परया वा स्थूलावस्थाप्रहाणमित्यपेक्षायां 'अनेन जीवेनात्मनानुप्रविश्ये' ति तेजः प्रभृतिकार्यस्यानुप्रवेशश्रवणादनुप्रवेश्यस्य चानुप्रवेष्टृब्रह्मणो भेदावश्यम्भावात् कार्यस्य तेजः प्रभृतेरग्रकाले ब्रह्मातिरिक्तम् सूक्ष्मावस्थात्मकरूपान्तरं लब्धम ; तदेवोपस्थितत्वादपेक्षितत्वाच्च द्वारतयोपादानभूतस्य ब्रह्मणो विशेषणत्वेन स्वीक्रियते , 'ब्रह्म वा इद' मित्यादौ तु शाखान्तरे तेजः प्रभृतिसूक्ष्मावस्थारूपस्य तमसो 'यस्य तमः शरीर' मित्यादि-श्रुत्या ब्रह्मशरीरत्वप्रतीतेः शरीरत्वेन तद्व्यतिरिक्तत्वात्तदेव द्वारतया उपादान भूतब्रह्मविशेषणत्वेन स्वीक्रियते । एवम् न्यायाद्विशेषणलाभः । आदिशब्देन पृषदाज्यन्यायो विवक्षितः । एवञ्च ब्रह्मश-ब्दसमानाधिकरणनिर्देशो न ब्रह्मस्वरूप परिणामप्रतिपादनार्थः , अपितु कारणस्य स्थूलावस्थाप्र-हाणाश्रयस्याब्रह्मात्मकता प्रतिक्षेपार्थः । इदंशब्दस्य ब्रह्मपर्यन्तत्वात्सामानाधिकरण्योपपत्तिः ।

यत्तु समस्तभेदरहितस्यैकस्यैव कारणवाक्ये अवधारणात् तद्विरुद्धं विशेषणकल्प नमित्यादि , तदपि स्वपक्षमपरामृश्योक्तम् , प्रलयदशायामपि अविद्यायाः सूक्ष्मोपाधेः शक्तेर्वा ब्रह्मसम्ब (न्धानुब) न्धित्वेन त्वया त्वदासन्नैश्च स्वीकारात् । वयं तु वाक्यान्तरा नुसारेण , निर्विकारनिरवद्यश्रुतिविरोधपरिहारार्थं च प्रपञ्चोपादानभूतब्रह्मविशेषणं तच्छरीर [ भूत ] मित्यनुमन्यामह इति विशेषः । अविद्यामिथ्यात्वपक्षे अवधारणमसंकुचितमित चेन्न, अग्र इत्यादिवैयर्थ्यस्य सद्विद्यानिरूपणे स्थापनात ।

किञ्च , ब्रह्मात्मादिशब्देषु स्वरूपपरेष्वपि वैशिष्ट्यलाभो दर्शितः । सच्छब्दं तु विमृशामः—इदमग्रे सदेवासीदिति इदमर्थ (स्य ) सत्ताविधिपरे वाक्ये न तावत सच्छब्देन ब्रह्मस्वरूपमात्रं प्रतिपाद्यम् , अनन्तरवाक्यविरोधात् , अनन्तरमेव हि , ' तद्धैक आहुः असदेवेदमग्र आसीदिति । कुतस्तु खलु सोम्यैवं स्यात......कथमसतः सज्जायेत इति । सत्त्वेव सोम्येदमग्र आसीत्' इत्युच्यते । अत्र हि कार्यद्रव्यस्य पूर्वमविद्यमानत्वपक्षः प्रति-क्षिप्यते , न पुनरब्रह्मात्मकत्वपक्षः । तथा सति, 'कथमसतः सज्जायेत' इति लोकदृष्ट्या व्याप्तिप्रदर्शनायोगात (गाच्च) । अतः , 'सदेव' इत्यत्र वाक्ये प्रपञ्चस्यैव 'बहु स्याम्' इति वक्ष्यमाणबहुत्वावच्छिन्नसत्ताप्रतिपक्षभूतैकत्वावच्छिन्नसत्तायोग एव प्रतिपाद्यते । अतो ब्रह्मै वात्र मृग्यम् , न तु सूक्ष्मचिदचिद्वस्तुसद्भावः । ननु सच्छब्दनिर्दिष्टस्यैव, बहु स्यामिति तदैक्षत बहु स्यामिति बहुभवनसङ्कल्परूपेक्षणश्रवणात , [तस्य ?] अचेतने, प्रतिसंहृतकर-

ग्रग्रामे चेतनेऽप्ययोगात् , उत्तरत्र सर्वत्र 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः,' 'सता सोम्य तदा सम्पन्नो भवति ; सति संपद्यन विदुः' इत्यादिषु सच्छब्दस्य नामवत्प्रयोगाच्च 'सदेव सोम्य' इत्यत्रापि सच्छब्देनानवच्छिन्नसत्ताविशिष्टब्रह्मस्वरूपमेव विवक्षितमिति चेत्—सत्यम्, तथापि पूर्वोक्तानुपपत्त्या स्वरुपमात्रविषयत्वासम्भवे ; अनुपपत्त्यन्तरेण (च) ब्रह्मस्वरूपपरत्वे चावश्यंभाविनि अगत्या श्रुत्यर्थापत्तिबलेन सूक्ष्मचिद्चिद्वैशिष्टयव्यवहितसत्ता (त्वा) वच्छिन्नं ब्रह्मात्र सदिति प्रतिपाद्यत इति निश्चीयते । तथा सति, 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत;' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिश्रुतिभिरपि सङ्गतिः सिध्यति ।

प्रसाद—अद्वैती विद्वानों ने यह जो कहा है कि कारण वाक्यों में सभी भेदों से रहित एक ही ब्रह्म की उपादानता निर्धारित की गयी है; अतएव उस ब्रह्म की विशिष्टता की कल्पना कारण वाक्यों के निर्धारण के विरुद्ध है । अद्वैती विद्वानों ने अपने पक्ष का विचार किए विना ही इस प्रकार की बात को कहा है । किञ्च अद्वैती तथा अद्वैतियोंके सन्निकटवर्ती सांख्य विद्वान् प्रलय दशामें भी अविद्या या उसकी सूक्ष्मोपाधि अथवा उसकी शक्ति को स्वीकारते ही हैं । हम तो दूसरे श्रुति वाक्यों के अनुसार ब्रह्म को निरवद्य तथा निर्विकार बतलाने वाली श्रुतियों के विरोध का परिहार करने के लिए प्रपञ्च के उपादान ब्रह्म के विशेषण रूप से उसके शरीर को स्वीकारते हैं, यह हम में और आप में अन्तर है । यदि कहेंकि अविद्या को मिथ्या मानने वाले हमारे मत में अवधारण का असंकुचित निर्वाह होता है तो ऐसा नहीं कह सकते; क्योंकि सद्विद्या के निरूपण के प्रसङ्ग में मैंने सिद्ध किया है कि आपके मत में श्रुति के 'अग्रे' इत्यादि पद व्यर्थ सिद्ध होंगे । किञ्च अभी अभी मैंने कहा है कि 'ब्रह्म' 'आत्मा' आदि शब्दों को स्वरूप परक मानने पर भी जगदुपादान के वैशिष्टय का त्याग नहीं किया जा सकता है ; अब हम श्रुति के 'सत्' शब्द का विचार करते हैं । 'इदमग्रे सदेवासीत्' इस इदमर्थ की सत्ता का विधान करने वाले वाक्य में सत् शब्द के द्वारा ब्रह्म के स्वरूप मात्र का प्रतिपादन नहीं माना जा सकता है । क्योंकि ऐसा मानने पर आगे के वाक्य से विरोध होगा । इसके बाद का वाक्य है—तद्धैक० इत्यादि—अर्थात् ऐ सोमरसपानार्ह सच्छिष्य । एक तरह के लोग कहते है कि सृष्टि से पूर्व असत् ही था । सोम्य यह कैसे सम्भव हो सकता है ? असत् से सत् कैसे उत्पन्न हो सकता है ? अतएव ऐ सोम्य सृष्टिपूर्व काल में 'सत्' ही था। इस वाक्य में सृष्टि से पूर्व कार्य द्रव्य जगत् को अविद्यमान मानने वालों के पक्ष का खण्डन किया गया है, अब्रह्मात्मकावदी पक्ष का नहीं । क्योंकि अब्रह्मात्मकत्वपक्ष का खण्डन होने पर असत् से सत् कैसे हो सकता है? यह चना से धान कैसे हो सकता है ; इत्यादि लौकिक दृष्टि से व्याप्ति नहीं कही जा सकती है । अतएव जिसकी 'बहुस्याम्' श्रुति में बहुत्वावच्छिन्न सत्ता बतलायी जायेगी; उस प्रपञ्च का ही एकत्वावच्छिन्न ब्रह्म 'सदेव' इस वाक्य में बतलायी जा रही है । अतएव यहाँ पर अन्वेष्टव्य ब्रह्म मात्र ही है सूक्ष्मचिदचिद् वस्तु का सद्भाव नहीं । यदि कहें कि सत् शब्द से निर्दिष्ट वस्तु का ही 'बहुस्याम्' तदैक्षत बहुस्याम्' इत्यादि वाक्यों में अनेक होने का सङ्कल्प सुना जाता है, यह बहुभवन संकल्प न तो अचेतन में सम्भव है और न तो प्रलयकालिक उपसंहृतकरण कलेवर वाले जीवों में सम्भव है; आगे की 'सन्मूलाः सोम्येमाः प्रजाः

सदायतनाः सत्प्रतिष्ठाः' अर्थात् सोम्य ! इन सारी प्रजाओं का मूल आश्रय और आधार सत् ही है। 'सता सोम्य तदा सम्पन्नो भवति, सति सम्पद्य न विदुः' अर्थात् ऐसोम्य सुषुप्ति काल में जीव सत् में लीन हो जाता है। सत् में लीन जीवों को कुछ भी ज्ञात नहीं होता। इत्यादि वाक्यों में सत् शब्द का नाम के समान प्रयोग किया गया है, अतएव सदेव श्रुति के शब्द से भी अनन्त सत्ता सम्पन्न ब्रह्मस्वरूप ही विवक्षित हैं। तो आप के इस कथन का उत्तर है कि ऐसा होने पर भी लोक दृष्ट व्याप्ति प्रदर्शन रूप पूर्वोक्त अनुपपत्ति के कारण; सत् शब्द को स्वरूपमात्र का बोधक नहीं माना जा सकता है। सत् में इक्षण तथा उसके नाम के तुल्य प्रयोग रूपी भवदिष्ट अनुपत्ति के द्वारा उसके (ब्रह्म के) स्वरूप परक होने पर कोई दूसरा रास्ता न होने के कारण श्रुत्यर्थापत्ति के द्वारा यह निश्चित होता हैं कि इस श्रुति के सत् शब्द के द्वारा चित् एवं अचित् के द्वारा सत्तावच्छिन्न ब्रह्म का अभिधान होता है। ऐसा मान लेने पर 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नाम रूपाभ्यां व्याक्रियत' 'आत्मा इदमेक एवाग्र आसीत्' इन दोनों श्रुतियों से भी संगति बैठ जाती है।

तदपीत्यवधारणम्। सर्वैरपि संकुचितविषयमेव वाच्यमिति भावः। सर्वमतेऽप्यवधारणसंकोचाविशेषे पराभिहितविशेषणमेव कुतो नाद्रियते इत्यत्राह वयंत्विति। वाक्यान्तरे कृत्स्नस्य ब्रह्मशरीरत्वावगमात शरीरतया सिद्धस्यैव ब्रह्मविशेषणत्वमङ्गीक्रियते, अविद्याविशेषणाङ्गीकारे ब्रह्मणः सावद्यत्वप्रसङ्गात्, शक्त्याङ्गीकारे ब्रह्माभिन्नोपाध्याङ्गीकारे च ब्रह्मणः सविकारत्वप्रसङ्गः, शरीरस्य विशेषणत्वाङ्गीकारे न सावद्यत्वम्, विकारस्य शरीरगतत्वात् न स्वरूपगतत्वमिति। वैयर्थ्यस्येति। इदानीमव्यवधारणसम्भवादिति भावः। अनन्तरवाक्यविरोधादित्यादि। सच्छब्दस्य ब्रह्मस्वरूपपरत्वे 'असदेवे' त्यादिना अब्रह्मकत्वपक्ष एवं प्रतिक्षेप्यः स्यात्, तच्चायुक्तमिति भावः। तथासतीति। अब्रह्मणो मृदादेर्घटोद्युत्पत्ति दर्शनादिति भावः।

ननु 'कथमसतः सज्जायेते' त्यत्राब्रह्मणो ब्रह्मात्मकं कथं जायेतेत्यर्थः, तत्र च न व्याप्ति सम्भव इति चेन्न;—तथापि ब्रह्मात्मकमिदं जगदब्रह्मणः कथम् जायत इति प्रदर्शनायोगात्, ब्रह्मात्मकत्वस्य जगति सिद्धवत्कारासम्भवात्। नत्विति। अस्मिन् वाक्ये सूक्ष्मचिदचिद्वस्तुसद्भावो न मृग्य इत्यर्थः।

ननु ब्रह्म न मृग्यमीक्षणादिना तस्यैव स्पष्टम् प्रतीतेरित्याक्षिपति नन्विति। उत्तरत्रेति 'सन्मूला' इत्यादिषु सच्छब्दस्य विशेष्याप्रयोगात्सापेक्षस्य समासायोगाच्च नैरपेक्ष्येण नामत्वात्, बहुत्वावच्छिन्नसत्ताप्रतिपक्षैकत्वावच्छिन्नसत्तायोगस्य च 'एकमासी' दिति क्रियापदेन कृतत्वात्; 'सन्मूला' इत्यादिष्विव 'सदेवे' त्यत्रापि सच्छब्दस्तत्कालेक्षणकर्तुर्ब्रह्मण एव नाम, न च तदसाधारणप्रवृत्ति निमित्तासम्भवः, अनवच्छिन्नसत्तायोगस्य प्रवृत्तिनिमित्तत्वादित्यर्थः। नामवदिति। 'तदह्' मिति वतिः। नामत्वानुरूपमित्यर्थः। सत्यमिति। ब्रह्मपरत्वमङ्गीकृतम्, स्वरूपमेवविवक्षितमित्यवधारणार्थंचिदचिद्विशिष्टचाभावेऽनङ्गीकारः। पूर्वोक्तेति। लोकदृष्टव्याप्तिप्रदर्शनायोगादित्यर्थः। अनुपपत्त्यन्तरेणईक्षणनामभ्यामित्यर्थः। जगत्येत्यादि। निर्विकारत्वश्रुत्यनुपपत्त्या विशेषणविशिष्ट परत्वमावश्यकम्, लोकदृष्टया व्याप्तिप्रदर्शनार्थञ्च सत्त्वपुरस्कारेण

प्रवृत्तिर्बोध्या, एवञ्च साक्षात् सत्त्वविशिष्टरूपेणाभिधाने चिदचिद्विशेषणविशिष्टप्रतिपादनासम्भवादगत्या चिदचिद्द्वारा सत्तावच्छिन्नम् ब्रह्म सदिति प्रतिपाद्यत इत्यर्थः। चिदचिद्वैशिष्ट्येन हेतुना व्यवहिता चिदचिद्वतत्त्वाद्व्यवहिता या सत्तेत्यर्थः। न च शब्दस्य योगात् प्रवृत्तौ विशेष्यसाकांक्षता, 'प्रोक्षणीरासादय' तीत्यादिषु प्रोक्षणीशब्दस्य यौगिकत्वेऽपि अप्स्वेव शास्त्रस्थानाम् प्रचुरप्रयोगादपां प्रतीत्या विशेष्यनिराकांक्षत्ववत 'प्रोक्षणीपात्र' मित्यादौ तत एव समासवच्च, विशेष्यनिराकांक्षत्वस्य 'सन्मूला' इत्यादौ समासस्य चोपपत्तेः। नन्वर्थापत्त्या उपादानत्वे विशेषणवैशिष्टयकल्पनेऽपि न तस्य किंचिच्छब्दवाच्यत्वकल्पकमस्ति; एवञ्चाव्यवहितसत्तावैशिष्ट्यं सच्छब्दार्थोऽस्त्वित्यत्राह तथा सतीति। 'तद्वेद' मित्यत्र विशेषणस्य 'आत्मा वा इद' मिति विशेष्यशब्दतः प्रतीतेस्तदुभयश्रुत्यैकार्थ्याय व्यवहितसत्तायोग एवात्राश्रीयत इति भावः।

अस्तु वा; 'सदेव सोम्येदमग्र आसीत्' इत्यत्र सच्छब्देन ब्रह्मस्वरूपनिर्देशः—तथापि, 'तद्धैक आहुः' इत्यादिना असत्कार्यवादप्रतिक्षेपात; कार्यद्रव्यस्य पूर्वं विद्यमानत्वप्रतीतेः तद्विशिष्ट ब्रह्मैवात्र सच्छब्दार्थ इति शक्यतेऽवगन्तुम् अतएव; 'शरीरिभूतपरमात्माभिधायिभिः सद्ब्रह्मादिशब्दैः' इति भाष्यमपि सुघटितम्। न चात्र शक्तिद्वयकल्पनागौरवम्; विशिष्टपरत्वे, अपर्यवसानेन ब्रह्मणि सच्छब्दवृत्तेः, स्वरूपपरत्वे तु श्रुतार्थापत्त्या शाखान्तरानुसारेण वा चिदाचिद्वैशिष्टयस्यापि क्रोडीकारोपपत्तेः। न चात्र लक्षणा दोषः, तथापि सर्वशब्दलक्षणापक्षादस्यैवोपादेयतमत्वात्। यः पुनः, 'सर्वपदार्थानुवृत्तसत्तामात्रमेवात्र सच्छब्दार्थः, स एव च ब्रह्म' इत्याह, तत्पक्षे तु सकलश्रुतिस्मृतिन्यायविरोधः, प्रपञ्चमिथ्यात्वप्रसञ्जकाभावेनाप्रकृतत्वात् इदानीं तत्रोदास्महे। तत्रापि हि प्रपञ्चस्यैव सत्त्वं प्रतीयमानं कारणदशायां कार्यदशायां च दशाद्वयविषय सच्छब्दद्वयेन प्रतिहितं भवति।

प्रसाद—'सदेव' श्रुति के 'सत्' शब्द के द्वारा ब्रह्मके स्वरूप का निर्देश मान लेने पर भी 'तद्धैक आहु;' इत्यादि द्वारा असत् कार्यवाद का प्रतिक्षेप करने के कारण तथा कार्यद्रव्य की पूर्वविद्यमानता प्रतीत होने के कारण चिदचिद्विशिष्टब्रह्म का ही यहाँ सत् शब्द से अभिधान होता है, यह माना जा सकता है; अतएव आत्मभूत परमात्मा के वाचक सद् ब्रह्म आदि शब्द हैं, यह श्रीभाष्य वाक्य भी समन्वित हो जाता है। यहाँ पर एक शब्द में दो प्रकार की शक्ति की कल्पना जन्य गौरव दोष का भी प्रसङ्ग नहीं है। क्योंकि सत् शब्द की वृत्ति का विशिष्ट ब्रह्म में पर्यवसान माना जाता है। श्रुतार्थापत्ति अथवा शाखान्तर के अनुसार उसको स्वरूप परक मानने पर तो उसीके अन्तर्गत उसकी चिदचिद् वैशिष्ट्य परता भी आ जाती है। ऐसा स्वीकार करने में लक्षणावृत्तिजन्य दोष इसलिए नहीं माना जा सकता है कि आप तो 'तत्त्वमसि' आदि वाक्यों के सभी पदों में लक्षणा मानते है; उसकी अपेक्षा तो ऐसा मानना ठीक ही है। अद्वैती विद्वानों ने यह जो कहा है कि यहाँ सत् शब्द का अर्थ सभी पदार्थों में अनुवर्तित होने वाली सत्ता

मात्र है, और वही ब्रह्म है , तो उनके इस कथन से तो सभी श्रुतियों, स्मृतियों को न्यायों से विरोध होता है , क्योंकि प्रश्न है कि क्या वे-प्रपञ्च के मिथ्या होने के कारण, उसके अधिष्ठान रूप से अनुगत होने वाली सत्ता 'सत्' शब्द वाच्य है, अथवा सत्य प्रपञ्च में व्यापक ब्रह्म ही सर्वानुगत् सत्ता है , और वही सत शब्द का अर्थ है ? प्रथम पक्ष के खण्डन में हम इसलिए उदासीन हैं कि प्रपञ्च के मिथ्यात्व का साधक कोई भी प्रबल प्रमाण नहीं है । सदेव श्रुति में भी कारण दशा तथा कार्य दशा दोनों में प्रपञ्च की ही सत्ता प्रतीत होती है और उसकी ही सिद्धि दशाद्वय विषयक दो 'सत्' शब्दों से होती है।

अस्तुवेति । ब्रह्मस्वरूपनिर्देशः--ब्रह्मास्वरूपे ऽनवच्छिन्नसत्ताप्रवृत्तिनिमित्तपुरस्कारेण मुख्यवृत्तिः । 'तद्धैक आहु' रिति कार्यद्रव्य प्रागविद्यमानतयावगतस्यैव परिणामित्वात् ब्रह्मशब्द-स्तद्विशिष्टपर इत्यर्थः । अतएवेति । स्वरूप एव शक्यत्यङ्गीकारादित्यर्थः ।

ननु पक्षद्वयेऽपि विशिष्टपरत्वाङ्गीकारात ब्रह्मणि प्रकृतौ च शक्तिद्वयं स्यादित्य आह नचेति । अपर्यवसानम—विशेषणशक्तेर्विशेष्यपर्यन्तता । श्रुत्यर्थापत्त्येति प्रसङ्गादुक्तम् । शाखा-न्तरानुसारेणेति । प्रकृताभिप्रायम् । 'तद्धे दन्तर्ह्यव्याकृतमासी' दित्येतच्छाखान्तरम् , तत्समानार्थ त्वायेहापि विशिष्टपरत्वमित्यर्थः । स्वरूपवाचिना विशेषक्रोडीकारे लक्षणा स्यादित्यत्राह न चात्रे ति । न्यायानुसारिणी लक्षणा न दोषायेत्यर्थः । दोषत्वमङ्गीकृत्याह तथापीति । किं प्रपञ्चस्य मिथ्यात्वेन तत्राधिष्ठानतयानुगता सत्ता सच्छब्दार्थ इत्युच्यते किं वा सत्यभूत एव प्रपञ्चे व्याप कीभूतं ब्रह्मैव सर्वानुगता सत्ता सैव सच्छब्दार्थ इति ? आद्य आह प्रपंचेति । सत्यभूतप्रपंचा-त्मकसत्तायास्तदुपादानत्वं हि न प्रपंचमिथ्यात्वापादकम , अतस्तदिह निराक्रियत इत्यर्थः । न तस्य प्रपंचमिथ्यात्वसाधकत्वाभावमात्रम् , प्रत्युतास्मिन पक्षे कारणवाक्येन कार्यकारणादशयोः सत्त्वं व्यवस्थाप्यत इत्याह तत्रापिहीति । तस्मिन् पक्ष इत्यर्थः । प्रतीयमानमिति प्रत्यक्षादिनेति शेषः । 'इदं सदेवे' त्येकः सच्छब्दः, 'कथमसतः सजायेत 'ततो वै सज्जायत' इत्यपरः । सिद्धान्त इवेत्यपिशब्दस्य भावः ।

यद्वा तत्पक्ष इति । तत्रैव सच्छब्दार्थः सैव च ब्रह्मेत्ययमर्थः सकलश्रुति स्मृतिन्यायविरुद्ध इत्यर्थः । ब्रह्मस्वरूपं सच्छब्दार्थ इत्यस्य पक्षेऽङ्गीकृतत्वात्ततो विशेषद्योतनार्थः तु शब्दः । कथं श्रुत्यादिविरोध इत्यत्राह प्रपंचेति । सत्रैव ब्रह्म सच्छब्दार्थश्च इत्येतन्निरासस्याप्र-कृतत्वान्न तत्प्रपंचयत इत्यर्थः । सच्छब्दस्यात्र सत्तापरत्वस्य निराकार्यत्वेऽपि सत्तार्थकत्वमात्रस्या-निराकार्यत्वादिति भावः । अप्रकृतत्वं कुत इत्यत्राह प्रपंचेति । मिथ्यात्वप्रसञ्जकस्य कस्यापि तेना लाभादित्यर्थः । नन्वग्रे सत्तादात्म्यप्रतिपादनादुपादानत्वपर्यवसानात्तदेव मिथ्यात्वप्रसञ्जकमित्य-त्राह तत्रापिहीति । ब्रह्मस्वरूपं इति पक्षे वर्णितरीत्या अनन्तरवाक्यपर्यालोचनादिवशेन कार्य-कारणावस्थयोः सच्छब्दस्य सत्तायोगिपरत्वान्न सत्तातादात्म्यमिह प्रतिपाद्यम , एवंच प्रत्यक्षप्रमि-तसत्तायोगस्य श्रुत्यापि प्रतिपादनात् सत्यत्वमेव प्रतिष्ठितं भवति , न तु मिथ्यात्वप्रसङ्ग इत्यर्थः। ब्रह्मणः सत्तारूपत्वे तन्निराश्रयत्वादिश्रुतिस्मृतिविरोधः, नीरूपस्य चक्षुरादिना सन् घट इत्यादिरूपेण ग्रहणासम्भवान्नयायविरोधः , सत्तार्थत्वे तु व्याकरणविरोधः , सच्छब्दप्रवृत्तिनिमित्तानुशिष्टस-

लप्रत्ययान्तत्वेन सत्सत्त शब्दयोर्भिन्नार्थत्वात् घटादिशब्दवत् प्रवृत्तिनिमित्तविशिष्टवाचकत्वस्याव-श्यकतया प्रवृत्तिनिमित्तमात्रबाधकत्वमात्रमयुक्तम् , यथाऽवेष्ट्यधिकरणे राजशब्दार्थसिद्ध्युपजीवनेन राज्यशब्दार्थसिद्धेर्न राज्ययोगो राजशब्दार्थ इत्युक्तम् ; तथा सच्छब्दार्थसिद्ध्युपजीवनेन सत्ता शब्दार्थसिद्धेस्तदधिकरणन्यायविरोधश्चेत्यर्थः ।

किञ्च यदिदं विशिष्टस्योपादानत्वं श्रौतं कल्पितं वेति–तत्र भवन्तमपि पृच्छामः अविद्याविशिष्टस्योपादानत्वं श्रौतं कल्पितं वेति । न प्रथमः , सद्ब्रह्मादिशब्देष्वविद्यासौरभस्याप्यनाघ्राणात् । नाप्युत्तरः , कल्पकाभावादेरविशेषात् । तत्सद्भावेऽपि प्रत्यक्षादिस–मस्तप्रमाणप्रत्यनीकदुर्घटा (दुर्घटिता ) भिमतार्थक्लृप्तेरपि स्वहृदय (सहृदय ) संवादिसमीचीनप्रक्रियाकल्पनस्योपपन्नत्वात् । मृद्घटादिदृष्टान्तेन स्वरूपोपादानत्वप्रतिपादनप्रसङ्गम् तु यदि भास्करादयः शृणुयुः , तदा ते प्रथमप्रतीतनिर्विकार ( सविकार) तादिमात्रव्याघात (ादि) रचनाकल्पितव्याघातशतशतविशरारुणि भवन्मते न नन्देयुः । नन्वविद्याविशिष्टम् ब्रह्मास्माकं जगदुपादानम् , भवतां तु सूक्ष्मप्रकृतिपुरुषविशिष्टमिति व्यवहितविकाराश्रयत्वाविशेषादावयोः को विशेष इति ॥ अहो महदिदमवधानम् ; यत् प्रत्यक्षादिप्रमाणगण दृढावधारितचिदचिदात्मकप्रपञ्चबाधाबाधाभ्यामावयोर्विशेषः प्रदर्शितः इति । नन्वेवमपि व्यवहितोपादानप्रतिपादनप्रयासमुत्सृज्य प्रपञ्चसत्यत्ववृथाग्रहात्तद्रूपे स्वारसिके स्वरूपोपादानपक्षे स्थीयतामिति चेत्—नैवम् , सर्वतादात्म्ये समस्तविकाराद्याश्रयत्वावश्यंभावेन–(भावि) निर्विकारनिरवद्यत्वश्रुतिविरोधस्य दुष्परिहरत्वात् । स्वारस्यमपि मरीचिकासलिलकल्पम् । तथाहि—तत्र भास्करमतं [अधिकृत्य ?] तावत् पृच्छामः–ब्रह्मस्वरूपमेव परिणमतीत्यत्र (१) किमीश्वरो ब्रह्मशब्दवाच्यः , (२) उत तदंशभूतः सूक्ष्मोऽचिदुपाधिः , (३) उत समुदायः ; (४) उत तदुभयानुवृत्तसद्द्रव्यमात्रम् , (५) यद्वा ब्रह्मधर्मभूतः [त]शक्ति विशेष एवेति । व्यतिरेकादिपक्षस्तु अत्यन्तदूरस्थतया नोपक्षिप्यते । तत्र तावन्न प्रथमः; ईश्वरांशस्य विकारानभ्युपगमात् । न द्वितीयः , ब्रह्मोपादानत्वप्रहाणप्रसङ्गात् । न तृतीयः समुदायस्य समुदायिभ्यां भिन्नत्वे सति न ब्रह्मोपादानत्वसिद्धिः , अभिन्नत्वे पक्षद्वयोक्तदूषणस्य पुनरुन्मज्जनम् [मिति ?] । चतुर्थेऽपि पक्षे सन्मात्रस्य सर्वतादात्म्ये चेतनाचेतनात्मकविश्वप्रपञ्चस्यदोषाधारत्वेन तदात्मकस्य ब्रह्मणो निर्दोषत्वश्रुतिविरोधः । पंचमस्तु पक्षः परिशिष्यते । तत्रापि शक्तेः ब्रह्माव्यतिरेके पुनः स एव श्रुतिविरोधः । व्यतिरेके ब्रह्मो-

पादानत्वभङ्गप्रसङ्गः । व्यतिरेकाव्यतिरेकपक्षस्तु दुःस्थत्वादेव दूरपरिहरणीयः । स्वाभाविकभेदाभेदवादश्च सर्वलोकविरुद्धत्वात् दुर्विचारमूल एव । तेन पक्षत्रयप्रतिक्षेपे मृषावादः परिशिष्यते । सोऽपि स्वतः प्रतिक्षेप्य एव, प्रस्फुटदोषसङ्करविघटितत्वात् ।

श्लो. अवस्थान्तरयोगित्वमुपादानत्वमुच्यते / मृत्पिण्डघटदृष्टान्तस्तत्रैव ह्युपपद्यते ॥

सर्पभूरन्ध्र-मालादिरूपावस्थान्तरादयः । रज्जौ न विद्यते तस्मान्नोपादानत्वमिष्यते ॥

इत्थमध्यस्तविश्वस्य ब्रह्मोपादानभाषणम् । लोकवेदविरुद्धत्वात् स्वयमेव नि[त्रि]रुध्यते ॥

अतः उपादानत्वानुपपत्तिरद्वैतवादिन एवेति ॥

॥ इति शतदूषण्यां ब्रह्मोपादनात्वान्यथानुपपत्तिभङ्गवादः त्रिपञ्चाशः ॥५३॥



प्रसाद-किञ्च यह जो कहा गया है कि सिद्धान्ती विशिष्ट की उपादानता श्रुति के अधार पर मानते हैं, अथवा कल्पना के आधार पर । उसके विषय में मैं आपसे भी पूछता हूँ कि आप अविद्या विशिष्ट की उपादानता श्रुति के आधार पर मानते हैं अथवा कल्पना के आधार पर ? श्रुति के आधार पर इसलिए नहीं कह सकते हैं कि कारण श्रुतियों के सत् ब्रह्म आदि शब्दों में अविद्या की गन्ध तक नहीं है । कल्पना के आधार पर इसलिए नहीं कह सकते हैं कि हमारे मत के ही समान आपके मतमें कल्पना का कोई आधार नहीं हैं । यदि कहें कि निर्विकार श्रुति की अन्यथानुपपत्ति ही इस कल्पना की कल्पिका है, तो भी प्रत्यक्षादि सभी प्रमाणों के विरोधी अविद्या को स्वीकारने पर अभिमत सृष्टि आदि का समन्वय असम्भव हो जाता है , उसकी कल्पना से भी सहृदयों से एक वाक्यता रखने वाली समीचीन प्रक्रिया सिद्ध होती है । आपके अभिमत मृदघटादि दृष्टान्त के द्वारा स्वरूपोपादनत्व का प्रतिपादन यदि भास्कर आदि सुनेंगे तो वे आपके विचारों से आनन्द का अनुभव करेंगे , क्योंकि ब्रह्म के स्वरूप को उपादान मानने पर आपको सर्वप्रथम जो ब्रह्म के निर्विकारत्व एवं सविकारत्व तथा निरवद्यत्व एवं सावद्यत्व को लेकर जो विरोध प्रतीत हुआ उससे बचने के लिए आपने विवर्तवाद स्वीकारा; वह विवर्तवाद भी अनेक व्याघातों से व्याप्त होने के कारण विशरणशील है । यदि कहें कि हमारे मत में अविद्या विशिष्ट ब्रह्म जगत् का उपादान कारण है और सिद्धान्ती तो सूक्ष्म प्रकृति तथा पुरुष विशिष्ट ब्रह्म को जगत् का उपादान मानते हैं , इस तरह हम और आप दोनों समान रूप से ब्रह्म को व्यवहित विकाराश्रय मानते हैं; हम दोनों की मान्यता में क्या अन्तर है ? तब तो आप बहुत अधिक सावधान हैं , हम और आप में यही अन्तर है कि प्रत्यक्षादि प्रमाण समूह से जिसका दृढ निश्चय होता है, उस चेतनाचेतनात्मक प्रपञ्च को हम अबाधित मानते हैं और आप बाधित । यदि कहें कि सिद्धान्ती को चाहिए कि वे व्यवहितोपादान प्रतिपादन की प्रथा को त्यागकर प्रपञ्च सत्यत्व के व्यर्थ आग्रह के अनुकूल स्वाभाविक स्वरूपोपादान पक्ष को अपनाएँ । तो आप ऐसा भी नहीं कह सकते हैं, क्योंकि सबों से अभेद स्वीकारने

पर ब्रह्म सभी विकारों एवं दोषों का आश्रय अवश्य होगा। फलतः आपके मत में निर्विकारत्व एवं निरवद्यत्व श्रुति का विरोध अवश्य होगा।

किञ्च स्वरूपोपादानत्व पक्ष की स्वरसता भी मृगमरीचिका के ही समान है। सर्वप्रथम हम भास्कर मत के विषय में पूछते हैं कि ब्रह्म के स्वरूप का परिणाम होता है, आपकी इस मान्यता के विषय में प्रष्टव्य है कि (१) क्या ईश्वर ही ब्रह्म है (२) या उसका अंशभूत सूक्ष्म अचित् उपाधि ? (३) या उन दोनों का समुदाय (४) या उन दोनों में अनुवर्तित होने वाला सद् द्रव्यमात्र (५) या ब्रह्म का धर्मं भूत शक्ति विशेष ही। अत्यन्त दूरस्थ होने के कारण व्यतिरेकादिपक्ष का यहाँ खण्डन नही किया जा रहा है। प्रथम पक्ष इसलिए नहीं माना जा सकता है कि आप ईश्वरांश में विकार नहीं स्वीकारते हैं। अचित रूपी उपाधि को ब्रह्म शब्द वाच्य मानने पर ब्रह्मोपादानत्व के प्रहाण का प्रसङ्ग होगा। तीसरा पक्ष इसलिए नहीं माना जा सकता है कि समुदाय को दोनों समुदायियों से भिन्न मानने पर ब्रह्मोपादानत्व की सिद्धि नहीं होगी, अभिन्न मानने पर प्रथम एवं द्वितीय दोनों पक्षों के दोष इस पक्ष में आयेंगे। चौथे पक्ष में भी सन्मात्र का सबों से अभेद होने पर चेतनाचेतनात्मक सम्पूर्ण प्रपञ्च के दोषका आश्रय होने के कारण जगदभिन्न ब्रह्म का निर्दोषत्व श्रुति से विरोध होगा। पाञ्चवें पक्ष के विषय में कहना है कि शक्ति को ब्रह्म से भिन्न मानने पर पुनः वही श्रुति विरोध नामक दोष होगा। भिन्न मानने पर ब्रह्मोपादानकत्व के भङ्ग का प्रसङ्ग होगा। भेदाभेद पक्ष तो अत्यन्त अव्यवस्थित होने के कारण बिल्कुलत्याज्य है।

यादव प्रकाशाचार्य का स्वाभाविक भेदाभेदवाद सर्वलोक विरुद्ध होने के कारण दुर्विचार मूलक ही है। इस तरह भास्कर मत तथा यादव मत का खण्डन कर दिए जाने के पश्चात् अब केवल मिथ्यावादी मत ही बच जाता है। वह भी स्पष्ट दोष साङ्कर्ययुक्त होने के कारण स्वयमेव खण्डनार्ह है। जो अवस्थाओं का आश्रय होता है उसे उपादान कहते हैं। उदाहरणार्थ घट शरावादि अनेक अवस्थाओं का आश्रयभूत मृतपिण्ड घट का उपादान है। अन्धेरे में प्रतीत होने वाले सर्प, भूदलान तथा माला आदि रज्जू की अवस्थाएँ नहीं होती हैं अतएव रज्जू सर्पादि का उपादान नही है। इसी तरह अद्वैती विद्वानों का यह कहना गलत है कि ब्रह्म में विश्व अध्यस्त है, अतएव ब्रह्म जगत् का उपादान कारण है। उनकी यह उक्ति लोक एवं वेद विरुद्ध है। लोक में अध्यस्त वस्तुओं का उपादान कारण अधिष्ठान को नहीं माना जाता है। वेद में कहीं भी ब्रह्म में विश्व को अध्यस्त नहीं बतलाया गया है। इस तरह अद्वैती विद्वानों के ही मत में उपादानत्वानुपपत्ति होती है, हमारे मत में नहीं।

इस तरह शतदूषणी के ब्रह्मोपादानत्वान्यथानुपपत्ति भङ्ग नामक तिरपनवें वाद का प्रसाद समाप्त हुआ॥



कल्पकाभावादेरिति। आदिशब्देन विशेषणकल्पनस्य 'एवमेवे' त्यवधारणविरुद्धत्वम् गृह्यते।

ननु निर्विकारश्रुत्यन्यथानुपपत्तिरेव कल्पिकेत्यत्राह तत्सद्भाव इति। समस्तेति। अवि

थाविशेषणकल्पने तत्कार्यस्य मिथ्यात्वं स्यात् ; तच्च सर्वप्रमाण विरुद्धमित्यर्थः । दुर्घटिताभिमतेति । सहृदयसंवादिति वक्ष्यमाणवैलक्षण्यं विवक्षितम् । प्रथमेति । ब्रह्मस्वरूपस्य उपादानत्वे निर्विकारत्वसविकारत्वयोः सावयत्वनिरवयत्वयोश्चयो व्याघातः प्रथमं प्रतीतः तस्माद्रक्षणाय विवर्तवादस्त्वयांगीकृतः ; स च व्याघातशतविशीर्णः; ततश्च तद्दर्शनात्तावद्व्याधातरहिते स्वाभिमतस्वरूपपरिणामवादे भास्करादयः प्रीतिमन्तो भवेयुरित्यर्थः । विशरारुर्विशरणशीलः । यद्यपि 'शवन्द्योरारु' रिति ताच्छीलिकोऽयं कर्तृप्रत्ययः ; ततश्च विदारयितेत्यर्थः स्यात् , तथापि कर्मकर्तृत्वस्य विवक्षितत्वात् , भिदुरं काष्ठमिति 'विदिभिदिच्छिदेः कुर' रिति कर्तरिविहितकुरच्प्रत्ययान्तभिदुरशब्दवत् कर्मणि प्रयोगः । प्रदर्शित इति । "वचन्तु वाक्यान्तरानुसारेण इत्यादि नेत्यर्थः । पंचमस्त्विति । शक्तेरन्तरङ्गत्वात् तत्परिशेष इति भावः । तत्रापि न ब्रह्मोपादानत्वश्रुतेः स्वारस्यमित्यभिप्रायेणोपपादयति तत्रापीति । दुस्थत्वादिति । ब्रह्मस्वरूपाव्यतिरिक्तायाः शक्तेर्व्यतिरेक उपाधित इति वाच्यम् , तस्यापि तथेत्यनवस्थेत्यर्थः । शक्तिशक्तिमतोर्व्यतिरेकाव्यतिरेकौ स्वाभाविकावित्यात्राह स्वाभाविकेति । भास्करमतप्रतिक्षेपप्रकारेणैव यादवमतस्य प्रतिक्षिप्ततामभिप्रेत्याह येनेति । मृषावादः-विवर्ततया ब्रह्मोपादानकत्ववादः । स्वत इति । स्वेनैव प्रतिक्षेप्तुयोग्यः, स्वव्याहत इत्यर्थः । तदेवोपपादयति । अवस्थान्तरेति । लोकसिद्धतामुक्त्वा श्रुतिसिद्धतामाह मृत्पिण्डेति । ब्रह्मणोऽधिष्ठानत्वाद्विकारान्वयः स्यादित्याशङ्कयाह रूपेति । इत्थमित्यादि । अवस्थानाश्रयस्योपादानत्वस्य लोकवेदविरुद्धत्वाद्विश्वस्याध्यस्ततोक्तिर्ब्रह्मण उपादानत्वोक्तिश्च परस्परव्याहते इत्यर्थः ।

एतेनैव निरस्तम् । यदाह नवीनः—अवस्थान्तरयोगित्वं नोपादनत्वम् , तद्धिविकारवत्कारणत्वं परिणामित्वं वा ? नाद्यः , यत्किञ्चित्समवायित्वस्य निमित्तसाधारणत्वात् , तद्विकारसमवायित्वस्याप्येकसमुदायवादे तत्र सत्त्वात् , तन्नानात्वेऽपि अनित्यमृद्घटादेर्नित्यरूपसम्बन्धासम्भवः , सम्बन्धस्य सम्बन्ध्याश्रयत्वनियमात् ; अनित्यत्वे च भावकार्यस्य सोपादानत्वनियमात् तदुपादाने तत्समवायसत्त्वे अनवस्था ; असत्त्वे उपादानलक्षणाव्याप्तिः . नापि द्वितीयः , तद्धि तात्त्विकरूपान्तराभेदः, तच्च न अभेदे , रूपान्तरत्वव्याघातात् , तस्मात्परमते नोपादानलक्षणम् निर्वहति, अस्मन्मते तु यदभिन्नम् कार्यमुत्पद्यते तत्कारणमुपादानम् , अभेदश्च मृद्घट इति । सामानाधिकरण्यानुभवसिद्धः, अयं घट इत्यत्र स्वप्रकारीभूतधर्मद्वयविशिष्टाभेदविषयत्वस्य क्लृप्तत्वात् , स चाभेदः प्रकृते तादात्म्यम् भिन्नत्वे सत्यभिन्नसत्ताकत्वम् , अस्ति हि मृद्घटयोस्तत्तादात्म्यम् , भेदाभावे कार्यकारणभावायोगात् , उपादानोपादेययोः सत्ताभेदाभावाच्च, दण्डघटयोस्तु नैवम् , भेदे भासमानेऽपि दण्डाधिष्ठानात्तदुपहितात्तत्सत्त्वात् घटसत्ताया अन्यत्वात् ; अन्यत्वं च दण्डाद्यभावेऽपि सन् घट इति अनुभवात् दण्डो घट इत्यननुभवाच्च सिद्धम् , नीलो घट इत्यादौ गुणगुण्याद्ययुतसिद्धसामानाधिकरण्यानुभवस्थले सर्वत्र इदमेव तादात्म्यम् विषयः , नन्वेवमेकघटाश्रितरूपरसादीनां घटसत्तैव सत्तेति रूपरसादेरन्योन्यं सामानाधिकरण्यानुभवः

स्यादिति चेन्न, रूपाद्यवच्छिन्नतया घटसत्ताया रसादिसत्तात्मत्वाभावात् , ननु मृद्घटयोर्भेदे कथ मेकसत्ताकत्वम् , दण्डघटयोरदर्शनादिति चेत् ? दण्डघटभेदवत् मृद्घटभेदस्य सत्तावच्छेदकत्वाभावात् , रूपरसयोरप्यन्योऽन्यं भेदः सत्तावच्छेदकः नत्वाश्रयाद्भेदः, अथवा कश्चिदनिर्वचनीयो धर्मस्तादात्म्यम् , अतो यदभिन्नं कार्यमुत्पद्यते तत्कारणमुपादानम् ; एवञ्च जगद्विवर्त्ताधिष्ठानं ब्रह्माप्युपादानम् , विवर्तस्याधिष्ठानाभिन्नत्वात् , ब्रह्मणः कारणत्वाच्च, अभेदश्च सन् घट इति प्रतीतिसिद्धः सद्रूपाधिष्ठानतादात्म्यविषयत्वात् , न हि सदिति घटस्वरूपमेव प्रतीयते ; तस्य पटादावननुगतत्वात् , नापि सत्ताजातिवैशिष्टयम् , अतिरिक्तसत्ताकल्पने गौरवात् ; प्रतीतेरधिष्ठानतया सत्तादात्म्यविषयत्वेनाप्युपपत्तेः; सामान्यादौ सद्बुध्ययोगाच्च, न च बाधायोग्यत्वं सत्त्वं सामान्याद्यनुगतमिति वाच्यम् ; तस्या एव सत्ताया लाघवानुगृहीतानुभवेन "न ह्यसति द्वैतसिद्धिः आत्मैव सिद्धो द्वितीयः" इत्यादिश्रुतया चात्ममात्रतया सिद्धत्वात् ; अन्यथासिद्धानुभवेन श्रुत्यर्थान्यथाकरणायोगात् , नापि प्रमाणयोग्यत्वम् , अबाधितानुभवस्य प्रमाणत्वे बाधायोग्यत्वपर्यवसानात् ; यथार्थानुभवस्य तत्त्वे मिथ्यारजतादिसाधारण्यात् , तस्मात्कार्याभिन्नं कारणं चेत्युपादानम् , अभेदश्चाधिष्ठानतयेति ब्रह्मविवर्तभूतं जगदिति ।

अयं भावः-समवायानङ्गीकारादाश्रयिभावाङ्गीकाराच्च अवस्थान्तर योगित्वमुपादानत्वमित्यत्र न कश्चिद्दोषः, एतदेव परिणामित्वमपीति , तदपि सुस्थम् , रूपान्तरवदभेदा वा, परिणामित्वम् रूपान्तरं च कार्यावस्थातात्त्विकरूपान्तराभेदः परिणामित्वमित्युक्तम् , रूपान्तरस्य तात्त्विकत्वे अद्वैतहानेः । स्वसमानसत्ताकत्व विवक्षायां यदभिन्नं इत्यत्र वक्ष्यमाणो दोषोऽनुसन्धेयः । सिद्धान्तेत्विदमपि पूर्वत्रैव पर्यवसितम् । यदभिन्नं कार्यमुत्पद्यते तत्कारणमुपादानमित्यत्रापि न दोषः, उपादानस्यैव सद्वारकोत्पत्तेः सद्वारककार्यतायाश्च सत्त्वात् । त्वत्पक्षेत्वेतदयुक्तम् , कार्यकारणयोर्भेदाङ्गीकारात् ।

ननु भिन्नत्वे सत्यभिन्नसत्ताकत्वलक्षणोऽभेदोऽस्तीत्युक्तम् , सत्यमुक्तम् , दुरुक्तन्तु तत् तस्य मृद्घट इति सामानाधिकरण्यानुभवसिद्धत्वाभावात् , अयम् घटः अयम् कम्बुग्रीवः इति सामानाधिकरण्यानुभवाविषयस्यैवैतत्सामानाधिकरण्यानुभवविषयत्वात् , त्वयैवाभेदस्यैतत्सामानाधिकरण्यानुभवसिद्धत्वेऽयम् घट इत्यत्र स्वप्रकारीभूतधर्मद्वयविशिष्टाभेदविषयत्वस्य क्लृप्तत्वादिति हेत्वभिधानात् , अयम् घटः, अयं कम्बुग्रीवः, सोऽयं देवदत्तः तत्त्वमसि, सत्यं ज्ञानमित्यादिषु भिन्नत्वे सत्यभिन्नसत्ताकत्वासम्भवात् । किञ्च भिन्नत्वे सत्यभिन्नसत्ताकत्वं यदि सामानाधिकरण्यप्रतीतेर्विषयः तदा मृद्घटौ भिन्नौ अभिन्नसत्ताकौ चेति प्रयोगः स्यात् , संसर्गमर्यादया भानाद्यदि न तथा प्रयोगस्तदा मृद्घटावभिन्नाविति प्रयोगो न स्यात् । किंच तादात्म्यम् हि तत्स्वरूपकत्वम् , तत्स्वरूपकत्वं च तत्स्वरूपाभिन्नत्वम् , इदं कथं भेदाभिन्नसत्ताकत्वघटितशरीरं स्यात् ? यदि तादात्म्यशब्दो रुढ इत्युच्यते एवमपि घट इति प्रयोगो न स्यात् ; सूत्रस्वरूपं यस्येति हि तदर्थः । किञ्च संघीभवन्ति ब्राह्मणा इत्यत्रव पटीयन्तीति संपद्यकर्तरिच्विर्न

स्यात् , जायमानात् पटाद्भिन्नतया सम्पद्यकर्तृत्वासम्भवात् । कार्यकारणयोर्भेदे अवयविभंगेत्वयोक्तो गुरुत्वाधिक्यप्रसङ्गोऽवर्जनीयः ।

अपि च असत उत्पत्त्यसम्भवात् घटस्य सूक्ष्मरूपेणावस्थानं कार्यस्य त्वयोच्यते, तत्राजातस्य सूक्ष्मरूपस्य जातस्य घटस्य चाभेदः कथमुपपद्यते ? नचात्रापि भेद एव, असत उत्पत्ति प्रसङ्गात् , सूक्ष्मरूपकल्पनावैयर्थ्याच्च । तथा च पिण्डरूपेण प्रागवस्थानम् पश्चात् घटरूपेणोत्पत्तिरित्येव वक्तुमुचितम् ।

किञ्च । मृत्पिण्डो घट आसीदिति प्रतीतिर्न स्यात् । "पुनरावृत्तः स्वर्णं पिण्डः खदिराङ्गारसवर्णे कुण्डले भवत" इति च भाष्यम् । पिण्डरूपकार्यं घटरूपकार्याद्भिन्नमेव हि मतम् । न च तत्र तादात्म्यसम्भवः, तत्राभिन्नसत्ताकत्वासिद्धेः, सा च पिण्डाभावेऽपि घट इत्यनुभवात् घटाभावेऽपि पिण्ड इत्यनुभवाच्च भिन्नैव सिद्धा । किंच द्रव्यं घट इत्यत्र द्रव्याभिन्नसत्ताकत्वम् रूपी घट इत्यत्र रूप्यभिन्नसत्ताकत्वं च विषय इति स्यात् , ततश्च घटे द्रव्यत्वरूपे न स्याताम्। किंच—'यवमयश्चरुर्भवती' त्यादौ विकारार्थप्रत्ययानुपपत्तिः, यवस्य चर्वपेक्षया भिन्नसत्ताकत्वात् अवघातादिना यवनाशेऽपि चरुप्रतीतेः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया एकस्य कारणस्य स्वरूपे ज्ञाते कार्यस्य सर्वस्य स्वरूप ज्ञातं स्वरूप स्यैकत्वात् , स्वरूपं चाधिष्ठानसत्तेति ह्यर्थस्त्वयोच्यते, तथा च "मृत्पिण्डेन सर्वं मृण्मयं विज्ञातंस्या" दित्यसङ्गतम् , पिण्डघटयोरभिन्नसत्ताकत्वाभावात् । एवं "सदेव सोम्येदमग्र आसी" दित्यनुपपन्नम् , एकया हि सत्तया उभयोस्तुल्यः सम्बन्धो वाच्यः, अस्य हि सर्वस्य ब्रह्मण्यध्यस्तत्वं सम्बन्धः, ब्रह्म तु नाध्यस्तम् , अतो 'बहुस्यां प्रजायेय' 'सच्च त्यच्चाभव' दित्यादि बहुसामञ्जस्यम् । सदेवेति सच्छब्देन प्रकृतिविवक्षायामपसिद्धान्तः; ईक्षणश्रुतीक्षत्यधिकरणव्याघातः , अद्वितीयान्वयानुपपत्तिश्च ।

यत्तु सन् घट इत्यदौ सद्रूपाधिष्ठानसद्भेदाभाव एव विषय इति । तन्न, मृद्घट इत्यादावभिन्नसत्ताकस्यैव विषयत्वोक्तेरननुगमात् । न च सर्वत्र तत्प्रतियोगिकसद्भेदाभाव एव तादात्म्यं विषय इति वाच्यम् , सद्भेद इति भेदस्य पारमार्थिकत्वविवक्षायां दण्डघटयोरपि तादात्म्यप्रसङ्गः , व्यावहारिकत्वविवक्षायां मृद्घटयोरपि भेदस्य व्यावहारिकत्वेन तत्रापि तादात्म्याभावप्रसङ्गात् । सद्भेदाभावशब्देन सत्तावच्छेदकभेदाभावविवक्षायां भेदत्वाविशेषेण सर्वस्यापि भेदस्य सत्तावच्छेदकत्वात मृद्घटयोस्तादात्म्यं न स्यात् ।

किंच-किमिदमभिन्नसत्ताकत्वम ? उभयोरेकसदध्यस्तत्वञ्चेत , घट पटयोरपि तादात्म्यप्रसङ्गः ; प्रपंचब्रह्मणोः तदभावप्रसङ्गश्च । घटेनाकाशवत् एकेन भिन्ने सदेशे इतरस्याध्यासश्चेदुभयाधिष्ठाने औपाधिकभेदस्याप्यभाव इति पर्यवसितम् । ततश्च रूपस्पर्शयोस्तादात्म्यप्रसङ्गः, घटसत्ताया एव रूपस्पर्शाधिष्ठानत्वात् , एकरज्वारोपितयोः सर्पभूदलनयोस्तादात्म्यप्रसङ्गश्च । अन्यतराधिष्ठानतावच्छिन्नाधिकरणसताकत्वमितराधिष्ठानतायाश्चेत् , अवच्छेदकत्वस्यानतिरिक्तवृत्तित्वरूपत्वे रूपस्पर्शयोस्तादात्म्यप्रसङ्ग एव । अवच्छेदकत्वं सम्बन्धविशेषश्चेत्किमेतावद्दूरधा-

वनेन ? सम्बन्धविशेषः तादात्म्यमिति सुवचत्वात् । किंच इदं सामानाधिकरण्यनिबन्धनमिति कुत्र दृष्टम् ? इदं रजतमित्यत्रेति चेत् , इदानीं प्रपंचमिथ्यात्वस्य विप्रतिपन्नतया तत्र सार्त्ताधिष्ठानकत्वासिद्धेः । सामानाधिकरण्यप्रतीत्यन्यथानुपपत्त्या कल्पने अयं घट इत्यत्रैवाभेद एव कल्प्येत, तस्यैवोपपादकत्वात् , अन्यत्रोपपादकत्वेनाक्लृप्तस्यापि कल्पने इदमेव कुतः कल्प्यते ? संप्रतिपन्नमयुतसिद्धत्वमेव तादात्म्यमिति कुतो न कल्प्यते ? तत्सम्बन्धिन्याभेदप्रवेशादिति चेत् , साक्षात्स्वरूपे भेदप्रवेशान्नेदमर्हम । अभिन्नसत्ताकत्वमेव तादात्म्यं चेत् , इतोऽप्यन्यत्र क्लृप्त स्वरूपाभेदभेदाविशेषात् क्लृप्तत्वात् घटकलशसामानाधिकरण्यप्रसङ्गाच्चायुतसिद्धेरेव तादात्म्यरूपत्वं कल्पयितुमुचितम् । अकल्पनमेव वा । कथं तर्हि मृद्घटः नीलो घट इति सामानाधिकरण्यम् ? अयम् घट इत्यत्र कथम् सामानाधिकरण्यम् ? अभेदादिति चेत् , कथमिह तन्न स्यात् ? बाधादिति चेत् , कथं तर्हि अग्निर्माणवक इति ? उपचारादितिचेदिहापि तथास्तु ।

ननु प्रतीतौ कथमुपचारः ? तस्य शब्दधर्मत्वादिति चेन्न , सामानाधिकरण्यमपि शब्द धर्म एवेति कथमुपचारो न तस्योपपादकः ? अस्तु वा सामानाधिकरण्यप्रतीतिधर्मोऽपि , तच्चाभेदगोचरत्वान्नातिरिच्यते; ततश्चाभेदस्यैव प्रतीतेः कथं भेदः ? युक्तित इति चेत् , तर्ह्यभेदप्रतीतिभ्रम इति किन्तदुपपादनाय शशविषाणकल्पनतया ? श्रुतिरपि मुख्यार्थासम्भवे तत्त्वमसिवल्लक्षणया नेतव्या ।

ननु मृद्घट इति तावत् समानाधिकरणप्रयोगो दृश्यते; अयं च प्रयोगोऽर्थविशेषप्रतीत्या विना नोपपद्यते, अतः प्रयोगनिमित्तज्ञानस्य विषये निरुपिते मृद्घटयोः कार्यकारणयोरभेदासम्भवात् , अभेदं विना सामानाधिकरण्यायोगात् , घटकलशयोरिवापर्यायत्वाच्च भिन्नत्वे सत्यभिन्न सत्ताकत्वं विषय इति कल्प्यत इति चेन्न, अन्यत्र क्लृप्ताभेदभ्रमस्यैव सामानाधिकरण्यनिमित्तत्वकल्पनौचित्यात् ; मृद्घटयोर्भेदादपर्यायत्वम । किञ्च-तयोरभेदगोचरायाः प्रतीतेरन्यविषयत्व कल्पनादपि निर्विषयत्वकल्पनमेववरम । किंच कार्यकारणयोरभेदप्रतीतिरस्तावद्दुरपह्नवा, "यथा सोम्ये" ति वाक्येनापि दृढीकृता , अतोऽभेदस्य दुरपह्नवत्वात् कार्यत्वमनिर्वचनीयत्वादुपपादय , किमनया अभेदप्रत्यक्षापह्नवसामानाधिकरण्यनिर्वाहकखपुष्पकल्पनावैयाकुल्या , अवस्थाया एव कार्यत्वं द्रव्ये कार्यत्वव्यपदेश औपचारिकः, कादाचित्कावस्थायोग एव कार्यत्वमिति वा कल्पय । एतेन पृथक् सत्ताशून्यत्वं तादात्म्यमिति निरस्तम् ; तस्यापृथक्सत्ताकत्व एव पर्यवसानात् ; सत्ताशून्यत्वस्य दण्डघटादिसाधारणत्वात् , ब्रह्मण्यभावात पृथक् पदवैयर्थ्यात् । सत्तावच्छेदकभेदशून्यत्वं तादात्म्यमित्यपि न, अवच्छेदकत्वं यदि तदध्यस्तत्वम , तदा सत्तावच्छेदकेति व्यर्थम । भेदाभावे कार्यत्वानुपपत्तिश्च त्वयैवोक्ता भेदस्य सत्ताभेदकत्वाभावविवक्षायां भेदे वैषम्याभावाद्विशेषणवैयर्थ्यात् । भेदो हि सत्ताभेदकताप्रयोजकः, यथा दण्डघटयोः स्वयम् भिन्नत्वात् सत्ता भिन्ना, मृद्घटभेदस्तु मृद्घटयोर्न सत्ताभेदकताप्रयोजकः, अतस्सत्तावच्छेदकभेदशून्यत्वम् तादात्म्यमिति चेत् ? भेदत्वाविशेषे कथमिदं वैषम्यम , वैपरीत्यस्यापि सुवचत्वात् ।

ननु भिन्नाविमाविति दण्डघटयोः प्रत्यक्षेण भेदो गृह्यते, मृद्घटयोस्तु नैवम्, किन्त्व नुमीयते- इति वैषम्यान्मृद्घटयोर्भेदो न सत्तावच्छेदक इति चेन्न,--परोक्षत्वापरोक्षत्ववैषम्यस्यापि वैपरीत्यप्रयोजकत्वशङ्काया निवारकाभावात्। एतेन सत्तानवच्छेदकभेदवत्त्वमित्यपि निरस्तम्। किंच अभिन्नसत्ताकत्वमित्यत्र सत्तया कः सम्बन्धो विवक्षितः? नतावत्तादात्म्यमेव, आत्माश्रयात्। नापि तत्सत्तातिरिक्तसत्ताशून्यत्वम् सम्बन्धः। सर्वस्यापि सत्तासम्बन्धराहित्येनातिप्रसङ्गात्। घटादेर्मृत्सत्तातिरिक्तवाय्वाद्यवच्छिन्नसत्तासंयोगित्वाद्द्रव्येष्वव्याप्ते। अस्य सम्बन्धत्वासम्भवाच्च। न हि जलगतशैत्यातिरिक्तशैत्यराहित्याद्वह्नौ शैत्यविशिष्टप्रत्ययः। नापि संयोगः अद्रव्येष्वसम्भवात्। न च सत्तासम्बन्धस्सत्ताप्रतियोगिक भेदाभावः, मिथ्यात्वेन प्रपञ्चस्य सत्तया भिन्नत्वात्। न च पारमार्थिकभेदाभावः, पारमार्थिकभेदस्याप्रसिद्धेः। नच ब्रह्मैव तादृशोभेदः प्रपंचेन सम्बन्धस्यानिरूपणात्, निरधिकरणत्वाच्चातिप्रसङ्गतादवस्थ्यात्। नाप्यधिष्ठानाध्यस्यमानभावः सम्बन्धः, तस्य सन् घट इति प्रतीतिविषयत्वासम्भवात्। अध्यस्यमानत्वञ्च तदभेदेनोत्पन्नत्वम् तदभेदेन प्रतीयमानत्वम् वा न सम्भवति; अभेदासम्भवात् प्रतीति विषयत्वाभावाच्च। न च सत्तावच्छेदकत्वम् सम्बन्धः सम्बन्धमन्तरेणावच्छेदकत्वासम्भवात्, तस्य प्रतीतिविषयत्वासम्भवाच्च। अनिर्वचनीयः कश्चिद्धर्मस्तादात्म्यमित्यपि न, तस्याभेदादन्यत्वे सामानाधिकरण्यनिमित्तत्वाभावात्। अनन्यत्वे तद्व्या[प्य]प्तत्वे च भेदे विद्यमाने तद्योगात्, उभयोस्तुल्यसत्ताकत्वात्।

नन्वभेदः प्रातिभासिकः; यौक्तिको भेदो व्यावहारिक इति चेन्न, "यथा सोम्येति" श्रुतिविरोधात्। न हि प्रातिभासिकाभेदमात्रेण ततो भिन्नस्य तज्ज्ञानेन ज्ञातता सम्भवति। यश्च ब्रह्माभेदः सन् घट इति प्रतीतिसिद्ध इति, तन्न, घटादेरेव सत्त्वात्, अन्यथा तस्याः प्रतीतेर्भ्रमत्वप्रसङ्गात्। किन्तर्हि सत्त्वम? अस्तिनास्त्योः परस्परप्रतिक्षेपकता तावत् सर्वलोकविदिता, नास्तीति चेह नास्तीति इदानीं नास्तीत्यधिकरणसापेक्षमभावप्रतियोगित्वं प्रतीयते, यथा चाधिकरणविशेषाप्रयोगः तत्रापि विवक्षित एव सः, प्रकरणादिना तन्निर्धारणम्, योऽपि समवायो नास्तीत्यादिप्रयोगस्सोऽपि सर्वदेशसर्वकालाभावप्रतियोगित्वगोचरः, न च तादृशाभावाप्रसिद्धिः, अभावे एकत्वस्याविवक्षितत्वात्तत्र तत्र प्रसिद्धा एवाभावा विवक्षिताः, संयोगादतिरिक्ते प्रसिद्धे उक्तमभावप्रतियोगित्वमारोप्यते, अनारोपमूलकसमवायनिषेधस्तु संयोगादतिरिक्तः प्रतियोग्यतिरिक्त सम्बन्धो न भवतीत्यादिरूपः एवं चेह घटो नास्तीत्येतत्प्रतिक्षेपकतया इह घटोऽस्तीत्यस्य एतद्देशीयाभावप्रतियोगित्वाभावो विषयः इदं वस्तुस्वरूपमस्तीत्यादेः सर्वकालदेशाभावप्रतियोगित्वप्रतिक्षेपात्मकत्वात्तादृशाभावप्रतियोगित्वाभावो विषय इति। यद्वा अस्तीति स्वार्थिकप्रत्ययवदनतिरिक्तार्थः, अतएव ह्यात्मभरणवचनत्वमुच्यते, आत्मशब्दः स्वरूपवचनः; तिङन्तस्य साध्यरूपेण प्रत्यायकत्वमर्यादानुसारेण भरणशब्दप्रयोगश्च अनतिरिक्तार्थत्वेऽपि कारकपदानां क्रियापदेन विना बोधकत्वाभावात्। कालान्वयार्थञ्च इह घटस्सन्नित्यत्र सन्निति प्रयोगस्तु इह घट

इत्येतावन्मात्रोक्तौ उत्पत्तिविनाशादिसाधारणतया तदाकांक्षानिवृत्तये । क्रियान्तराप्रयोगादेव तदाकांक्षा निवर्तेत इति चेत् ? सत्यम् , अतएव हि क्वचिदिह घट प्रत्येतावन्मात्रं प्रयुज्यते । प्रकारस्य प्रकारान्तरादूषकत्वादयमपि प्रयोगो युज्यत एव । न तु सत्त्वप्रतीत्यर्थोऽयमस्तेः प्रयोगः , देवदत्तो भुङ्क्ते यज्ञदत्तः पचति विष्णुमित्रो गच्छतीत्यादौ अस्तेरप्रयोगात् । तत्राप्रयोगो हि क्रियापदान्तर सत्त्वेन वाक्यस्यान्वयबोधसामर्थ्यात् । सान्नति प्रयोगः कालार्थश्च । यद्वा प्रामाणिकत्वं सत्त्वम् , तच्च प्रमाविषयत्वम् , स च प्रामाण्यस्य स्वतस्त्वात् परोक्षापरोक्षसर्वप्रमाणगोचरः ; अतएव घटज्ञानमात्रात् ज्ञानान्तरमनपेक्ष्य घटोऽस्तीति प्रयोगः । सत्त्वस्य सर्वज्ञानगोचरत्वात् । अस्तेः प्रयोगः पूर्ववत् क्वचिद्वाक्यसिद्धये क्वचिद्विप्रतिपत्तौ साधनप्रतिज्ञार्थम् ; अथ वा बाधायोग्यत्वं सत्त्वम् । न च लाघवानुगृहीतप्रत्यक्षानुभवेनात्ममात्रस्यैव सत्त्वम् , अनन्तरपदार्थानां बाधितत्वकल्पने गौरवात् , सर्वप्रतीत्यप्रामाण्यकल्पनानुपपत्तेश्च । 'नचाबाधितत्वं ब्रह्मणि प्रत्यक्षं विषयीकर्तुं शक्नोति । ब्रह्मस्फुरणस्य प्रकाशमात्रत्वात् , तेन बाधायोग्यत्वप्रकाशासम्भवाद्द्वैतश्रुतिरीश्वरद्वित्वनिषेधादिपरा ।

एतेन विवर्तोपादानत्वव्याघातप्रदर्शनेन श्रुतिव्याघातोऽपि दर्शितः । सद्विद्यया तावद्विवर्तपक्षो व्यवह्रन्यते, स्तब्धोसीत्यनेन आदेशमप्राक्षयः । येनाश्रुत मित्यादिप्रतिपन्नानामत्तोपादानत्वविशिष्टज्ञानस्य मोक्षसाधनत्वं प्रतिपन्नम् । अतस्त विरुद्ध विवर्तवादः । आदेशशब्दस्य नियन्तृपरत्वमाचार्यैरेव उपपादितम् ।

एवं "येनाश्रुत" मित्यनेनापि व्याघातः प्रपञ्चब्रह्मणोस्सत्यमिथ्यावस्तुनोरत्यन्तविलक्षणतया अन्यतरज्ञानेनान्यतरस्य ज्ञातत्वासम्भवात् । अधिष्ठानज्ञानेनाध्यस्तं ज्ञातं भवतीति यद्युच्येत तदा भ्रान्त्यभ्रान्त्योस्सङ्करप्रसङ्गः , शुक्तिज्ञानस्यैव रजतज्ञानत्वप्रसङ्गात् । नन्वज्ञातस्य स्वरूपं ज्ञातं भवतीत्यर्थः , मिथ्याभूतस्याधिष्ठानातिरेकेण स्वरूपाभावादधिष्ठानमेव तस्य स्वरूपमिति चेत् ? किमयं स्वरूपशब्दो लोकव्युत्पन्न एव, उत त्वया परिभाषितः ? नाद्यः , घटस्वरूपमित्यत्र स्वरूपशब्दस्य घटाथकत्वेनैव व्युत्पत्तेः, इहापि तथैव विवक्षापि ज्ञातत्वासम्भवरूपदोषतादवस्थ्यात् । न द्वितीयः, अश्रुतशब्देन पारिभाषिकस्वरूप शब्दार्थोपस्थापने लक्षणाप्रसङ्गात् ।

" कथन्नुभगव इत्य " नेनापि व्याघातः , विवर्तपक्षे शङ्कानुदयात् । एवम् दृष्टान्तवैयर्थ्यञ्च , मृज्ज्ञानेन सर्वस्य ज्ञातता हि तत्र प्रतिपाद्यते, तच्च कार्यकारणयोरभेद एवं युज्यते, न तु कार्यस्य मिथ्यात्वे ।

एवमन्यज्ञानेनान्यस्य ज्ञातता कथं भवति ? कार्यञ्च भिन्नमेव; पृथुबुध्नोदराकाररूपरूपभेदात् नामभेदाच्चेति नैयायिकाशङ्कानिरासार्थंन 'वाचारम्भण' मित्यनेनापि व्याघातः । तत्र "वाचारम्भणं मृत्तिकेत्येव सत्य" मिति कार्यमिथ्यात्वं कारणसत्यत्वं च प्रतिपाद्यत इति चेत् ? किमिदं कारणसत्यत्वम् । पारमार्थिकत्वे अद्वैतहानिः , व्यावहारिकत्वे कार्यस्य मिथ्यात्वं यदि व्यावहारिकत्वेन मिथ्यात्वं तदाप्ययमेव दोषः, कार्यस्यैव मिथ्यात्वस्य वाच्यत्वात् नामधेयग्रहणवैयर्थ्यञ्च । 'मृत्तिकैव सत्ये' ति वाच्या इति कारणवैयर्थ्यञ्च । सिद्धान्ते तु वाचा वागार्थम् ;

अध्ययनेन वसतीतिवत् प्रयोजनस्यहेतुतया निर्देशः; इदमुपलक्षणम्—रूपस्यापि ग्रहणात् , वागर्थ ज्ञानाद्यर्थक , विकारः—अवस्था , नामधेयंच आरभ्यते—स्पृश्यते । हेतुमाहमृत्तिकेति , या सा मया पूर्वाह्णे मृत्तिका दृष्टा सैवेदानीं घट आसीदित्यबाधितप्रत्यभिज्ञानान्न द्रव्यस्य भेद इति भावः।

एतेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः ब्रह्मव्यतिरिक्तस्य कृत्स्नस्यापि मिथ्यात्वात् ब्रह्मव्यतिरेकेण ज्ञातव्यान्तरं नास्तीत्यत्र तात्पर्यम् , अतएव हि वाचारम्भणमिति दृष्टान्ते सर्वस्य मिथ्यात्वेन ज्ञातता प्रतिपाद्यते इति निरस्तम् । किञ्च यदि ब्रह्मणि ज्ञाते सर्वं ज्ञातं भवतीत्युच्येत, तदा सर्वशब्दस्याशेषपरत्वमङ्गीकृत्य ब्रह्मणि ज्ञाते ज्ञातव्यमशेषं ज्ञातं भवति, इतरस्य मिथ्यात्वेना ज्ञातव्यत्वादिति वक्तुम् शक्येतापि, नचैवं श्रूयत, अपित्वश्रुतं श्रुतं भवतीति । तत्र ब्रह्मणि श्रुते पूर्वमश्रुतम् तदेव ब्रह्म श्रुतम् भवतीत्य वक्तव्यतया अन्यच्छ्रुतं भवतीत्यर्थः प्रतीयते ।

ननु दृष्टान्ते "सर्वं मृण्मयं विज्ञातं स्या" दित्युक्तेः दार्ष्टान्तिके तद्विवक्षितमेवेति चेन्न, दृष्टान्तबलात् सर्वत्वलाभे तत्समानार्थत्वाय तद्वत् कृत्स्नस्य तत्कार्यतया तदभिन्नत्वेन ज्ञाततैव विवक्षणीया, न तु कृत्स्नस्याज्ञातव्यता । दृष्टान्ते हि सर्वं मृण्मयं विज्ञातं स्यादित्युच्यते , न हि तत्र कृत्स्नस्य मृण्मयस्याज्ञातत्वं मृत्पिण्डस्य ज्ञातव्यत्वं च विवक्ष्यते ।

एतेन दार्ष्टान्तिक एवासङ्कोचात् सर्वत्वलाभ इति निरस्तम् , तल्लाभेऽपि दृष्टान्तवघटयेन इतरज्ञातव्यत्वविवक्षाया असम्भवादेव । तदसम्भवश्च , जलाहरणाद्युद्देश्यसिद्ध्ये घटस्यैव ज्ञातव्यत्वात् । तदर्थमेव हि मृत्पिण्डस्य ज्ञातव्यता ।

एवम् "सदेव सोम्येदमग्र आसी" दित्यत्र विवर्तपक्षे इदङ्ग्रहणवैयर्थ्यम् । स्वरूपोपादानत्वपक्षे 'अग्रे सदेवासीत् तदैक्षत तत्तेजोऽसृजत' इत्येव पर्याप्तेः । सिद्धान्ते तु इद ग्रहणाभावे ब्रह्ममात्रस्य पूर्वमवस्थानोक्तौ तस्यैव बहुभवनाभिधाने स्वरूपोपादानत्वशङ्का स्यादिति इस्यैव सूक्ष्मरूपेणावस्थानमुच्यते 'इदं सदासी' दिति ; ईक्षणसहकारादनेन विशिष्टोपादानसिद्धिः । किञ्च नहीदं सदिति सत्यमिथ्यावस्तुनोस्सामानाधिकरण्यव्यपदेशस्सम्भवति । नहि रजतं शुक्तिरासीदिति व्यपदिशन्ति । व्यपदिशन्ति हृदि रजतमिति इति चेत ? किन्ततः ? स व्यपदेशो भ्रान्तिमूलः । तदभावे च कथं श्रौतो व्यपदेशः । सदेवासीदिदं नासीदित्युक्तावध्याहारः । वृद्धिमिच्छतो मूलतो हानिश्च, उपादानत्वप्रतीतेर्हि मिथ्यात्वं सिसाधयिषितम् , सैवासिद्धा, नहि गेहे देवदत्त एवासीन्नान्य इत्युक्ते देवदत्त इतरेषामुपादानमिति प्रतीयते । अथ घटः पूर्वं मृण्मात्रमासीदितिवदिदमग्रे सन्मात्रमासीदित्युक्तौ हि उपादानत्वम् सिध्येत् । तथोक्तो चानेन वाक्येन सजातीयविजातीयस्वगतभेदनिषेधात् प्रपञ्चमिथ्यात्वसिद्धिरित्येतत् व्याहन्यते । सजातीयादिविशेषशून्यम् यदस्ति तदासीदित्युक्तौ न दोष इति चेन्न,—पूर्वं कार्याभावमात्रप्रतिपादनस्यैव कारणत्वप्रतिपादनोपयोगितया मिथ्यात्वप्रतिपादनस्यानुपयोगात् ।

एवम् "तद्धैक आहु" रित्यादिना कार्यस्य प्रलयकालेऽपि सत्त्वप्रतिपादनेन तार्किकमतनिराकरणेनापि व्याघातः । न च तद्वाक्यं शून्यवादिनिराकरणार्थमिति वक्तुम् शक्यम् ,

सर्वदा शून्यत्ववादिभिरग्र इति विशेषानभिधानात् , जायत इत्यनभिधानाच्च । अतोऽनुवादस्याग्रमर्थः-इदं प्रलयकाले अविद्यमानमेवासीत् , कथं तर्हि सर्गसम्भव इत्याशंक्य कर्तृसद्भावमाह एकमेवेति, एकशब्दः प्रधानपरः, ईश्वरो विवक्षितः, घटादिरूपकार्य इव कर्तापेक्षितः, न च जीवस्य तदानीं करणकलेवरादिविधुरस्य कर्तृत्वमुपपद्यते । ततस्तद्वैधुर्यात् कथं सर्ग इत्यत्राह अद्वितीयमिति; कर्त्रन्तरनिरपेक्षमित्यर्थः । कार्यत्वं हि सकर्तृकत्वेन व्याप्तं, न तु द्विकर्तृकत्वेनाप्रयोजकत्वात् , क्वचिद्बहुकर्तृकत्वदर्शनात्तत्प्रसङ्गाच्चेति भावः , सहकार्यपेक्षायामाह असत इति । तस्मादेकशब्दोदितादीश्वरादसतः प्रागभावाच्चेत्यर्थः , कार्योत्पत्तिक्षणे अविद्यमानात् हेतुत्वमात्रविवक्षया पञ्चमी ; उत्तरस्यायं भावः । कथमिति मृदादेर्विकारादिस्पर्शमात्रदर्शनात् कार्यद्रव्यस्य कारणाभेदात् प्रागभावासिद्धेश्चेति ।

एवम् "बहुस्यां प्रजायेये" ति व्याघातः, अभेदानुपपत्तेरेव । प्रजायेयेति च व्यर्थम् । सिद्धान्ते तु स्वस्य बहुभावसिद्धिद्वारा सर्गसङ्कल्प उच्यते 'प्रजाये' येति , प्रजनयेयेत्यर्थः । 'तत्तेजोऽभव' दिति वक्तव्ये 'तत्तेजो सृजते' त्यस्वरसम् । सिद्धान्ते तु द्वारसर्गोऽभिधीयते-स्वरूपाभेदभ्रमव्यावृत्तये । एवम ब्रह्मोपादानत्वस्य विशेषणस्य चाभ्यासाद्विशिष्टोपादानत्वतात्पर्यं स्पष्टम् । अपागादग्नेरग्नित्वमित्यादिना कार्यमिथ्यात्वं प्रतीयत इति चेन्न ,--अग्निस्वरूपभङ्गं कृत्याग्नित्वस्यैव निरासात् । तस्मादवयविनिराकरणमिह क्रियते , समुदायातिरेकेणावयविनोऽभावादग्नित्वजातिदूरोत्सारितेत्यर्थः ।

" ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे " त्यनेनापि व्याघातः । कथमैतदात्म्यम् । चेतनाचेतनगतदोषस्य ब्रह्मण्यपि प्रसङ्गादित्यत्राह 'तत्सत्य' मिति । तत्र हेतुः ' स आत्मे ' ति , शरीरीत्यर्थः । समभिव्याहारविशेषविधुरस्यात्मशब्दस्य शरीरप्रतिसम्बन्धिन्येव स्वारस्यात् । एवं "तत्त्वमसी" त्यनेनापि व्याघातः ; शरीरित्वेन विशिष्टोपादानत्वमुपपाद्य कार्यविशेषे तदुपसंहारात् । एवम् "ब्रह्मवा इद' मित्यादिश्रुत्यन्तरैरपि व्याघातः ।

सद्विद्यामहावाक्यतात्पर्येणापि व्याहन्यते विवर्तवादः । तथाहि--पुत्रानुकम्पया तस्य मोक्षसाधनज्ञानमुत्पिपादयिषुर्निमित्तोपादानत्वविशिष्टब्रह्मज्ञानस्य मोक्षसाधनत्वम्मन्वानस्तदुपदेशायोद्युक्तोऽर्थगौरवमनुसन्धाय जिज्ञासामुखेनेममर्थमुपदेष्टुम् तस्य जिज्ञासोत्पादनाय एकविज्ञानेन सर्वविज्ञानमुपक्षिप्य तस्य जिज्ञासामुत्पाद्यतेन पृष्टस्सन् 'सदेवे' त्यारभ्य षड्भिः खण्डैः कारणत्वमुपदिदेश । पुत्रोऽपि जिज्ञासितमर्थं ज्ञातवान् । पुनर्ज्ञातव्यान्तराभावात् । "तद्धास्य विजज्ञाविति विजिज्ञावि" त्युपसंहृतम् । जिज्ञासानिवृत्तेश्च श्वेतकेतुः पुनर्न पप्रच्छ । अतो; निमित्तोपादानत्वविशिष्टब्रह्मज्ञानस्य मोक्षसाधनतया महावाक्यतात्पर्यविषयत्वात् ; तद्विरुद्धो विवर्तवादः । उत्तरखण्डानां किं प्रयोजनमिति चेत् ? उक्तार्थस्थिरीकरणमिति ब्रूमः । शिष्यस्य जिज्ञासाविरहेऽपि स्वोत्पादितं ज्ञानं दृढीकर्तुं आचार्यः शिष्यानुकम्पया उक्तमेवार्थं दृष्टान्तादिभिरुपपाद्य उपसञ्जहार । तत्रचेतनोपादानत्वम् सद्वारकत्वञ्च दृढयति; " स्वप्नान्त " मिति । चेतनस्य सुषुप्तौ

लयोपपादनास्तस्य प्रलयोत्पत्तिसम्भव उक्त इति चेतनानुपादानत्वशङ्काव्यावृत्तिमुखे कारण वाक्ये 'इद' मिति चेतनोऽपि संगृहीत इत्युक्तं भवति । स च लयः सद्द्वारकावस्थाप्रहाणमेव ; न तु द्रव्यत्वरूपनाश इत्यभिप्रायेणाह "यथाशकुनि" रिति । बन्धनं सूत्रबन्धनशाखा , मनो-जीवः ; प्राणः-परमात्मा । शकुनिर्निर्व्यापारतया बन्धनं प्राप्य यथा तिष्ठति तथा जीवः स्वव्यापारभूत-ज्ञानविकासावस्थां विहाय परमात्मानं प्राप्य तिष्ठतीत्यर्थः । चेतनोपादानत्वमेव प्रकारान्तरेणोप-पादयति ; "अशनाये" ति शरीरस्य सृष्टिवाक्योक्तभूतत्रयात्मकत्वम् युक्त्या प्रसाध्य; तद्विशिष्ट-चेतनोपादानत्वमिह प्रतिपाद्यते । "सदायतना" इति स्थितिरुक्ता; 'सत्प्रतिष्ठा' इति लयः । प्रागुक्त शरीरस्य भूतत्रयात्मकत्वम् स्मारयति 'यथातिव' ति । त्रिवृत्करणार्थं भागत्रयसम्भावनार्थमन्नमशि तमित्यादिनोक्तमिह स्मारितम् । सुषुप्तिवल्लयान्तरमप्याह 'अस्य सोम्ये' ति । तेजः शब्दो जीव परः; स्वप्रकाशत्वात्प्रकाशवत्वाच्च । 'स य' इति । 'सदेवे' त्यत्र यत्सूक्ष्मचिदचिद्विशिष्टं वस्तूक्तम् तदेवेदानीं सुषुप्तौ लयस्थानत्वेनोक्तमित्यर्थः । सद्द्वारकत्वस्पष्टयार्थमाह 'एतदात्म्य' मिति । एष आत्मा यस्य तदैतदात्म्यम् ; स्वार्थे ष्यञ् । दोषान्वयप्रसङ्गादिदमनुपपन्नमित्याशङ्क्य स्वरूपा—भेदो न विवक्षित इत्यभिप्रायेणाह 'तत्सत्य' मिति । हेतु माह 'स आत्मे' ति । उक्तमुपादानत्वं विशेषे उपसंहरति; 'तत्त्वमसी' ति । उक्तं सद्द्वारकावस्थाश्रयत्वेनोपादानत्वं नवकृत्योऽभ्यस्य दृढी क्रियते । यदि सम्पत्तिमात्र लयः कथं सुप्ता न जानीयुः, शकुनिर्हि जानातीत्यभिप्रायेणाह 'भूय' इति । सुषुप्तिदशायां शरीरविशिष्टस्य न लयः, किन्तुज्ञान विकासावस्थाविशिष्टस्यैवेत्यभिप्रायेणाह 'त इहे' ति । शकुनेर्बन्धनादागतस्य तज्ज्ञानदर्शनात् तद्वदिहापिज्ञानं स्यादिति शङ्कापि दृष्टान्तेन परिहार्येत्यभिप्रायेणाह 'भूय' इति । ' समुद्रा ' दिति । मेघैः समुद्रादप उद्धृत्य वर्षणाद्धि नद्यः प्रवहन्तीति भावः । इयं समुद्रादागता उत्थाने न शरीरसृष्टिरित्यभिप्रायेणाह ' त इहे' ति । नदीदृष्टान्तेन स्वरूपविकारः प्रतीयत इत्यभिप्रायेणाह 'भूय' इति । नन्वणिम्नः कथं महत्त्वम ; अतः कार्यं द्रव्यान्तरमेव , तच्च पूर्वमेव कारणे वर्तते सामग्र्या तदभिव्यज्यते, इति ह्येक आहु रित्यभिप्रायेणाह 'भूय' इति । यदि पूर्वमेव कारणे कार्यं स्यात् तदा तत्तत्रोपलभ्येत , नचाभि-व्यञ्जकाभावादनभिव्यक्तिः, सामग्र्या व्यञ्जकत्वे तद्विरहे कार्याप्रतीतिप्रसङ्गात् , तस्मादणवेवावय-वान्तरैः सह पृथुकार्यतां भजत इत्यर्थः । यदि परमात्मा कार्यकारणान्तर्गतः , स कथं नोपल-भ्यत इत्यत्राह 'भूय' इति । लवणवत् परमात्मग्रहणे उपायान्तरम ब्रूहीत्याह 'भूय' इति पूर्वो क्तवाञ्ञनस्संपत्तिकालोपपादनाभिप्रायेणाह 'भूय' इति उक्तार्थस्य सत्यतोपपादनाभिप्रायेणाह 'भूय इति । सर्वेषां प्रश्नानां मदीयप्रश्नमनपेक्ष्य स्वप्नान्तरवद्वक्तव्यम् स्वयमेव ब्रूहीति वाभिप्रायः । 'यथा तत्र न दह्यते' ति । येन सत्येन न दह्यते तथैव सत्यमिदम् विशिष्टोपादानत्वं , अतस्त प्तपरशुग्रहणेनापीममर्थं साधयामीत्यभिप्रायः । एवम् निमित्तत्व विशिष्टोपादानत्वयोरेव सद्विद्या-तात्पर्यावगमात् तद्विरुद्धो विवर्तवादः इति ।

एवम् सूत्रव्याघातोऽपिः "तदन्यत्वमारम्भणशब्दादिभ्यः" इत्यनन्यत्व प्रतिपादनात् ।

तस्य ब्रह्मणः अन्यत्वं न विद्यते यस्मादन्यत्तदनन्यत् , तस्य भावः-अनन्यत्वमिति विवक्षायां हेत्व नन्वयः, नामरूपस्पर्शस्य हेतुत्वेनाभिधानात् । न च तस्य मिथ्यात्वे हेतुत्वसम्भवः । 'वाचारम्भण' मिति व्यावहारिकत्वमुक्तम् । तदेवात्र सूत्रे आरम्भणशब्दविवक्षितमिति चेन्न,-'वाचारम्भण' मित्यस्य एतदर्थपरत्वस्या 'रम्भणशब्दादित्य' इत्यनेनैव निरासात् । न हि वाचारम्भणशब्दादिभ्य इत्युक्तम् ।

एवम् श्रुतिव्याघातादेव माध्वाश्च ध्वस्ताः । अयम् हि माध्वानां अध्वा, जगन्निमित्तमेव ब्रह्म; नोपादानमपि, परिणामित्वम् ह्युपादानत्वम् ; तच्च निर्विकार त्वश्रुतिविरुद्धम् , न च चिदचिद्विशिष्टस्य जगदुपादानत्वं , विशिष्टस्य विशेषण विशेष्याभ्यामनन्यत्वेन विशेष्यस्योभयो र्वोपादानत्वविवक्षायामुक्त एव दोषः , विशेषणोपादानत्वोक्तिर्ब्रह्मणोनुपादानत्वपर्यवसायिनी ; तस्मान्निमित्तमेव ब्रह्मेति । श्रुत्यो विशिष्टोपादानत्वप्रतिपादनादेव ते निरस्ताः । मृद्रूपम कारणं त्रिवृत्कारणोपदेशात् भूतत्रयात्मकम , तथा तत एव घटोऽपि भूतत्रयात्मकः, ततश्च विशिष्टमेव कारणम् , विशिष्टमेव कार्यं, तत्राप्यंशभेदनिरूपणे कार्यगततत्तद्भूतांशे कारणगततत्तद्भूतांशः कारणम् ; एवमिहापि चिदचिद्ब्रह्मसंवलितं कारणं कार्यमपि , तथा अंशभेदनिरूपणे तत्तदंशे तत्तदंशः कारणम् । अचितः कार्यत्वमवस्थाद्वारकम् ; द्रव्यस्य नित्यत्वात् , चिद्ब्रह्मणोः कार्यत्वम् सद्वारकावस्थाद्वारकम । सम्भवति च द्वारस्याव्यवधायकत्वं, कारणत्ववत् । दृश्यते चाश्रयत्वेऽपि द्वारस्याव्यवधायकत्वम , खट्वायां शयितेऽपि प्रासादे शेत इत्यत्र , घटं वहत्यप्युदकं वहतीत्यत्र च । उदकानाश्रयत्वे हि घटवहनाच्छ्रमाधिक्यं नोपलभ्येत, गुरुद्रव्याश्रयतायाः श्रमहेतुत्वस्य क्लृप्तत्वात् , ततोऽन्यस्य स जलकुम्भवहनस्यापि प्रयोजकत्वमनुपपन्नम । "कांटिन्यवान्यो बिभर्ती" त्यादिकमपि दृश्यते । नचैवं भूतलस्य घटगतरूपाश्रयत्वप्रसङ्गः; अपृथक्सिद्धस्यस्वापृथक्सिद्धम्प्रति पृथक्सिद्धस्यस्वपृथक् सिद्धं प्रति च द्वारत्वात् । ब्रह्मणि सद्वारकावस्थान्वये 'बहुस्या' मित्यादि प्रमाण सहस्रमुपलभ्यते । अन्यत्रादर्शनेऽपि श्रुतिबलादेव सद्वारकाश्रयत्वमङ्गीकर्तुं शक्यम , कि पुनस्तद्दर्शने । द्वारसापेक्षत्वाच्च न निर्विकारत्वश्रुतिविरोधः । निषेधो हि यथा प्रसक्ति, प्रसक्तिश्च यथान्यत्र दर्शनम् , अचेतने च विकारः साक्षादेव दृष्टः, तथैवेह प्रसक्तो निषिध्यते । यथा भूतले घटो नास्तीत्यत्र संयोगसम्बन्धेन प्रसक्तेः तथैव निषेधः , न सम्बन्धान्तरेण । नच साक्षात्वविवक्षायां लक्षणा; अधिकरणप्रतियोग्यभावपदेषु कस्यापि लक्षणाविरहात् । घटघटत्वयोः प्रतियोगित्वप्रयोगितावच्छेदकत्ववदवच्छेदकीभूतस्य संसर्गस्यापि वाक्येनैव भानात् । एवं चेतनगतदोषान्वयनिषेधेऽपि द्रष्टव्यम । एवञ्च श्रुतिसिद्धोपादानत्वनिरासे श्रुतिविद्वेष एव निमित्तम । श्रुति हृदयविसंवादार्थस्य श्रुत्यर्थतया कीर्तनादपि श्रुतिविद्वेषः सिद्धः । तथाहि-एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सादृश्यप्राधान्यनिबन्धना, सादृश्यनि बन्धनत्वे दृष्टान्तत्रयं वाचारम्भणमित्युक्तम् , तद नुपपन्नम् । तज्ज्ञानस्य तत्सदृश ज्ञाने कथं हेतुत्वम ? सर्वेषां सर्वज्ञत्वप्रसङ्गात् तत्सदृशमिति ज्ञाने हेतुत्वं तु सर्वसाधारणत्वापन्नम् ब्रह्मासाधारणमिति तमप्रादयः येनाश्रुतमिति निर्देशानुपपत्तिः ।

दृष्टान्तवैघट्यम् च । दार्ष्टान्तिके हि प्रमेयत्वादिना यथाकथञ्चित्सदृशत्वेन ज्ञानम् विवक्षितम्, तत्र किमर्थम् तत्कार्यस्य दृष्टान्तत्रयोपादानम्, विशेषोपादानस्य प्रयोजनाभावात् । किञ्च सादृश्ये किमर्थो निर्बन्धः ? ततोऽपि तद्विसदृशत्वेन ज्ञातम् भवतीत्येव वक्तुम् युक्तम्, ब्रह्मापेक्षया कृत्स्नस्याप्यत्यन्तविसदृशत्वात्, तत्प्रतियोगित्वस्य कथञ्चिद्ब्रह्मासाधारण्यसम्भवात् । ततोऽपि तज्जन्यत्वेन ज्ञातम् भवतीत्येतद्वरम्, दृष्टान्तस्वारस्यात् । प्राधान्यात् ज्ञानमित्यनुपपन्नम् । इतरज्ज्ञातप्रायम्, तज्ज्ञानफलस्यैतज्ज्ञानेनैव सिद्धत्वादिति ह्यर्थः; तथा च लक्षणा 'वाचारम्भण' मित्यस्यादृष्टान्तत्वाच्च ।

ननु वाचा वागिन्द्रियेणारम्भणं—उत्पादनं यस्य सांकेतिकस्य भावशब्दस्य तन्नामधेयम् विकारः, कर्मणि घञ् विकृतम्, संस्कृतापभ्रंशरूपेण विक्रियमाणत्वात् । 'वाद्वाचे' त्याकारान्तः, 'मृत्तिके' त्यादि, संस्कृतनामधेयन्तु सत्यं नित्यं अतस्संस्कृतस्य नित्यत्वात् सार्वत्रिकः प्रयोगः, भाषाया विकारत्वात् क्वाचित्कः, अतो व्यापकत्वात् संस्कृतस्य भाषाविशेषेण यत्फलम् देशविशेषे व्यवहार लक्षणं तत्संस्कृतज्ञानेन भवति तथेहापि ब्रह्मज्ञानेन इतरज्ञानकार्यं भवतीत्यर्थ इति चेन्न,—संस्कृतस्यैव क्वाचित्कत्वात् । सम्यगधीतव्याकरणानामेव संस्कृतप्रयोगसामर्थ्यात् । अन्यथा ह्यपभ्रंश एव स्यात् । यथेति पदाभावेन दृष्टान्तत्वं चानुपपन्नम् । न च 'यथा-सोम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या' दित्यनुषज्यते, तस्योपपादकं 'वाचारम्भण' मितीति वाच्यम्; अनुषङ्गस्यैव दोषत्वात् । अनुषङ्गेऽपि पिण्डमपि पदानन्वयाच्च । नखनिकृन्तनेन कार्ष्णायसमित्ये तदत्यन्तासङ्गतम् । तस्मात् श्रुत्यैव सर्वे वादिनो निरस्ताः ।

श्रुत्यैवैवम् समस्ताश्च निरस्ताः प्रतिवादिनः ।
तथैव हृदयम् सम्यक् बोधिता मम देशिकाः ॥

एवम् मध्वमते सूत्रव्याघातोऽपि स्पष्टः ।

इति श्रीमद्वाचार्यपरामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां ब्रह्मोपादानत्वान्यथानुपपत्तिनाम त्रिपञ्चाशः स्कन्धः ॥५३॥



## ॥ अथ मायोपादानत्वान्यथानुपपत्तिभङ्गवादः चतुःपंचाशः ॥ ५४ ॥

यत्प्रपत्तिं विना सर्वैर्यस्य माया दुरत्यया ।
धनञ्जयरथोत्तंसं तत्प्रपद्ये परं महः ॥

प्रसाद—जिन भगवान की प्रपत्ति किए विना कोई भी इस दुर्लंघ्य माया को पार नहीं कर सकता है, वे ही श्रीभगवान् सारथि रूप से अर्जुन के रथ को सुशोभित किए ; उन्हीं परम ज्योति स्वरूप श्रीभगवान् की मैं शरणागति करता हूं।

यत्प्रपत्ति विनेति। अनेन भगवत्प्रसादैकनिवर्त्यतया ज्ञाननिवर्त्यत्वाभावप्रतीतेर्जगदुपादानस्य मिथ्यात्वाभावसिद्ध्या वादार्थस्संगृहीतः।

यदुच्यते—'मायां तु प्रकृतिं विद्यात्' इति विश्वस्य मायोपादनकत्वश्रवणात्, मायाशब्दस्य च मिथ्यार्थत्वात् मिथ्योपादानकस्य च सत्यत्वायोगात् विश्वमिथ्यात्वं सिद्धमिति—तदपि स्तनन्धयरुदितम् ( कथितम् )। तत्र तावत् श्रुतौ वचनव्यक्तिर्विपर्यासिता। न हि तत्र प्रकृत्यनुवादेन मिथ्यात्वं विधीयते, अपि तु मायानुवादेन प्रकृतित्वम्। तु शब्दोऽपि तस्यैव ( तदैव ) वानुकूलः। पूर्वस्मिन् वाक्ये, 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' इति प्रसक्तयोर्मायामायिशब्दयोरर्थमविदुषस्तज्ज्ञानोपजननायैव हि, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्युच्यते। अतः, 'या मायेति अत्रोक्ता, सा जगदुपादानतयोपनिषत्प्रसिद्धा प्रकृतिरेव। यश्च मायीति निर्दिष्टः, स च प्रकृत्यधिष्ठाता चिदचिच्छरीरको महेश्वर एव' इति वचनव्यक्तिः। स्ववाक्येऽपि यच्छब्दाद्यभावेऽपि प्रथमचरमभावेनोद्देश्योपादेयव्यवस्था सिद्धा। तथा ह्याहुः—'यद्वृत्त(च्छब्द)योगः प्राथम्यमित्याद्युद्देश्यलक्षणम्' इति॥

प्रसाद—अद्वैती विद्वानों का यह कथन भी बच्चों के रुदन के समान है कि—'मायां तु प्रकृतिं विद्यात्' अर्थात् माया को जगत् का उपादान ( प्रकृति ) जानना चाहिए, इस वाक्य में माया को जगत् का उपादान कारण बतलाया गया है। माया शब्द मिथ्या अर्थ का वाचक है। मिथ्या उपादान वाला प्रपञ्च सत्य नहीं हो सकता है, इस तरह विश्व के मिथ्यात्व की सिद्धि होती है। क्योंकि श्रुति में अद्वैती विद्वानों के विपरीत ही बात कही गयी है। श्रुति में प्रकृति का अनुवाद करके उसके मिथ्यात्व का अनुवाद नहीं किया गया हैं; अपितु माया का अनुवाद करके उसके प्रकृतित्व का विधान किया गया है। श्रुति का 'तु' शब्द भी इसी के अनुकूल है ; क्योंकि इसके पहले के वाक्य 'अस्मान मायी सृजते विश्वमेतत्, तस्मिंश्चान्यो मायया सन्निरुद्धः' में आये हुए मायी तथा माया इन दो शब्दों के अर्थ को नहीं जानने वालों को इन दोनों शब्दों का अर्थ ज्ञान कराने के लिए ही, श्रुति कहती है—'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' श्रुति का अभिप्राय है कि यहां श्रुति में जिसे माया कहा गया है वह जगत् के उपादान रूप से उपनिषदों में प्रसिद्ध प्रकृति ही है। जिसे मायी कहा गया है, वह प्रकृति का नियामक चेतनाचेतन शरीरक महेश्वर (परमेश्वर) ही हैं। अपने द्वारा कहे गये वाक्य में आदि अन्त में यत् तत्' शब्दों का प्रयोग किए बिना भी उनके उद्देश्य विधेयभाव की सिद्धि होती ही है। जिसे कहा भी गया है कि—जिसके पहले यत् शब्द का सम्बन्ध होता है, उसको उद्देश्य कहते हैं।

मायान्त्विति । प्रकृतिशब्देन जगदुपादानं निर्दिश्य तस्य मायाशब्देन मिथ्यात्वं विधीयत इति भावः । विपर्यासितेति । त्वयेति शेषः । तुशब्द इति । तुशब्दो यच्छब्दवदुद्देश्यत्वसूचक इति भावः । मायानुवादेन प्रकृतित्वं किमर्थं विधीयत इत्यत्राह पूर्वस्मिन्निति । इति वच नेति । इत्यर्थप्रतिपादिका वचनव्यक्तिरित्यर्थः । यच्छब्दाद्यभावेऽपीति । तुशब्दाभावोऽभ्युपगतः ।

अस्त्वेवं वचनव्यक्तिः, तथाऽपि प्रकृतेर्मायाशब्दवाच्यत्वसिद्धे मिथ्यात्वमपि सिध्यतीति चेन्न; मायाशब्दस्य मिथ्यार्थपरत्वेऽप्युपचारतोऽपि तत्र तत्प्रयोगसम्भवेन वाच्य त्वनिर्णयासिद्धेः । न हि प्रकृतिर्मायाशब्दवाच्येति श्रुत्यर्थः, अपितु अत्र मायाशब्देन प्रकृतिर्विवक्षितेति ॥ तथाऽपि मुख्यार्थे बाधकाभावादुपचारवृत्तिरत्रानुचितेति चेन्न ; प्रकृति [कारण] त्वान्यथानुपपत्त्यैव बाधात । कारणसत्यत्वं च बहुशो मृद्दृष्टान्तादिभिर्निदर्शितम् । 'अचेतना परार्था च नित्या सततविक्रिया' 'गौरनाद्यन्तवती सा जनित्री भूतभाविनी' इत्यादिभिः प्रकृतिनित्यत्वसिद्धेश्च तन्मिथ्यात्वं निरस्तम् ॥ सत्यत्वेऽपि केन [धर्मेण ?] मिथ्यात्वोपचारः किमर्थश्चेति चेत, अस्थिरतरभोगप्रसाधकत्वेन स्वप्नार्थतुल्य तया जिहासितत्वज्ञापनार्थं इति मन्वीथाः ।

प्रसाद—यदि कहें कि श्रुति में इस तरह की वचन व्यक्ति होने पर भी प्रकृति के मायाशब्द वाच्य के होने कारण उसके मिथ्यात्व की सिद्धि होती है, तो यह भी नहीं कहा जा सकता है ; माया शब्द के मिथ्या वस्तु बाचक होने पर भी माया शब्द का प्रकृति के अर्थ में औपचारिक प्रयोग भी संभव है । अतएव प्रकृति के माया शब्द वाच्यत्व का निर्णय असम्भव है । श्रुति का यह अर्थ तो है नहीं कि प्रकृति माया शब्द वाच्य है, अपितु श्रुति में माया शब्द से प्रकृति विवक्षित हैं । यदि कहें कि माया शब्द के मिथ्यार्थ मुख्यार्थ होने में किसी प्रकार की अनुपपत्ति न होने से, प्रकृति के अर्थ में माया शब्द का उपचार नहीं माना जा सकता है, तो यह कहना इसलिए उचित नहीं है कि, यहाँ पर माया शब्द को औपचारिक प्रकृत्यर्थक माने विना उसके उपादानत्व ( प्रकृतित्व) की सिद्धि ही नहीं हो सकती है , अतः इस अन्यथानुपपत्ति के द्वारा ही माया शब्द का मुख्यार्थ बाधित है । श्रुति भी कारण की सत्यता मृतिका आदि कई दृष्टान्तों से स्पष्ट करती है । किञ्च मान्त्रिकोपनिषद् की ये श्रुतियाँ प्रकृति को नित्य बतलाकर उसके मिथ्यात्व का खण्डन करती है । वे श्रुतियाँ है (१) 'अचेतना परार्था च नित्या ततविक्रिया - अर्थात् प्रकृति जड; परार्थ। नित्य तथा सदा विकार वाली है । (२) 'गौरनाद्यन्तवती ।' अर्थात् प्रकृति गमन शील आदि अन्त से रहित है । यदि कहें कि सत्य होने पर भी माया के किस धर्म के कारण उसमें मिथ्यात्व का उपचार होता है ? तो उत्तर है कि माया के मिथ्यात्वोपचार के दो कारण हैं (१) माया अत्यन्त अस्थिर भोगों की साधिका है । ( २ ) मायासिद्ध भोग स्वप्न पदार्थो के तुल्य जिहासित हैं । यह बतलाने के लिए ।

मिथ्यार्थपरत्व इति । मिथ्यात्वे प्रवृत्तनिमित्तमित भावः । अपीत्यभ्युपगमस्य मायाशब्दो न मिथ्यार्थ इति भावः । तत्र प्रकृतौ । मायाशब्देनेति । मायाशब्देन विवक्षिता प्रकृतिरिति योजना ।

ननु मायाशब्देन, मायाशब्दविवक्षितत्वोक्तौ लक्षणा स्यात् ततो वरम्; विपर्यास एवेति चेन्न,-अनुवादतात्पर्ये अवगते वाक्यतात्पर्यानुसारेण लक्षणाया अदोषत्वात् ।

ननु मा भूद्विपर्यासः, नापि लक्षणा, मायाशब्दमुख्यार्थोद्देशेन प्रकृतित्वं विधीयतामिति चेन्न,-पदव्याख्यानरूपता । 'विद्या' दिति पदस्वारस्यसिद्धत्वात् । अस्त्वेवं व्याख्यानरूपता अथापि मायाशब्दो मुख्यवृत्त्यैव प्रकृतौ वर्तते, मुख्यार्थश्च मिथ्यैवेति शङ्कते तथापीति । अनिर्वचनीयनिरासाभिप्रायेण वा शुक्तिरजवादेरुपादानत्वादर्शनाभिप्रायेण चाह प्रकृतित्वेति । तदभ्युपगमेनाप्याह कारणेति । मृद्दृष्टान्तेन कार्यकारणयोरभेदः प्रतीयते , एवञ्चेदमर्थस्य सदभेदः प्रकृतेर्विशेषणतया सच्छब्दवाच्यत्व एव सम्भवति , न च सच्छब्दस्य बाधो युक्त इति भावः । निदर्शित मिति । निदर्शनेन समर्थितमित्यर्थः । यद्वा 'मृत्तिकेत्येव सत्य' मित्यादेः कारणसत्यत्व प्रतिपादनपरत्वं हि त्वयोच्यते, सद्विरुद्धम् कारणंमिथ्यात्ववर्णनमित्यर्थः - गौरित्यादि । मिथ्यात्वे ज्ञाननिवर्त्यत्वम् स्यादिति भावः । केनेति । उपचारनिमित्तगुणविशेषप्रश्नः । अस्थिरतरभोग प्रसाधकत्वं गुणः । मायाशब्दस्य मिथ्यार्थवाचित्वमभ्युपगम्योक्तम् ।

न च मायाशब्दो मिथ्यार्थवाची ; विचित्रसृष्ट्युपकरणभूतार्थाभिधायित्वात् । सर्वप्रयोगानुगत निमित्तसम्भवे नानारूपार्थोपादानस्य निरस्तत्वात् / न च मिथ्यार्थेष्वेव तत्प्रयोगः, येन तत्रैव तच्छक्तिः कल्प्येत , अपितु सत्येष्वपि , यथा , 'यावन्तः भूमेः संख्याता देवमायया' इति । न हि मिथ्या भूतस्य कस्यचित् संख्यानकरणत्वं प्रतीमः । 'माया वयुनं ज्ञानम्' इति नैघण्टुकानुसारात् अर्थौचित्याच्च ज्ञानविषयत्वमेव तत्रोचितम् । तथा , 'मायया सततं वेत्ति प्राणिनां तु शुभाशुभम्' इति च । तथा , 'तेन मायासहस्रं तत् शम्बरस्याऽऽशुगामिना । बालस्य रक्षता देहमेकैकश्येन सूदितम् ।।' इति । न हि मिथ्याभूतस्य कस्यचिन्छस्त्रच्छेद्यत्वम् , अपितु तत्त्वोपदेशादेव तन्निवृत्तिः । तथाऽप्यनेकशक्तिकल्पनायां गौरवात् तत्रौपचारिकोऽयं प्रयोग इति चेन्न , विपर्यासस्य दुर्वारत्वात् प्रसिद्धिप्रकर्षान्मिथ्यात्वे [र्थे] शक्तिरङ्गीक्रियत इति चेन्न , मिथ्यापर्यायत्वेन मायाशब्दस्य प्रसिद्धेरेवाभावात् । न हि स्वदृग्दोषादिमात्रमूलभ्रमविषयेषु शुक्तिरजत—रज्जुसर्पादिषु मिथ्याशब्दप्रयोगविषयेष्वपि क्वचित् कदाचिदपि मायाशब्दप्रयोगो दृष्टचरः । अतो यत्रेन्द्रजालादिमूलभ्रान्तिविषयेषु मायाशब्दप्रयोगः , तत्रापि मिथ्यात्वमन्तरेण निबन्धनान्तरमस्तीति निश्चीयते । तच्च किमिति निरूप्यमाणेऽप्यैन्द्रजालिकवत् इन्द्रजिदादौ मायाविशब्दप्रयोगात् , तत्र च अलीकत्वस्याविवक्षितत्वात् सत्यस्य वा असत्यस्य (सत्यत्वासत्यस्य ) वा विचित्रार्थस्य सृष्टौ प्रकाशने वा सामर्थ्यवानित्येव मायाविशब्दार्थः । तच्च

सामर्थ्यम् सत्यो मन्त्रौषधादिरेव, तदनुबन्धी (बन्ध्यती) न्द्रियशक्तिविशेषो वा । ततश्च मायाजन्यज्ञानविषयतया मिथ्याभूतेष्वप्यर्थेषु लक्षणया मायाशब्दप्रयोग उपपद्यते ।

श्लो. मायोत्थज्ञानवेद्येऽ [र्था] र्थे युक्ता मायेति लक्षणा ।
मिथ्यासम्बन्धरहिते नास्त्रादौ सत्यकारणे ॥

प्रवाद—किन्तु माया शब्द मिथ्या अर्थ का वाचक नहीं है, क्योंकि वह विचित्र सृष्टि के उपकरण भूत वस्तु का वाचक है। यदि किसी शब्द के सभी प्रयोगों के अनुकूल प्रवृत्ति निमित्त हो तो फिर उस शब्द को नानार्थक नहीं माना जा सकता है। यह भी नहीं कहा जा सकता है कि मायाशब्द का प्रयोग मिथ्या अर्थ में ही होने उसकी मिथ्यार्थ में ही शक्ति है। अपितु सत्यार्थ में भी उसका प्रयोग देखा जाता है। तथाहि—जैसे देवताओं की माया में जिसे भूमि के धूलि को गिना है।' इस वाक्य में। मिथ्या वस्तु किसी को गिन नहीं सकती है। अतएव 'माया वयुनं ज्ञानम्' इस कोश वाक्य के अनुसार वहाँ उसे ज्ञान का ही बाचक मानना चाहिए। 'मायया सततं वेति पाणिनां तु शुभाशुभम्' अर्थात् परमात्मा अपने ज्ञान के द्वारा प्राणियों के पुण्य पाप को जानता है। इस वाक्य में भी माया शब्द ज्ञान का वाचक है। तथा 'तेन मायासहस्रं तत् शम्बरस्याशुगामिना। बालस्य रक्षता देहमेकैकश्येन सूदितम्। अर्थात उस शीघ्र ग्रामी चक्र ने बालक के देह की रक्षा करते हुए; शम्बरासुर की एक-एक कर हजारों माया को विनष्ट कर दिया। किसी मिथ्या वस्तु को किसी शस्त्र के द्वारा नहीं विनष्ट किया जाता है; अतएव तत्त्वोपदेश के ही द्वारा मिथ्या वस्तु की निवृत्ति होती है। यदि कहें कि माया शब्द की अनेक शक्ति की कल्पना करने पर गौरव दोष होगा; तो यह भी नहीं कहा जा सकता है, क्योंकि माया शब्द मिथ्यार्थ का पर्याय है. इस बात की प्रसिद्धि नहीं है। केवल अपने नेत्र के दोष के आदि के कारण प्रतीत होने वाले शुक्ति रजत; रज्जू सर्प आदि के जिनको मिथ्या कहा भी जाता है, उनको बतलाने के लिए कहीं भी माया शब्द का प्रयोग नहीं देखा जाता है। अतएव जहाँ ऐन्द्रिजालिक पदार्थों को बतलाने के लिए माया शब्द का प्रयोग होता है, वहाँ भी उसके प्रयोग का कारण उन वस्तुओं से भिन्न ही है, यह निश्चित होता है। वह कारण क्या है; इसका उत्तर है कि जिस तरह इन्द्रजाल करने वाले को मायावी कहा जाता है उसी तरह से इन्द्रजीत (मेघनाद) आदि के लिए मायावी शब्द का प्रयोग देखा गया है। यहाँ पर मायावी शब्द के प्रयोग में मिथ्यात्व नहीं अभिप्रेत है, अपितु मायावी शब्द से इतना ही अभिप्रेत है कि; यह मायावी, सत्य या असत्य या विचित्र वस्तु की सृष्टि करने अथवा प्रकाशन करने में समर्थ है। उस व्यक्ति वह सामर्थ्य भी मन्त्र; एवम् औषध के समान सत्य ही है। अथवा माया शब्द का अर्थ उन विचित्र वस्तुओं की सृष्टि अथवा प्रकाशनोपयोगी शक्ति विशेष है। इस तरह माया जन्य ज्ञान का विषय होने के कारण मिथ्याभूत विषयों के भी अर्थ में माया शब्द का लाक्षणिक प्रयोग होता है। माया जन्य ज्ञान के विषयभूत अर्थों में माया शब्द का लाक्षणिक प्रयोग होता है तथा मिथ्या के सम्बन्ध से रहित अस्त्र आदि जो सत्य कार्य के कारण हैं; उन वस्तुओं के अर्थ में माया शब्द का मुख्य ही प्रयोग होता है।

इदानीं तदेव नेत्याह नचेति। मिथ्यात्वं न प्रवृत्तिनिमित्तम्, किन्तु विचित्रसृष्ट्युपकरणत्वमित्यर्थः। 'तस्मा उकथ्यमेव प्रायच्छत ; तन्निर्मायमभूत, महान् यज्ञो हि तस्य मायासीत् इति यज्ञे मायाशब्दः प्रयुक्तः, स च न मिथ्यार्थः, यज्ञस्य मिथ्यात्वासिद्धेः, मिथ्यात्वं च न

सप्रतिसम्बन्धिकम् , अतः 'तस्य मायासी' दिति विचित्रसृष्ट्युपकरणत्वेन यद्वस्यादस्थानमेव वाक्यमिति भावः। क्वचित्तत्प्रवृत्तिनिमित्तकत्वेन प्रयोगः, क्वचित्तु तत्पुरस्कारेणैव लक्षणया गौण्यावा ; एवमनुगमो विवक्षितः, एतच्चोत्तरत्र स्पष्टीभविष्यति।

ननु ऐन्द्रजालिके गजे मायागज इति प्रयुज्यते; तस्य गजस्य मिथ्यात्वात्तत्र च माया-शब्दप्रयोगात् मिथ्यात्वमप्यर्थस्स्यादित्यत्राह सर्वप्रयोगेति।

नन्वनुगतप्रवृत्तिनिमित्तम् न कल्पनीयं मायाशब्दस्य सत्ये प्रयोगाभावात् मिथ्यार्थ एव हि मायाशब्दः प्रयुज्यत इत्यत्राह नचेति। यद्येवं कञ्चित्प्रयोगमाश्रित्य प्रयोगान्तरम् निह्नूयते, तर्हि सत्ये प्रयोगमाश्रित्य मिथ्याप्रयोग एव निह्नूयतामिति प्रतिबन्द्यभिप्रायेणाह अपितु सत्येष्वे-वेति। स्यादेवम्प्रतिबन्दी, यदि सत्ये प्रयोगस्स्यादित्यत्राह यथेति।

ननु न वयं प्रयोगं निह्नुमहे, अपित्वनेकशक्तिकल्पनागौरवभयेन अनुगतप्रवृत्तिनि-मित्तम् न कल्पनीयं किन्तु मिथ्यात्वमेव प्रवृत्तिनिमित्तम् सत्ये प्रयोग औपचारिकं प्रत्येव वक्त-व्यमिति गूढाभिसन्धिश्शङ्कते तथापीति। विपर्यासित्वेति। प्रतिबन्दीमात्रेणापि मिथ्यार्थकत्वान-भ्युपगमानन्तरम् पूर्वपद्यभिमतान्यथानुपपत्तिन सिध्यतीति भावः। अभिसन्धिमुद्घाटयंश्चोदयति प्रसिद्धीति। मिथ्यात्वं प्रवृत्तिनिमित्ततया विवक्षितम्। प्रसिद्धेरेवेति। प्रसिद्धिरेव नास्ति, कुतः प्रकर्ष इत्येवकाराभिप्रायः। प्रसिद्ध्यभावमुपपादयति नहीति। स्वदृक्दोषेति। ऐन्द्रजालिकव्या-वृत्तिः। नन्वैन्द्रजालिके मिथ्यात्वे प्रसिद्धिरस्त्येवेत्यत्राह अतो यत्रेति। शुक्तिरजतादिषु मिथ्यात्वे सत्यपि प्रयोगाभावात् अन्यत्र प्रयोगे च तन्निबन्धन किन्त्वन्यदेवेत्यर्थः। अलौकिकत्वस्येति। परमते मिथ्यात्वे तस्यापि लौकिकैस्तज्ज्ञानात् मिथ्यात्वस्य साधारणत्वाच्चेति भावः। सत्यस्य वाऽसत्य-स्येति। सत्यासत्याभ्यां याथासंख्यम् सृष्टिप्रकाशनयोरन्वयो न विवक्षितः; प्रवृत्तिनिमित्त द्वित्व-प्रसङ्गात्, किन्तु उभयोरुभयत्राप्यन्वयः। सत्यस्य वाऽसत्यस्य वा सर्गसामर्थ्यवानिति परमते, सत्यस्यासत्यस्य वा प्रकाशेन सामर्थ्यवानिति सर्वसाधारणम्; क्वचित्प्रकाशने सामर्थ्यमर्थसृष्टि-द्वारा। यद्वा याथासङ्ख्येनैवान्वयः, विचित्र सर्गकरत्वविचित्रप्रकाशकत्वान्यतरसामर्थ्यं प्रवृत्ति-निमित्ततया विवक्षितम्। तस्मात् सामर्थ्यविशेषो मायाशब्दप्रवृत्तिनिमित्तमिति भावः। किञ्च मायाशब्दस्य मिथ्यार्थकत्वे शस्त्रादौ प्रयोगोऽनुपपन्न इत्याह मन्त्रौषधेति। मिथ्यासम्बन्धराहित्ये हेतुः सत्यकारण इति। सत्यस्य कारणम्।

न हि पर्वतसमुद्रपावकादिहेतुष्वस्त्रविशेषेषु मिथ्यासम्बन्धगन्धरहितेषु मायाशब्दो पचारः सम्भवति॥ मिथ्यार्थसादृश्यात् तत्र गौणोऽयं प्रयोग इति चेन्न, विपरिवर्तप्रस-ङ्गस्य प्रागेवोक्तत्वात्। लक्षणापेक्षया गौणवृत्तेर्जघन्यत्वाच्च मुख्यलक्षणावृत्तिभ्यां प्रयोग-निर्वाहे सम्भवति; मुख्यगौणवृत्तिभ्यां निर्वाहस्यानुचितत्वात्। अतो विचित्रसृष्ट्युपकरण-भूतार्थविशेष एव मायाशब्दशक्तिः।

नन्वेवमपि सर्वप्रयोगानुगतं निमित्तं न सिध्यति । 'मेघोदयः सागरसन्निवृत्तिः' इत्यारभ्य; 'विष्णोर्विचित्राः प्रभवन्ति मायाः' इति प्रयुज्यते । तथा; 'देवमायेव निर्मिता' 'संख्याता देवमायया', 'मायया सततं वेत्ति' इत्यादिषु निर्दिष्टनिमित्तासिद्धेरिति चेन्न, आद्ययोर्मायाकार्यतया लक्षणयाऽपि प्रयोगोपपत्तेः । मुख्यत्वेऽपि तत्र न दोषः, मेघोदयादीनामपि विचित्रवर्षादिस्रष्टुरीश्वरस्य तत्तत्सृष्ट्युपकरणत्वाविशेषात । 'देवमायेव निर्मिता' इत्यत्रापि स्त्रीरूपेण परिणता देवानां मायेत्यर्थः ( परिणता माया देवानामाश्चर्यशक्तिरिवेत्यर्थः ) । न चात्र कस्यचिदपि शब्दस्य लक्षणा; अभूतोपमामात्रस्य विवक्षितत्वात । 'संख्याता देवमायया' इत्यत्र तु निघण्टुवा (र्था) नुसारादर्थौ (रादौ) चित्याच्च ज्ञानमेव विवक्षितम् । तथाऽपि घटज्ञानमित्यादिषु घटमायेति प्रयोगादर्शनादाश्चर्यविहरत्वमात्रेण तत्र मायात्वोक्तिः । नैघण्टुकाश्च शक्तिविषयमनादृत्य प्रयोगविषयमात्रं संगृह्णन्तीति बहुलमुपलभ्यते । सम्भवति चास्मदुक्तं मुख्यार्थनिमित्तमत्रापि, इतराशक्याश्चर्येतरभूमिपांसुसंख्यान-सर्वप्राणिशुभाशुभविवेकादिहेतुत्वात् । अस्तु वा ज्ञानपर्यायत्वं क्वचिन्मायाशब्दस्य तथाऽपि तद्व्यतिरिक्तविषयेषु पूर्वोक्तमेव निमित्तम् । न हि गत्यभावात् क्वचिच्छक्तिभेदकल्पने अत्रापि तथा क्लृप्तिः; गौर्वाहीक ( बाह्लीक ) इत्यत्रापि शक्त्यन्तरकल्पिप्रसङ्गात् ।

प्रसाद—जिनमें मिथ्या से सम्बन्ध की गन्ध भी नहीं है; उन सत्य कार्यों को करने वाले, पर्वतास्त्र, वारुणास्त्र तथा आग्नेयास्त्रादि के अर्थ में माया शब्द का लाक्षणिक प्रयोग नहीं सम्भव है। यदि कहें कि मिथ्या अर्थ के सदृश होने के कारण उपर्युक्त अर्थों में माया शब्द का गौण प्रयोग होता है, तो यह नहीं कह सकते है, क्योंकि आपके विपरीत यह भी कहा जा सकता है कि सत्यार्थ के सादृश्य के कारण उपर्युक्त अर्थों में माया शब्द का मुख्य प्रयोग होता है। क्योंकि लक्षणा की अपेक्षा गौणी वृत्ति जघन्य है। मुख्यावृत्ति तथा लक्षणा वृत्ति इन दोनों के द्वारा प्रयोग का निर्वाह सम्भव होने पर मुख्यावृत्ति तथा गौणीवृत्ति के द्वारा प्रयोग का निर्वाह मानना अनुचित है। अतएव विचित्र सृष्टि के उपकरण भूत अर्थ विशेष में ही माया शब्द की शक्ति है। यदि कहें कि ऐसा होने पर भी माया शब्द का कोई ऐसा प्रवृत्तिनिमित्त नहीं बनता है, जो सर्वप्रयोगानुगत हो। मेघोदय तथा सागर सन्निवृत्ति प्रभृति कार्यों को भी विष्णु की माया बतलाया गया हैं। 'देवमायेव निर्मिता' वाक्य में सीता को देव माया कहा गया है। 'संख्याता देवमायया' वाक्य में देवमाया को गणना करने वाली कहा गया है। 'मायया सततं वेत्ति' वाक्य में माया को जानने का साधन कहा गया है। ऐसा कोई भी प्रवृत्तिनिमित्त नहीं है जो इन सभी प्रयोगों में अन्वित हो। तो यह कहना ठीक नहीं है; मेघोदय और सागर सन्निवृत्ति दोनों माया के कार्य हैं, अतएव इन दोनों अर्थों में माया शब्द का लाक्षणिक प्रयोग उपपन्न है। यहाँ माया शब्द का मुख्यार्थ भी मानने में कोई आपत्ति नहीं है, क्योंकि मेघोदय आदि विचित्र सृष्टि करने वाले

ईश्वर की सृष्टि के उपकरणान्तर्गत हैं। 'देवमाया' वाक्य का अर्थ है कि मानों देवताओं की माया स्त्री रूप में परिणत हो गयी है। यह अर्थ करने में किसी भी शब्द में लक्षणा नहीं करनी होती है। इस वाक्य में केवल अभूतोपमा विवक्षित है। 'संख्यातादेवमायया' वाक्य में माया शब्द ज्ञान का वाचक है; कोश आदि में भी माया शब्द को ज्ञान का वाचक बतलाया गया है। फिर भी 'घट ज्ञानम्' इत्यादि के अर्थ में 'घटमाया' यह प्रयोग नहीं देखा जाता। उपर्युक्त प्रयोगों में माया शब्द का प्रयोग आश्चर्य जनकता को सूचित करता है। कोशकार तो शक्ति की सीमा की परवाह न करके प्रयोग विषयता मात्र का संग्रह करते हैं; यह प्रायः देखा जाता है। किञ्च यहाँ पर भी हमारे द्वारा प्रोक्त मुख्य प्रवृत्तनिमित्त सम्भव है, क्योंकि दूसरे ज्ञान से असम्भव अत्यन्त आश्चर्य जनक, धूलिकण की गणना; सभी प्राणियों के शुभाशुभ विवेक आदि का कारण माया है। कहीं पर माया शब्द का ज्ञान का पर्याय भी माना जा सकता है। फिर भी उससे भिन्न विषयों में पूर्वोक्त ही प्रवृत्तनिमित्त है। यदि कहें कि गति के अभाव में कहीं-कहीं पर शक्त्यन्तर की कल्पना की जाती है। उसी तरह यहाँ भी माया शब्द के शक्त्यन्तर की कल्पना करनी चाहिए; तो यह कहना इसलिए ठीक नहीं है कि—'गौर्वाहिकः' में शक्त्यन्तर की कल्पना का प्रसङ्ग होगा।

नहीति। समुद्रशब्दो महाजलपरः। लक्षणापेक्षयेति। 'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणते' ति वार्तिकेन मुख्यलाक्षणिकाभ्यां उभाभ्यां व्यवधानोक्तेः। लक्षणायां मुख्यव्यवधानमात्रमेव मुख्यगौणवृत्तिभ्यामिति उपलक्षणम्। ऐन्द्रजालिकमन्त्रादौ मिथ्यार्थसम्बन्धात्लक्षणासम्भवात्। स्त्रीरूपेणेति। निर्मिता देवानां विचित्रसर्गशक्तिरिव तिष्ठतीत्यर्थः। मात्रणेति। गुणवृत्तिरेव न मुख्यवृत्तिः, अतो नानेकार्थत्वमिति भावः।

ननु भवद्भिरपि गौणवृत्त्या निर्वाहस्यस्वीकारात् कथं गौणवृत्त्या निर्वाहः परस्य दोषतयोद्घाटित इति चेन्न,-गत्यन्तराभावेनात्र गौणी वृत्तिरुभाभ्यामङ्गीकार्या, तथा च यत्र मुख्यलक्षणाभ्यामेव निर्वाहस्सुकारः, तत्रापि त्वया गौणवृत्तिरङ्गीकार्या, इति वैषम्यस्याभिप्रेतत्वात्।

एतेनेदं निरस्तम्। मिथ्यापरिणाम्यज्ञानं मायाशब्दार्थः, ऐन्द्रजालिकेण जतुरागादौ मायाशब्दप्रयोगो मृद्घट इति वत्तादात्म्यात् ऐन्द्रजालिकमणिमन्त्रादौ मायाशब्दप्रयोगो मायाक्षोभकत्वाल्लक्षणया, अस्त्रादौ अघटित कार्यजनकत्वगुणयोगात्, एकत्रैवाज्ञाने साधारणभ्रमानुकूलशक्तिनिमित्तकोमायाशब्दप्रयोगः, तेन ऐन्द्रजालिके मायाविशब्दः असाधारणभ्रमानुकूलशक्तिनिमित्तः, तत्रैवाज्ञानशब्दः, तेन शुक्तिरजतादौ न मायाशब्दप्रयोग इति। इन्द्रजिदस्त्रादौ गौणवृत्त्यङ्गीकारात् तत्कार्ये सत्यपर्वतपावकादौ कथञ्चिदपि प्रयोगासम्भवात्, शुक्तिरजते मायाशब्दप्रयोगप्रसङ्गाच्च॥

ननु साधारणभ्रमानुकूलशक्तिनिमित्तकत्वात् मायाशब्दस्य न तत्र मायाशब्दप्रयोग इति चेन्न, एवमपि कारणतादात्म्यप्रयुक्तप्रयोगस्यानिवार्यत्वात्। न च साधारणभ्रमजनकत्वशक्तियोगोऽज्ञानशब्दप्रवृत्तिनिमित्तम्; ज्ञाननिवर्त्यत्वस्य तन्निमित्तत्वोक्तिविरोधात्। न च साधारणभ्रमानुकूलशक्तियोगो मायाशब्दप्रवृत्तिनिमित्त, मन्त्रादिसाधारणतया तत्र गौणवृत्त्युक्तिविरोधात्। न

च भ्रमपरिणामित्वं विवक्षितमिति वाच्यम् , अस्मादौ त्वयोक्तघटितकार्यजनकत्वस्यैव लाघवेन मायाशब्दप्रवृत्तिनिमित्तत्वसम्भवात् । इदमेव च प्रागुक्तम् विचित्रकार्यजनकत्वं मन्त्रौषधाद्यतिरिक्तस्य त्वदभिमतस्य परिणामिनोऽज्ञानात् न तत्र लोके मायाशब्दप्रयोगसम्भवः । एतेन मायाक्षोभकत्वं मन्त्रादौ प्रयोगनिमित्तमित्यपि निरस्तम् । 'यज्ञो हि तस्य मायासी' दिति सप्रतिसम्बन्धित्वप्रतीतेश्च । विचित्रसष्ट्युपकरणमर्थः । बहुलमिति । ' अध्वर्यूद्गातृहोतारो यजुस्सामर्ग्विदः क्रमात् । 'इत्यमरकोशे तत्तद्वेदोक्तकार्यकारिषु चतुर्षु चतुर्षु अध्वर्य्वादयः शब्दा अभिधानतयोक्ताः पूर्वतन्त्रे 'उदगातृणां चमसमक्ष' इत्यत्र उद्गातृशब्द एकत्रैव मुख्यः, उद्गातृ प्रस्तोतृप्रतिहर्तृ सुब्रह्मण्येषु प्रवचनान्वयाद्रूढिपूर्वकलक्षणेत्युक्तम् । एवमध्वर्य्वादिष्वपि । तथा 'दर्शश्च पूर्णमासश्च यागौ पक्षान्तयोः पृथ' गिति दर्शपूर्णमासशब्दौ कर्माभिधानतयोक्तौ पूर्वतन्त्रे दर्शपूर्णमासशब्दाभ्यां कलयुक्तकर्मलक्षणेत्युक्तम् , तथा पृषदाज्यशब्दः नामपाठे उक्तः , पूर्वतन्त्रे पृषच्छब्दश्चित्रतावाची , दध्ना चित्रितत्वात् सदध्याज्यम् योगवृत्त्या पृषदाज्यमित्युच्यत इत्युक्तम् । एवम् कल्पकासिद्धिरुक्ता ॥

किञ्च मिथ्यारूपमायोपादानत्वेऽपि तदुत्पन्नमात्रस्य प्रपञ्चस्य मिथ्यात्वं न सिध्यति ; नविलक्षणाधिकरणन्यायेन विलक्षणादपि विलक्षणकार्योत्पत्तिसम्भवात् । असत्यात्सत्योत्पत्तेर्युष्माभिरेव स्वीकारात् ॥ असत्यस्य सत्यनिमित्तत्वमात्रमुदाहृते ; न तु सत्योपादानत्वमिति चेन्न; तुल्यन्यायत्वात् । न ह्यस्ति राजशासनं मिथ्याभूतेन ; निमित्तेनैव भाव्यत ; न तूपादानेनेति ॥ उपादानोपादेययोरतादात्म्यादुपादानस्य मिथ्यात्वे कार्यस्य सत्यत्वे च सत्य [त्व] मिथ्यात्वयोरेकतरप्रसक्तिरिति चेन्न , उपादानत्वोपादेयत्वदिवत् सत्यत्वमिथ्यात्वयोः क्रमेणाविरोधात् ॥ नन्वेकस्य पूर्वापरीभूतावस्थाभेदवस्थाभेदवत्त्वमुपपन्नम् , एतावता कथं स्वरूपतो मिथ्याभूतमुत्तरस्मिन् काले सत्यं भवेदिति चेन्न— पूर्वस्मिन् काले स्वरूपेणासत एव , द्रव्यस्यावस्थाविशेषवत् उत्तरकाले सत्त्वस्याविरोधात् ( वस्थाविशेषस्येवोत्तरकाले सत्त्ववदविरोधात् ) ॥ तयोरुत्तरकालवर्तित्वेन सत्त्वं पूर्वकालेऽप्यस्तीति चेन्न, तस्य तत्कालेऽपि प्रामाणिकत्वमात्रस्यात्रापि समानत्वात् । तत्कालसंसर्गविवक्षायां विरोधात् । अतः उपादानमिथ्यात्वे श्रुतिसिद्धेऽपि न कार्यमिथ्यात्वसिद्धिः । उपादानसत्यत्वमेव च सद्विद्यादिष्वसत्कार्यवादनिरासपूर्वकं , 'मृत्तिकेत्येव सत्यम्' इति , 'सन्मूलास्सोम्येमा' इत्यादिभिरभिधीयते । एवमुपादानमिथ्यात्वेऽपि कार्यसत्यत्वाविरोधोपपादनन्यायेन कार्यमिथ्यात्वेऽप्युपादानसत्यत्वाविरोधोऽप्युपपादित एवेति मिथ्याभूतस्य

मिथ्याभूतमेवोपादानम् भवितु मर्हतीत्यनिर्वचनीयाज्ञानकल्पनमपि निरस्तमिति ॥

॥ इति शतदूषण्यां मायोपादानत्वान्यथानुपपत्तिभङ्गवादः चतुःपञ्चाशः ॥५४॥



प्रसाद—मिथ्या मायोपादानक होने पर भी मायोत्पन्न होने मात्र से प्रपञ्च के मिथ्यात्व की सिद्धि नहीं हो सकती है । 'न विलक्षणाधिकरण में प्रोक्त न्याय के अनुसार विसदृश कारण से विसदृश कार्य की उत्पत्ति होती हैं । आप लोग भी असत्य से सत्य की उत्पत्ति मानते हैं । यदि कहें कि हमारे मत में असत्य को सत्य का निमित्तमात्र माना जाता है; उपादान नहीं । तो यह भी नहीं कह सकते ; यदि असत्य निमित्तकरण हो सकता है तो वह उपादान कारण भी हो सकता । यह कोई राजाज्ञा तो है नहीं कि मिथ्यावस्तु निमित्त कारण ही होती है; उपादान नहीं । यदि कहें कि उपादान और उपादेय में अभेद होने के कारण उपादान के मिथ्या तथा कार्य की सत्यता होने पर, सत्य एवम् मिथ्या की एकता का प्रसङ्ग होगा । तो ऐसा नहीं कह सकते हैं, क्योंकि जिस तरह उपादानत्व एवम् उपादेयत्व क्रमशः होते हैं उस तरह सत्यत्व एवम् मिथ्यात्व का क्रमशः अविरोध होगा । यदि कहें कि एक ही वस्तु मे पहले उपादानत्व पीछे उपादेयत्व सम्भव है, किन्तु एक ही स्वरूपतः मिथ्या वस्तु पीछे सत्य कैसे हो जायेगी ? तो यह भी नहीं कह सकते हैं, क्योंकि जैसे पूर्वकाल मे स्वरूपतः असत् द्रव्य की उत्तर काल में सत् रूप अवस्था होने में कोई विरोध नहीं होता उसी तरह यहाँ भी विरोध नहीं हो सकता है । यदि कहें कि पूर्वकाल में भी मृत्पिण्डादि में पिण्डत्व एवम् घटत्व रहते हैं, क्योंकि उत्तरकाल मे वे उसमें पाये जाते हैं तो ऐसा नहीं कह सकते हैं। क्योंकि उसी तरह यहाँ भी मिथ्योपादानकत्व का तत्कालिक प्रमाण सम्भव है । पूर्वकाल में सम्बन्ध की विवक्षा मानने पर विरोध होगा । अतएव उपादान का मिथ्यात्व श्रुति सिद्ध होने पर भी कार्य के मिथ्यात्व की सिद्धि नहीं हो सकती है । सद्विद्या प्रकरण का 'मृतिकेत्येव सत्यम्' तथा 'सन्मूलाः सोम्येमाः' इत्यादि श्रुतियों में असत्कार्य वाद के निरास पूर्वक उपादान की सत्यता ही बतलायी गयी है । इस तरह उपादान के मिथ्या होने पर भी कार्य के सत्यत्वोपपादन की तरह ही कार्यके मिथ्या होने पर भी उपादान की सत्यता सिद्ध होती है । इस तरह मिथ्या वस्तु का उपादान मिथ्या वस्तु ही हो सकती है, अतएव अनिर्वचनीय अज्ञान की कल्पना करनी पड़ती है, यह भी अद्वैती विद्वानों का कथन खण्डित हो गया ।

इस तरह शतदूषणी के मायोपादानत्वान्यथानुपपत्तिभङ्ग नामक चौवनवें वाद का प्रसाद समाप्त हुआ ॥



इदानीं कल्पकत्वासिद्धिमाह किंचेति । उपादानत्वेति । उपादानत्वोपादेयत्वप्रयोजक धर्मवदित्यर्थः । उपादानत्वप्रयोजको धर्मः पिण्डावस्था उपादेयत्वप्रयोजको धर्मो घटावस्था । पूर्वस्मिन्काल इति । अत्र सत्त्वशब्देन मिथ्यार्थनिष्ठतया परैरुक्तं विद्यमानत्वं विवक्षितम् । कार्यस्य

पूर्वं सत्वे कार्यत्वानुपपत्तेः असत्त्वे च सत्वासत्वयोर्व्याघातेनानन्तरं सत्वानुपपत्तेश्च कार्यं मिथ्यात्वे च व्याघाताभावात् पूर्वमसतोपि अनन्तरं विद्यमानत्वम् युज्यत इति हि परैरुच्यते । एवम् च सत्त्वमिथ्यात्वयोरिव सत्त्वमिथ्यात्वयोरपि व्याघातः, अन्यथाऽसत्त्वमिथ्यात्वयोरपि व्याघातप्रसङ्गात् , किञ्च कार्यकारणयोर्भेदः परैरङ्गीकृत एव , ततश्च भेदाभेदसत्यत्वमिथ्यात्वाभ्याम् मिथ्यार्थस्य सत्योपादानत्वमुपपद्यत एवेति भावः । तत्कालेपि प्रामाणिकत्वेति । तद्गोचरप्रमाणस्य तत्कालीनत्वं विवक्षितम् । यद्येवं मिथ्यार्थस्य सत्योपादानत्वसम्भवः , तर्हि 'असद्वा इदमग्र आसीत्ततो वैसदजाय' तेति श्रुत्यनुसारात् । मिथ्यार्थस्य सत्योपादानत्वम् भवद्भिः कुतो नेष्यत इत्यत्राह उपादानेति । दृष्टान्तेन उपादानोपादेययोरैक्यप्रतिपादनात् उपादानस्य सत्यत्वकण्ठोक्तेश्च सत्यस्यैवोपादानत्वम् । असदुवेत्यत्र स्थूलावस्था भावो विवक्षित इति भावः । प्रसङ्गा—दाह एव मिति ।

इति श्रीमहाचार्यपरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां मायोपादानत्वान्यथानुपपत्तिर्नाम चतुःपञ्चाशः स्कन्धः ॥५४॥



## ❀ अथ कार्यान्यथानुपपत्ति ( कार्यान्वयानुपपत्ति ? ) भङ्गवादः पञ्चपञ्चाशः ॥ ५५ ॥ ❀

बालः क्रीडनकैरिव स्थिरचरैः स्वेनैव निर्वर्तितैः
सङ्कल्पैकवशम्वदो विहरति ब्रह्मादिभिर्जन्तुभिः ।
जिज्ञास्याय मुमुक्षतामिह पुनः प्राप्याय मुक्तात्मनां
लक्ष्मीकौस्तुभलक्ष्मणे नम इदं तस्मै परब्रह्मणे ।

प्रसाद—श्री भगवान् ही सम्पूर्ण जगत् के अभिन्ननिमित्तोपादान कारण है। वे सृष्टि के प्रारम्भ में 'एकोऽहम् बहुस्याम्' इस श्रुति के अनुसार एक से अनेक होने का सत्य सङ्कल्प करते हैं। और अपने सत्य सङ्कल्प के द्वारा आब्रह्म स्तम्ब पर्यन्त सम्पूर्ण जगत् की सृष्टि कर वे उस जगत के साथ उसी तरह लीला रस का अनुभव करते हैं, जैसे कोई बालक किसी खिलौने के साथ खेलता है। वे ही श्रीभगवान् मुमुक्षु जीवों के लिए जिज्ञास्य हैं तथा मुक्त जीवों के परमप्राप्य हैं उन श्रीलक्ष्मी जी तथा कौस्तुभ मणि से विभूषित श्रीभगवान् को हम नमस्कार करते हैं।

बालः क्रीडनकैरिति । स्वेनैवेति । कार्यानुपपत्तिपरिहारस्य विवक्षितत्वात् , निर्वर्तितैरिति । विवर्तव्यावृत्तेः , सङ्कल्पैकवशंवदि इति पराभिमताविद्यावशत्वाभावप्रतीतेः , मुमुक्षताम् प्राप्यायेति सत्ययोरेव मोक्षब्रह्मप्राप्त्योस्साध्यत्वप्रतीतेश्च वादार्थः संगृहीतः ।

ननु बन्धविश्लेषफलकर्तृव्यापारो यदा धातुना विवद्यते तदा मुञ्चेति वत्समिति भवति , बन्धविश्लेषलक्षणकर्मव्यापारो यदा धातुना विवद्यते तदा कर्तुरपि वत्सस्य कर्मवद्भाववविधानात् मुच्यते वत्सः स्वयमेवेत्यात्मनेपदमेव भवति, एवञ्च 'पशवः पाशिताः पूर्व परमेण स्वलीलया । तेनैव मोचनीयास्ते' इति ईश्वरस्यैव मोचकत्वात् बन्धविश्लेषलक्षणकर्मव्यापारविवक्षयैव जीवे मुमुक्षतेः प्रयोगो वाच्यः , तत्र च कर्मवद्भावादात्मनेपदभाव स्यात् अतः कथं शत्रन्त प्रयोग इति चेत् ? अन्तर्भावितण्यर्थतया कर्तृव्यापारप्रयोजकव्यापारवर्तिनो मुचेरिह सन्नन्तस्य प्रयोगात् , स च व्यापार उपासनम् , ततश्च मोक्षसाधनमुपासनं चिकीर्षतां श्रौतत्वायेत्यर्थः । मोचकव्यापारप्रयोजकव्यापारविवक्षायाश्च ज्ञाननिवर्त्यत्वाभावात् मिथ्यात्वाभावे तात्पर्यम् ।

यदाहुः–प्रत्यक्षसिद्धम् श्रुत्यादिसिद्धं च सर्वं कार्यं मिथ्यैव , विकल्पासहत्वात् तथाहि—किं कारणेन कार्यं सम्बद्धमारभ्यते ; उतासम्बद्धम् ? आद्ये सम्बन्धाश्रयतया द्वयोरपि सत्त्वाविशेषात् सव्येतरविषाणयोरिव किं कस्य कारणं कार्यं वा ? असंबद्धत्वे तु असम्बन्धाविशेषात् सर्वं सर्वस्य कारणं भवेत् ; न वा किञ्चित् कस्यचित् । तथाऽभिव्यक्तिवादिभिरुक्तम् , 'असत्त्वान्नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः । असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥' इति ।

( २ ) तथा कार्यं कारणाद्भिन्नम् ; अभिन्नम् वा ? पूर्वत्र भिन्नत्वाविशेषात् सर्वं सर्वतः स्यात् , न वा कुतश्चित् । उत्तरत्राऽऽत्माश्रयप्रसङ्गः ( ज्ञात ) । नियतपूर्वसत्कारणम् नियतोत्तरसत्कार्यमिति विभजसे । तथा च स्वप्रागभावकाले स्वयमेवास्तीति कथं ब्रवाः ?

प्रसाद—अद्वैती विद्वानों ने यह जो कहा है कि प्रत्यक्ष प्रमाण तथा श्रुति आदि से सम्पूर्ण प्रपञ्च मिथ्या ही है, क्योंकि विकल्प करने पर प्रपञ्च की सत्यता की सिद्धि नही हो सकती है । तथाहि प्रश्न है कि क्या कार्य कारण से सबद्ध कार्य उत्पन्न होता है, या असम्बद्ध ही ? यदि कारण से सम्बद्ध कार्य की उत्पत्ति मानें तो दोनों के सम्बन्धाश्रय होने से जिस तरह दायें और बायें सिंग की तरह कौन किसका कारण है कौन किसका कार्य ? इस बात का निर्णय नहीं हो पायेगा । यदि असम्बद्ध कार्य की उत्पत्ति मानें तो फिर किसी भी कार्य का कारण कोई भी असम्बद्ध वस्तु हो हो सकती है । अथवा कोई भी किसी का कारण अथवा कार्य नहीं हो सकेगा । अभिव्यक्तिवादियों ने भी वैसा ही कहा है– असत्वात ; इत्यादि—कार्य का सर्ववस्तुओं से सम्बन्ध रखने वाले कारणों से सम्बन्ध सत्वाभाव के कारण नहीं होता है । कारण से असम्बद्ध कार्य की उत्पत्ति मानने पर तो कारण एवम् कार्य की व्यवस्था ही

नहीं हो सकती है। दूसरा प्रश्न हैं कि कार्य कारण से भिन्न है या अभिन्न ? यदि भिन्न मानें तो भिन्न होने के कारण सभी वस्तुएँ सबसे उत्पन्न होंगीं अथवा किसी भी कारण से कोई भी कार्य भिन्न होने के कारण नहीं उत्पन्न होगा। यदि अभिन्न मानें, तो फिर अन्योन्याश्रय दोष का प्रसङ्ग होगा, क्योंकि कार्य से कारण की अभिन्नता सिद्ध हो जाने पर कारण से कार्य की उत्पत्ति होगी, और कारण से कार्य की उत्पत्ति हो जाने पर कारण से कार्य की अभिन्तता सिद्ध होगी। किञ्च कार्य और कारण में आप यही भेद मानते हैं कि नियत पूर्व सत्कारण ही नियतोत्तर कालवर्ती सत्कार्य होता है। ऐसी स्थिति में यह कैसे कहा जा सकता है कि कार्य अपने प्रागभाव काल में भी रहता है।

किञ्चि दिति। 'कारणम् भवेदि' त्यनुषङ्गः। सर्वतस्या दिति। सर्वम् सर्वस्य कारणम् स्यादित्यर्थः। नवा कुतश्चिदिति। 'किञ्चित्स्यादिति शेषः। दोषतामाह नियतेति।

(३) तथा विकृतादविकृताद्वा उपादानात् कार्योत्पत्तिः ? पूर्वत्र (ऽपि) विकृतिरपि विकृतात् अविकृताद्वेति विकल्पेना (ल्पेऽ) नवस्था। उत्तरत्राविकृतत्वाविशेषात् यावदुपादानसत्त्वमुपादेयारम्भप्रसङ्गः॥ सहकारिसंबन्धादिति चेन्न ; तत्सम्बन्धोत्पत्तिरपि विकृतस्य वा अविकृतस्य वेति विकल्पदुःस्थत्वात् / अस्तु च (वा) विकृतं कार्यारम्भकम्, तत्र किं रुचकादिविकृतिविशिष्टं हेमादि स्वस्तिकारम्भकम्, उत रुचकादिमात्रम् ? अथ हेमादिमात्रमिति। नाऽऽद्यः, स्वस्तिके रुचकादिविकृतिविशिष्टहेमानुपलम्भात्। अत एव न द्वितीयः। हेमानुवृत्तिदर्शनविरोधाच्च। न च तृतीयः, आरम्भकहेमातिरिक्त दर्शनात्, [तत्] प्रत्यभिज्ञानाच्च। वदन्ति हि स्वस्तिकमपि, तदेवेदं हेमेति। न च व्यवस्थितबुद्धि शब्द-संख्या-परिमाणकार्य-कारण-कालादिभेदात्, पिण्डघटयोर्नष्टत्वानष्टत्वभेदात् कारक व्यापारवैयर्थ्यप्रसङ्गात्, नित्यानित्यविभागानुपपत्तिप्रसङ्गाच्च कारणातिरिक्तकार्यसिद्धिरिति वाच्यम्, रज्ज्वाद्यधिष्ठानसर्पभूदलनाम्बुधारादिबुद्धिशब्दान्तरादिभिरनैकान्तिकत्वात्। न चाबाधितत्वे सतीति विशेष्टव्यम्, विशेषणासिद्धेः। प्रत्युत तन्निषेधात्-विगीता बुद्धि-शब्दा (न्तरा) दयो भ्रान्तिसिद्धभेदावलम्बनाः ; दुर्निरूपबुद्धिशब्दान्तरादित्वात्, कम्बुकलधौतबुद्धिशब्दान्तरादिवत्, मध्येऽप्यसत कार्यम्, आद्यन्तयोरसत्त्वात्, शुक्ति [का] रजतवत्, विवादगोचरो भेदव्यवहारः स्वविषयसर्वभेदानुगतैकवस्तुमात्रावलम्बनः, भेदव्यवहारत्वात्, रज्ज्वादिविषयसर्पभूदलनादिभेदव्यवहारवदित्यादिभिः। न चैषां प्रत्यक्षबाधः तर्कानुगृहीतानुमानात् तस्य च दुर्बलत्वात्। अन्यथा ज्वालैक्यप्रत्यक्षविजयप्रसङ्गात्।

प्रसाद—कार्य की उत्पत्ति विकृत उपादान से होती है अथवा अविकृत ? यदि विकृत उपादान से मानें तो प्रश्न है कि विकृति भी विकृत से उत्पन्न होती है अथवा अविकृत से ? इस तरह की

अनन्तापेक्षकत्व रूप अनवस्था होगी। यदि अविकृत उपादान से कार्य की उत्पत्ति मानें तो फिर अविकृत उपादान की सत्ताकालके पर्यन्त सर्वदा कार्योत्पत्ति का प्रसङ्ग होगा। यदि कहें कि कारण से जब सहकारी का सम्बन्ध होता हैं; तब कार्य की उत्पत्ति होती है, तो यह भी नहीं कह सकते हैं; क्योंकि यहाँ भी प्रश्न है; कि सहकारी के सम्बन्ध की उत्पत्ति विकृत उपादान से होती है या अविकृत उपादान से? इस विकल्प के कारण यह भी मान्यता अव्यवस्थित होगी। विकृत उपादान को ही कार्य का उत्पादक मानें तो, प्रश्न है कि क्या रुचक आदि विकारों से विशिष्ट हेमादि स्वस्तिकादि कार्यो का उत्पादक है? अथवा रुचकादि मात्र ही उनके उत्पादक हैं? या हेमादि मात्र? प्रथम विकल्प नहीं माना जा सकता है क्योंकि स्वस्तिक में रुचकादि विकार विशिष्ट हेमादि की उपलब्धि नहीं होती है। दूसरा विकल्प इसलिए नहीं माना जा सकता है कि स्वस्तिकादि में हेमादि की उपलब्धि होती है। तीसरा विकल्प इसलिए नहीं माना जा सकता है कि कार्यभूत स्वस्तिक में कारणभूत हेम से अतिरिक्त वस्तु की उपलब्धि नहीं होती। और उसमें हेम का प्रत्यभिज्ञान भी होता है। लोक में लोग स्वस्तिक को देखकर कहते भी हैं, यह वही सोना है। यहाँ पर यह नहीं कहा जा सकता है कि निम्न कारणों से कारण और कार्य में भेद होता है—(१) कारण और कार्य की ग्राहिका बुद्धि भिन्न-भिन्न होती है। (२) दोनों के वाचक शब्द भिन्न-भिन्न हैं। (३) दोनों की संख्या भिन्न होती है। एक मृत्पिण्ड के अनेक घटादि कार्य होते हैं। (४) कारण और कार्य के परिमाण में अन्तर होता है। (५) दोनों के कार्य भी भिन्न-भिन्न होते हैं। (६) दोनों के कारण भी भिन्न-भिन्न होते हैं। (७) नियत पूर्ववर्तित्व एवम् नियतोत्तर कालवर्तित्व के भेद से दोनों के काल भी भिन्न-भिन्न होते हैं। देखा जाता है कि घट काल में पिण्ड नष्ट हो जाता है और पिण्ड काल में कार्य घट नहीं रहता है। यदि कारण और कार्य मे भेद न माना जाय तो कारक व्यापार ही व्यर्थ हो जायेंगे। किञ्च कारण आत्मा नित्य और कार्य घटादि अनित्य हैं। अतएव कारण और कार्य में भेद स्वीकारना चाहिए। तो यह भी नहीं कहा जा सकता है, क्योंकि शब्द; बुद्धि, संख्या आदि की भिन्नता के कारण और कार्य में भेद मानने पर रज्ज्वादि का सर्प, भूदलन तथा जलधारा आदि को कार्य मानना होगा। यदि कहें कि कार्य होने के लिए शब्द; बुद्धि, संख्या; परिमाण तथा कालादि का भेद रहने पर भी वस्तु का अबाधितत्व होना आवश्यक हैं। रज्जू में प्रतीयमान सर्पादि अबाधित नहीं बाधित है, अतएव वे रज्जू के कार्य नही हैं। किञ्च अबाधितत्व विशेषण भी सन्दिग्धासिद्ध है, किञ्च अबाधितत्व विशेषण का निषेध निम्न अनुमानों से होता है। तथाहि-(१) विवादास्पद बुद्धि शब्दान्तर आदि के आश्रय भ्रान्तिसिद्ध भेद ही हैं, क्योंकि बुद्धि शब्दान्तर आदि का निरुपण असम्भव है, सीपी में प्रतीयमान रजत विषयक बुद्धि, शब्दान्तरादि के समान। (२) कार्य बीच के भी काल में (प्रतीत काल में) भी असत् होता है, क्योंकि वह अपने प्रागभाव काल तथा प्रध्वंसाभाव काल में असत् होता है, सीपी में प्रतीयमान रजत के समान। (३) विवादास्पद भेद व्यवहार का आधार अपने विषयभूत सभी भेदों में रहने वाली एक वस्तु है, क्योंकि वह भेद व्यवहार हैं, रज्ज्वादि में प्रतीयमान सर्प, भूदलन तथा जलधारा आदि के समान। इन अनुमानों का प्रत्यक्ष से बाध भी नहीं स्वीकारा जा सकता है, क्योंकि तर्कानुगृहीत अनुमान की अपेक्षा प्रत्यक्ष दुर्बल होता है। अन्यथा ज्वालैक्य प्रत्यक्ष ही ज्वालाभेदानुमान के बाधक होने का प्रसङ्ग होगा।

सहकारिसम्बन्धादिति। अविकृतात्कार्योत्पत्तिरिति शेषः। नन्वस्त्यतिरिक्तस्वस्तिको-पलम्भ इत्यत्राह तदिति। तदुपपादयति वदन्तीति। बुद्धीति। एकत्र तन्तव इति बुद्धिः परत्र

तन्तव इति बुद्धिः परत्र पट इति बुद्धिरिति बुद्धिभेदः, तथैव शब्दभेदः, तन्तुषु बहुत्वं पट एकत्वमिति संख्याभेदः, सूक्ष्मत्वं महत्त्वमिति परिमाणभेदः, तन्तुषु कारणत्वं पटे कार्यत्वमिति भेदः तन्तूनाम्पूर्वं काले सत्त्वं पटस्योत्तरकाल एवेति कालभेदः। नित्येति। आत्मा नित्यः पटादिकमनित्यमिति विभागो नित्यप्रकृत्यभिन्नत्वेन स्यादित्यर्थः। रज्ज्वादीति। तन्तुपटगोचरबुद्धिशब्दान्तरादयस्तत्त्वतोभिन्नविषयाः, बुद्धिशब्दान्तरत्वात, परसंख्यापरिमाणे तत्त्वतो भिन्नाश्रिते, संख्या परिमाणान्तरत्वादित्याद्यनुमानं विवक्षितम्। तत्र रज्ज्वाद्यधिष्ठानसर्पादिबुद्धिशब्दान्तरादिभिरनैकान्त्यमित्यर्थः। असिद्धेरिति। संदिग्धासिद्धेरित्यर्थः। तन्निषेधादिति। अबाधितत्वनिषेधादित्यर्थः एतस्य इत्यादिभिरित्यनेनान्वयः। किं बुद्धेर्बाधो भ्रमत्वज्ञान उत विषयापहार इति विकल्पमभिप्रेत्याद्ये ऽबाधितत्वाभावमाह विगीतेति। भिद्यत इति भेदो घटाद्यर्थः द्वितीय आह मध्येऽपीति, तर्केति। सम्बन्धासम्बन्धविकल्पानुपपत्त्यादिस्तर्कः। व्यक्तिसदसद्भावयोरिति। पूर्वमेवाभिव्यक्तेः सत्त्वे कारकव्यापारवैयर्थ्यादि, असत्त्वे सर्वकालासत्त्वोत्पत्त्यसम्भवादि।

नन्वभिव्यक्तिः प्रागेव सती; सैव कारकव्यापारेणाव्यज्यत इत्यत्राह व्यक्तेरिति। नित्येति। तथा च कारकव्यापारवैयर्थ्यमिति भावः। एवम् जन्मनीति। घटः किमिदानीं सन् उतासन्? आद्ये सतः पश्चादसत्त्वानुपपत्तेः विनाशानुपपत्तिः, द्वितीये विनाशकव्यापारवैयर्थ्यम प्रागेवासत्वादित्यर्थः। एव मसम्भावितोत्पत्तिविनाशत्वात उत्पत्तिविनाशवत्वेन भासमानं कार्यम मिथ्येत्युक्तम्। अतः सदसद्व्यावृत्तविनाशोपलब्धियोगान्यथानुपपत्त्या च मिथ्यात्वमध्यवसीयते इत्याह सदसदिति। विनाश उत्पत्तेरप्युपलक्षणार्थः। कार्यानुपपत्तिलक्षणो मिथ्यात्वं तर्कः श्रुतिस्मृतिभ्यामप्यनुज्ञात इत्याह स्मरन्तिचेत्यादि।

ननु 'प्राणावसत्य' मिति श्रुत्या प्राणसत्यत्वं प्रतिपाद्यते; न च तद्व्यतिरेकेण कार्यमिथ्यात्वे तात्पर्यमिति निर्वाहः शक्यः, कार्यस्य तत्रानुक्तेः, इतरतद्विरोध इत्यत आह एतेनेति वक्ष्यमाणेनेत्यर्थः। तत्रापिहीति। यथा राजराजो मन्मथमन्मथः पवित्राणां पवित्रमित्यादौ ऐश्वर्यसौन्दर्यपावनत्वानामुत्कर्षापकर्षौ गम्येते; तथात्र सत्यत्वोत्कर्षापकर्षौ गम्येते, तत्रापकृष्टम प्राणगतं सत्यत्वं व्यावहारिकसत्यत्वं उत्कृष्टम ब्रह्मगतं पारमार्थिक सत्यत्वमित्यर्थः। नश्वरत्वादिति। तावदेव च बाधितत्वमित्यमिति भावः।

( ४ ) किञ्च यदि कारणे पूर्वं कार्यमसत; कथं तेन जनयितुं शक्यम्? न हि प्रलयोदकावसिक्तेष्वपि प्रस्तरेषु अङ्कुराः प्ररोहन्ति। न च पीते विश्वकर्मणाऽपि नीलमुत्कीर्यते ( कीर्येत)। अत पूर्वमेव तत्र सत, सिद्धत्वादेव न साध्यं स्यात। तत एव कारकव्यापारनैरर्थ्यं [नैरर्थक्यम्] च॥ व्यङ्ग्यत्वमस्त्विति चेन्न, व्यक्तिसदसद्भावयोरप्यनुयोगावतारात्। व्यक्तेरपि व्यङ्ग्यत्वेऽनवस्थानात्, नित्यव्यक्तत्वे घटादेरपि नित्यव्यक्तिप्रसङ्गात्।

[५] किञ्च भावात् अभावाद्वा घटाद्युत्पत्तिः ? नाऽऽद्यः, अनुपमृदितात्पिण्डा देर्घटाद्युत्पत्त्य [त्तेर] दर्शनात् । न द्वितीयः, घटादेरप्यभावात्मकत्वप्रसंगात् । एवमन्येऽपि परश्शता विकल्पाः सुलभाः ।

एवं जन्मनि निरस्ते विनाशोऽपि निरस्त एव, तुल्यन्यायत्वात् । [७] सदसद्व्यावृत्तिविनाशोपलब्धि (लब्ध्य) योगाच्च तदुभयकोटिविलक्षणतया मिथ्यात्वं स्वध्यावसानम् । [७] स्मरन्ति च, 'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितम् ॥' इति । 'यच्चान्यथात्वं द्विज याति भूयो न तत् तथा तत्र कुतो हि तत्त्वम् ॥' इति च । श्रुतिश्च तदुपबृंहिता, 'वाचारम्भणं विकारो नामधेयम्' इत्यादिका । न च, 'मृत्तिकेत्येव सत्यम्' इत्यादिना ब्रह्मव्यतिरिक्तस्य कार्यभूतस्यापि मृत्तिकादिद्रव्यस्य सत्यत्वमिह कण्ठोक्तमिति भ्रमितव्यम् , भिक्षुपादप्रसा ( स ) रणन्यायेन व्यावहारिकसत्यत्वा ता) नुपमर्देन घटादिमिथ्यात्वप्रतिपादने तात्पर्यात ; अन्यथा दार्ष्टान्तिकप्रतिकूलत्वप्रसङ्गात । मृत्तिकातिरेकितद्विकारमिथ्यात्ववत मूलकारणातिरेकिमृत्तिकादिसमस्तस (त) द्विकारमिथ्यात्वे हि वाक्यतात्पर्यम् । 'एतेन, 'प्राणा वै सत्यम्' इति श्रुत्यन्तरमपि निर्व्यूढम् । तत्रापि हि, 'अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्' इति पूर्वोत्तरवाक्यांशपरामर्शेन मध्यगतप्राणविषयसत्यतोक्तिः व्या [सांव्य]-वहारिकीं सत्यताभभिसन्धायेति गम्यते ।

तदेवं श्रुतिस्मृत्यनुमानतर्कैः सिद्धं कार्यमिथ्यात्वम् । [८] नश्वरत्वाच्च जगतो मिथ्यात्वं निपुणाधियां स्वध्यवसानमिति ॥

प्रसाद—किञ्च यदि कारण में पहले कार्य अविद्यमान रहता है तो फिर उस कारण से उस कार्य की उत्पत्ति कैसे हो सकेगी ? प्रलयकालीन जल से सींचित ( अर्थात् अत्यन्त शुष्क ) पत्थर पर अंकुर नहीं उत्पन्न हो सकते हैं । पीले द्रव्य से विश्वकर्मा भी नील वस्तु नहीं बना सकते हैं । यदि कहें कि यदि कारण में पहले कार्य था तो सिद्ध होने के कारण वह साध्य (कार्य) नहीं हो सकता है । और सिद्ध होने के ही कारण साध्य के जनक कारक व्यापार भी व्यर्थ हो जायेंगे । कार्य को कारण व्यङ्ग्य भी नहीं माना जा सकता है; क्योंकि प्रश्न है कि व्यंग्यवादियों के मत में घटादि कार्य व्यक्ति का सद्-भाव है कि नहीं ? यदि व्यक्ति को भी कारण व्यङ्ग्य मानें तो फिर अनवस्था दोष होगा । यदि कार्य व्यक्ति को नित्यव्यक्त मानें तो फिर घटादि कार्य व्यक्तियों के नित्यव्यक्ति का प्रसङ्ग होगा । किञ्च प्रश्न है कि घटादि की उत्पत्ति भाव पदार्थ से होती है? या अभाव पदार्थ से? प्रथम पक्ष इसलिए नहीं माना जा सकता है कि लोक में देखा जाता है कि घटादि कार्य पिण्डादि कारण के विनष्ट हुए बिना नहीं

उत्पन्न होते हैं, यदि अभाव से घटादि कार्यों की उत्पत्ति मानें तो घटादि कार्यों के भी अभावात्मक होने का प्रसङ्ग होगा। इस तरह सत्कार्यवाद में अनेकों विकल्प का अवसर होने से सत्कार्य वाद उचित नहीं है। इस तरह उत्पत्ति का खण्डन हो जाने से उपर्युक्त तर्कों के ही आधार पर उत्पत्ति के समान विनाश का भी खण्डन हो जाता है। इस तरह सत् एवम् असत् दोनों से भिन्न रूप से उत्पत्ति एवम् विनाश के न होने के कारण उसे सदसद्‌विलक्षण मिथ्या ही मानना चाहिए। कहा भी गया है—आत्मा विनाश रहित तथा परमार्थं हैं। विनश्वर द्रव्य से युक्त वस्तु तो विनश्वर ही होती है। यच्चान्यथात्वम्० इत्यादि—हे द्विज ! जो वस्तु बदलती रहती है वह जिस प्रकार की प्रतीत होती है वह उसी प्रकारकी नहीं है। अतएव तात्त्विक कैसे हो सकती है। श्रुति भी कहती है–'वाचारम्भणम् विकारोनामधेयम्' अर्थात् नाम रूप वागालम्बन मात्र है। 'मृत्तिका मात्र ही तात्त्विक है। इस श्रुति में ब्रह्म से भिन्न कार्यभूत मृतिका द्रव्य को कण्ठतः यहाँ सत्य बतलाया गया है, ऐसा नहीं सोचना चाहिए, ऐसा मानने पर भिक्षु-पाद प्रसारण न्याय से व्यावहारिक नित्यता का प्रतिपादन कर श्रुति का तात्पर्य यहाँ घटादि के मिथ्यात्व के प्रतिपादन में है। इस वाक्य का तात्पर्य मृतिका से भिन्न उसके समस्त कार्यों के मिथ्यात्व के समान जगत् के मूल कारण ब्रह्म से भिन्न मृतिकादि समस्त विकारों के सत्यत्व के प्रतिपादन में है। इस तरह से 'प्राणा वैसत्यम्' प्राण सहचारी जीव सत्य हैं; इस श्रुति का भी निर्वाह हो जाता है। वहाँ भी श्रुति कहती है—अथ नामधेयम्० इत्यादि। अब नामधेय का वर्णन किया जाता है। ब्रह्म सत्य का सत्य है। प्राण शब्द वाच्य जीव हैं। ब्रह्म उनसे भी सत्य है। इस वाक्य में भी आगे एवम् पीछे के वाक्यों के अंश का परामर्श करने से वाक्य के बीच में आये हुए प्राण शब्द वाच्य जीव की सत्यता व्यावहारिकी सिद्ध होती है। इस तरह श्रुतियाँ, स्मृतियाँ अनुमान एवम् तर्क सभी कार्य के मिथ्यात्व को बतलाते हैं। अच्छी तरह से विचार करने वालों को यह निश्चय होना आसान है कि जगत् मिथ्या है, क्योंकि वह विनश्वर है।

सिद्धान्तः—तत्र ( अत्र ) ब्रमः—[१] यदुक्तं कारणेन कार्यं सम्बद्धमारभ्यते उतासम्बद्धमिति तत्रासम्बद्धमित्येव पक्षः। न हि कारणानां मिथस्सम्बन्धमन्तरेण कार्येणापि सह सम्बन्धः कार्योत्पत्त्यङ्गतया दृष्टचरः, येन तदङ्गीकुर्मः। यत्तु असम्बन्धाविशेषात् सर्वं सर्वस्य कारणं भवेदिति–तत् तदा स्यात्, यद्यसम्बद्धत्वमेव कार्यारम्भप्रयोजकं स्यात्। न च तदस्ति, तत्तद्वस्तूनां प्रतिनियतशक्तीनां प्रतिनियतकार्यारम्भकत्वस्यान्वयव्यतिरेकि [ क ] सिद्धत्वात्। यदि कारणानां कार्यसम्बन्धोऽपि कार्यारम्भेऽङ्गमिष्यते, तदाऽनङ्गाङ्गीकारः। अविषयवृत्तित्वं वा, कारणानां परस्पर ( दृष्टस्य ) संबन्धस्य कार्ये संचारणात्। युक्ताङ्गत्यागो वा, असिद्धत्वेनासम्बन्धस्य साध्यतां प्रत्युपयुक्तस्य त्यागादिति।

प्रसादः—उपर्युक्त पूर्वपक्ष का निम्न उत्तर है-यह जो पूछा गया है कि कारण से सम्बद्ध रह कर ही कार्य उत्पन्न होता है कि असम्बद्ध रहकर ? तो हम असम्बद्ध कार्य की ही उत्पत्ति मानते हैं। यह कहीं देखा नहीं गया है कि कारणों के परस्पर में सम्बद्ध हुए बिना उनका कार्य से भी सम्बन्ध भी

कार्योत्पत्ति के लिए आवश्यक हो । अतएव सम्बन्ध स्वीकारना अनावश्यक है । यह जो कहा गया है कि असम्बन्ध सामान्य के कारण सभी वस्तुएं सबों का कारण हो जायेंगी तो यह तब संभव था जब कि सम्बद्धता को ही कार्यों का उत्पादक माना जाता । असम्बद्धता को हमारे मतमें कार्यारम्भ का प्रयोजक माना नहीं जाता । सीमित शक्ति वाली तत्-तत् वस्तुओं में तत्-तत कार्यों को उत्पन्न करने की शक्ति अन्वय व्यतिरेक के द्वारा सिद्ध होती है । यदि आप कारण का कार्य से सम्बन्ध होना भी कार्योत्पादन के लिए आवश्यक मानें तो उसे (सम्बन्ध को ) कार्योत्पत्ति का अङ्ग नहीं माना जा सकता है । अथवा उसमें अविषयवृत्तिता होगी, क्योंकि परस्पर कार्यों में देखे गये सम्बन्ध का कार्य में संचार होगा । या युक्ताङ्ग त्याग रूपी दोष होगा , क्योंकि सम्बन्ध के सिद्ध न हो सकने के कारण साध्योपयोगी असम्बन्ध का त्याग करना होगा ।

युक्ताङ्गत्यागमुपपादयति असिद्धत्वेनेति ।

( २ ) एतेन भिन्नत्वाभिन्नत्वविकल्पोऽपि निरस्तः ; दण्डचक्रादिविलक्षणस्यैव घटादेस्तत्र (त) उत्पत्तिदर्शनात् । उपादानेऽपि हि कार्यकारणयोः ( उपादानकारणकार्यावस्थयोः ) अत्यन्तभेद एव 'हि' दृश्यते । अवयविवादिनां तु द्रव्ययोरपि । एवमपि चेदभेदोऽभ्युपगम्येत 'ऽप्यर्थ्येत', तर्हि युक्ताङ्गत्यागः ; कार्यकारणभावोपयुक्तस्यैव भेदस्य परित्यागात् / अयुक्ताङ्गस्वीकारो वा , तद्विरोधिन एवाभेदस्य स्वीकारादिति । अन्यथा स्वव्याघातः सार्वभौमः । एवमुत्तरेष्वपि विवेक्तव्यम् ।

प्रसाद—इसी प्रतिपादन से कारण से कार्य भिन्न है या अभिन्न पूर्वपक्षी का यह भी विकल्प खण्डित हो गया । क्योंकि देखा जाता है कि दण्डचक्रादि से विलक्षण ही घट उन सभी कारण समूहों से उत्पन्न होता है । किन्च कार्य का अपने उपादान कारण से भी अत्यन्त भेद देखा जाता है । अवयवीवादियों के मत में तो कारण द्रव्य से कार्य द्रव्य भी भिन्न ही होता है । इस तरह के भेद के रहने पर भी यदि कारण और कार्य में अभेद स्वीकारा गया तो युक्ताङ्ग का त्याग नामक दोष होगा । क्योंकि इस अभेद की मान्यता मे कार्यकारण भाव के लिए उपयोगी भेद का त्याग किया जाता है । अथवा अनावश्यक अभेद को स्वीकारने के कारण अयुक्ताङ्ग स्वीकार का दोष होगा । अन्यथा आप के मत में स्ववचन विरोध का ही प्राबल्य होगा । इसी तरह से आगे के भी विकल्पो मे भेद पूर्वक विचार करना चाहिए ।

कार्यकारणयोरिति । द्रव्यस्य कार्यत्वघटकीभूता साक्षादुपत्तियोग्यावस्थात्र कार्यशब्देन विवक्षिता । अन्यथेति । एवमप्यनेन तर्काभासेन कार्यनिरासे मिथ्याभूतमपि कार्यमेवं निराक्रियेत । मिथ्यात्वादेव सर्वमुपपद्यत इति चेत् , तत्किं राजशासनेन ? दर्शनादिति चेत् , तर्हि तत एवास्मत्पक्षेऽपि कारणासम्बद्धम् ततो भिन्नम् च कार्यमिति किं न सेत्स्यति ? एव मिति । विकृताविकृतादिविकल्पेष्वपि स्वव्याघातकत्वपर्यन्ता दोषा ग्राह्या इत्यर्थः ।

३—यत्तु विकृतादविकृताद्वोपादानात् कार्यारम्भ इति ; तत्र विकारशब्देन यत्किंचिदागन्तुकधर्म (विशेष ) विवक्षायाम् , विकृतादिति ब्रूमः । सहकारिसम्बन्धोऽपि

हि विकार एव । अथ कार्यरूपेण विकृतत्वं विवक्ष्यते , तदा त्व ( अ ) विकृतादिति वदामः , अन्यथा आत्माश्रयप्रसङ्गात् । यत्तु अविकृतत्वाविशेषात् सर्वदोत्पादकत्वप्रसङ्ग इति-तन्न , अविकृतस्यैव सहकारिचक्रसन्निपातेन कालविशेषनियतकार्यारम्भोपपत्तेः । यत्तु सहकारिसम्बन्धोऽपि विकृतस्य वा अविकृतस्य वेति विकल्पितम् ; तदपि सहकार्यन्तरसम्बद्धस्यैवेति परिहृतम । न चात्रानवस्था दोषः; सिद्धानवस्थारूपत्वात् । न हि पूर्वं पूर्वं कारणं नास्तीत्युत्तरो [ पूर्वपूर्वकारणमस्तीत्यु] त्तरासिद्धिः । न च पूर्वपूर्वाभावे प्रमाणमस्ति , प्रत्युत कार्यमेव प्रमितं सत कारणप्रवाहे प्रमाणं भवति । अन्यथा कार्यानुदयप्रसंगात् । न च नोपलभ्यते कार्यं उपलभ्यमानमपि वा किं बाध्यते ? सर्वकार्यबाधे स्वप्रवृत्तिविरोधात । कतिपयकार्य (यन्तर) बाधेत्वबाधितकार्यान्तरसद्भावेन कार्यकारणभावमात्रस्यापलपितुमशक्यत्वात । अन्ततो बाधस्यापि कार्यत्वेन कर्तुमेवाशक्यत्वप्रसङ्गः (कयस्त्वप्रसंगः ?) । बाधस्यापि बाधे व्याघातः स्यादिति ।

प्रसाद—पूर्वपक्षी ने यह जो पूछा है क्या कार्य विकृत उपादान से उत्पन्न होता है ; अथवा अविकृत उपादान से ? तो इसके विषय में हमारा कहना है कि यदि आपको विकृत शब्द के द्वारा कोई आगन्तुक धर्म विशेष अपेक्षित है तो मैं विकृत उपादान से कार्य की उत्पत्ति मानता हूं । क्योंकि सहकारी का सम्बन्ध भी विकार ही है । यदि आपको कार्य रूप से विकृतता अपेक्षित हो तो फिर हम अविकृत उपादान से कार्य की उत्पत्ति मानते हैं । यदि ऐसा न हो तो फिर अन्योन्याश्रय दोष होगा । पूर्वपक्षी ने यह जो कहा है कि अवकृतत्व सामान्य के कारण उपादान के सर्वदा कार्य उत्पन्न करने का प्रसङ्ग होगा, वह उचित नहीं है, क्योंकि अविकृत भी उपादान सहकारी के सम्बन्ध के विना कार्य को उत्पन्न करने में समर्थ नहीं होता । जिस समय उसका सहकारी से सम्बन्ध होता है, उसी समय वह कार्य उत्पन्न करता है । पूर्वपक्षी ने यह जो विकल्प किया है कि सहकारी का भी सम्बन्ध विकृत उपादान से होता है अथवा अविकृत उपादान से ? तो उसका उत्तर है दूसरे सहकारी से सम्बद्ध ही उपादान से सहकारी का सम्बन्ध होता है । सिद्ध अनवस्था होने के कारण यहाँ पर अनवस्था दोष की कल्पना नहीं की जा सकती है । पूर्व पूर्व कारणों के होने कारण उत्तरोत्तर कारणों की असिद्धि नहीं हो सकती है । यह भी नहीं कहा जा सकता है कि पूर्व पूर्व कारणों के अभाव है, क्योंकि प्रामाणिक कार्य कारण प्रवाह की सत्ता में प्रमाण है । यदि ऐसा न हो तो फिर कार्य की अनुत्पत्ति का प्रसङ्ग होगा । यह भी नहीं कहा जा सकता है कि; कार्य की उपलब्धि ही नहीं होती हैं या उपलब्ध कार्य का बाध हो जाता है ? क्योंकि सभी कार्यों का बाध हो जाने पर अपनी भी प्रवृत्ति नहीं हो सकती है । यदि कुछ ही कार्यों का बाध मानें तो अविद्या के कार्यों के सद्भाव के द्वारा कार्य कारण भाव का अपलाप नहीं किया जा सकता है । किञ्च बाध भी कार्यान्तर्गत है, अतएव उसके रहते कार्य का अपलाप नहीं किया जा सकता है । बाध का भी बाध मानने पर तो सम्पूर्ण कार्यों के सत्य होने के कारण स्ववचन विरोध दोष होगा ।

स्वपक्षनिर्वाहमाह यत्तु विकृतादिति । सहकार्यन्तरसम्बद्धस्येति । सिद्धान्ते उपादानस्य

नित्यत्वात् सहकार्यन्तरसम्बन्धे नानवस्था दोष इति भावः। यथा निश्चितप्रामाण्यस्यैव ज्ञानस्य संशयनिवृत्त्याद्युपयोगित्वे प्रामाण्यस्य परतस्त्वमते प्रामाण्यज्ञानेऽनवस्था सा च साध्यत्वान्मूलक्षयकरीति दोषः न तथेयमित्यभिप्रायेणाह सिद्धेति। अनवस्थाया दोषत्वप्रयोजकं मूलक्षयकरत्वमसिद्धत्वं च नास्तीति क्रमेणाह न हीत्यादिना। सर्वकार्यबाध इति। असद्विलक्षणकार्यस्वरूपाविरोधिबाधविवक्षायां तादृशेनापि कार्येण कारणप्रवाहस्यानुमातुं शक्यत्वात् सहकार्यन्तरसम्बन्धस्य सहकारिसम्बन्धसम्भवात् सहकार्यन्तरसम्बन्धस्य कार्यारम्भकत्वे दोषाभावाद्विकृताविकृतादिविकल्पमूलतर्काप्रवृत्तेर्मिथ्यात्वसाधनायोगात् मिथ्यात्वं साधयता स्वरूपासत्यपर्यवसित एव बाधो वाच्यः, एवञ्च स्वप्रवृत्तिविरोधः; मिथ्यात्वसाधनलक्षणकार्यस्याप्यसिद्धेरित्यर्थः। सर्वकार्यबाधपक्षे दोषान्तरमाह अन्तत इति। इष्टापत्तिमाशङ्क्य परिहरति बाधास्यापीति। प्रपञ्चबाधस्य बाधेप्रपञ्चसत्त्वसिद्धेरित्यर्थः।

यत्तु रुचकादिविकृतिविशिष्टं हेमादि; (हेमातिरिक्त) रुचकादिमात्रं वा; हेमादिमात्रं वा स्वस्तिकारम्भकमिति विकल्पितम्—तत्र आरम्भकमिति किं स्वस्तिकनिर्माणोपयुक्ताकारविशिष्टं विवक्षितम्; उत तदुपयुक्ताकार एव? अथवा रुच (स्वस्ति) काश्रयमात्रमिति, आद्ये रुचकादिविकृतिविशिष्टमिति ब्रूमः। न च स्वस्तिके रुचकाकार-(ाकारित) हेमानुपलम्भविरोधः, कार्योपयुक्ताकाराणां कार्येऽप्यनुवृत्तेरनपेक्षितत्वात्। तदपेक्षणे चानङ्गाङ्गीकारप्रसंगात्। केचन कारणाकाराः कार्येऽप्यनुवर्तन्ते, केचित्तु निवर्तन्त इति यथादर्शनमंगीकार्यत्वात्। द्वितीये तु रुचकादिमात्रमिति वदामः। न च हेमानुवृत्तिदर्शनविरोधः, उक्तो (दत्तो) त्तरत्वात् कारणदशावच्छेदकाकारनिवृत्तावप्याश्रयतयोपयुक्तस्य द्रव्यस्य तदाकारविशेषस्य च नाशकाभावादनुवृत्त (त्व) स्य दुर्निवारत्वात्। तृतीये तु हेममात्रमित्येव तत्त्वम्। न चारम्भकहेमातिरिक्तं न दृश्यत इति वाच्यम्, स्वहृदयसंवादात्, अन्यथा आरम्भकमपि न दृश्यत इति वक्तुं शक्यत्वात्। अतिरिक्तं तु दृश्यते; तत् किमवयवि द्रव्यान्तरम्, उत तदारम्भकतयाऽभिमतावस्थान्तरमात्रम्, उत विवर्तविशेष इत्येवमादिको हि विवादः। हेमप्रत्यभिज्ञानं तु न स्वस्तिकप्रतीत्यपह्नवक्षमम्। हेम्न एव स्वस्तिकविशेषितत्वेन प्रत्यभिज्ञोपपत्तेः। अन्यथा पूर्वानुभूतातिरिक्ताकारमन्तरेण कथं सा प्रत्यभिज्ञा? न हि यत्किंचिद्देशकालावस्थादिविशेषमन्तरेण सोऽयमित्युल्लेखः। अन्यथा स इत्येव स्यात्, अयमित्येव वा।

प्रसाद—पूर्वपक्षी ने यह जो पूछा है कि क्या रुचकादि विकारों से विशिष्ट ही हेमादि स्वास्तिक के आरम्भक हैं? या रुचकादि मात्र? अथवा हेमादि मात्र ही? तो इसके विषय में प्रष्टव्य है

कि क्या आरम्भक शब्द का अर्थ स्वस्तिक निर्माणोपयुक्त विशिष्टता मानते हैं; या स्वस्तिक निर्माणोपयोगी आकार ? अथवा स्वस्तिकाश्रय मात्र ? यदि प्रथम अर्थ मानें तो मैं रुचकादि विकार विशिष्ट हेमादि को स्वस्तिकादि का आरम्भक मानता हूं, क्योंकि स्वस्तिक मे भी रुचकाकाराकारित हेम ( स्वर्ण ) की उपलब्धि होती है । यह कोई आवश्यक भी नहीं है कि कार्य के लिए उपयोगी कारण के आकार की अनुवृति कार्य में भी हो । यदि आप अपेक्षित भी मानें तो भी इस आकार को कार्य का अङ्ग नहीं माना जा सकता है । उपलब्धि के अनुसार यही माना जाता है कि कारण के कुछ आकारों की कार्यमें अनुवृत्ति होती है और कुछ की नहीं । द्वितीये तु० इत्यादि—यदि आरम्भक शब्द का अर्थ आप कार्य निर्माणोपयोगी आकार मात्र मानें तो हम रुचकादि मात्र को स्वस्तिकादि का आरम्भक मानते हैं । इस पक्ष में कार्य में हेमानुवृत्ति से विरोध का कोई प्रसङ्ग नहीं है, क्योंकि इसका उत्तर मैं दे चूका हूँ । क्योंकि आप रुचकाकृति मात्र को कार्योपयुक्त आकार मानते हैं । उपादानभूत हेम की निवृत्ति हो सकने के कारण उसकी कार्य में अनुवृत्ति होने में कोई भी विरोध नहीं हैं । यदि आप आरम्भक शब्दका अर्थ स्वस्तिकाश्रय मानें तो मैं भी हेमादिमात्र को स्वस्तिक का आरम्भक मानता हूँ । यदि कहें कि स्वस्तिक में उसके आरम्भक हेम व्यतिरिक्त की उपलब्धि नहीं होतीं, तो इस तरह की बात आप अपने हृदय के विपरीत कर रहे हैं, अन्यथा आप यह भी कह सकते हैं कि आरम्भक हेम की भी उपलब्धि नहीं होती है। हेमादि व्यतिरिक्त की उपलब्धि होती है, किन्तु विवाद इस बात का है कि वह क्या दूसरा अवयवी द्रव्य है ? या स्वस्तिक का आरम्भ करने वाला अवस्था विशेष है ? अथवा विवर्त विशेष है?स्वस्तिक की प्रतीति हो और हेम की प्रतीति न हो ऐसा हो नहीं सकता है । क्योंकि स्वस्तिकाकार से विशिष्ट हेम की ही कार्य में भी उपलब्धि होती है । अन्यथा पूर्वनुभूत आकार से अतिरिक्त आकार से बिना उसे प्रत्यभिज्ञा कैसे कहा जा सकता है ? देश, काल एवम् अवस्था का भेद हुए विना यह वही है, इस तरह से कहा ही नहीं जा सकता है । और न तो ' वह है' या ' यह है ' इस तरह से ही कहा जा सकता है ।

नचेति । रुचकादिमात्रस्यारम्भकत्वे यः पूर्वपक्षे दोष उक्तः, स इह नास्तीत्यर्थः । उक्तोत्तरत्वा दिति । त्वयैव रुचकाकृतिमात्रस्य कार्योपयुक्ताकारत्वस्योक्तत्वादित्यर्थः । एवञ्च हेम्न उपादानत्वस्यानिवर्तितत्वात्तदनुवृत्तौ न विरोध इति भावः । तदाकारेति । हेमाकारम् । तदारम्भकतयेति । अभिमतस्य द्रव्यस्यावस्थान्तरमित्यर्थः । अन्यथा अतिरिक्ताकारयोगश्च प्रत्यभिज्ञा विरोधित्व इत्यर्थः । पूर्वेति । पूर्वानुभूताकारम् अतिरिक्ताकारम् चान्तरेणेत्यर्थः । अवस्थादिविशेषः—अवस्थादिभेदः । तालद्वयादिविषयीकरणमन्तरेण प्रत्यभिज्ञा न सम्भवतीत्यर्थः ।

यत्तु बुद्धिशब्दान्तरादौ, कारकव्यापारवैयर्थ्यप्रसंगे नित्यानित्यविभागानुपपत्ति प्रसंगे च रज्ज्वाद्यधिष्ठानसर्पादिकं निदर्शितम् ; तदपि देकेकालादिप्रतिपन्नोपाधौ बाधाभावादेव परिहृतम् । बाधकतया अभ्युपगताश्च प्रत्येकं परिहियन्त एव । अतएव दुर्निरूपबुद्धिशब्दान्तरादित्वादिति हेतुरपि निरस्तः ।

यत्तु मध्येऽप्यसत् कार्यम् आद्यन्तयोरसत्त्वादिति प्रयुक्तम्—तदप्यबाधितसत्त्वोपलम्भेन बाधितम् । अन्यथा मध्येऽप्यनारोपितं कार्यम् , आद्यन्तयोरनारोपितत्वादिति

वस्तुकृत अपकर्ष नहीं होना ही उसमें वस्तु परिच्छेद का अभाव कहलाता है । ब्रह्म में इस तरह के वस्तु परिच्छेद का अभाव मानने पर ब्रह्म सर्ववस्तु शरीरक तथा सबों की आत्मा भी सिद्ध होता है । इस तरह से मानकर 'उल्लंघित त्रिविध सीमसमतिशायी सम्भावनं तव परिव्रढिमस्वभावम्' अर्थात् हे प्रभो ! तीनों प्रकार की सीमाओं तथा समाभ्यधिक सम्भावना से रहित आपका स्वभाव है । इस श्रीमद् यामुनाचार्य के वाक्य का निर्वाह गोबलिवर्दन्याय से अथवा फल और फलवान रूप से करना चाहिये । आरम्भणाधिकरण भाष्य का भी निर्वाह इसी तरह करना चाहिए । इस तरह सिद्ध हुआ कि सत्य देश काल और वस्तु की सीमा से अवच्छिन्न, सभी देशों और कालों में व्यापक; सभी वस्तुओं की अन्तरात्मा सभी कल्याणकारी गुणों से विशिष्ट, सभी हेयगुणों के प्रत्यनीक तथा सबों से महान् ब्रह्म ही अनन्त पद से बतलाए गये हैं । अतएव अनन्त पद के द्वारा जगत् के मिथ्यात्व की सिद्धि नहीं होती है ।

इस तरह शतदूषणी के छपनवे आनन्त्यनिरूपण नामक वाद का प्रसाद समाप्त हुआ ।

******

स्वारस्यनुरोधेनेति । वस्त्वन्तरभेदमात्रं वस्तुपरिच्छेद इत्यभ्युपगमवादः । तत एवेति अनन्तशब्दार्थवद्वस्तुपरिच्छेदाभावयो र्व्याघातादित्यर्थः ।

अस्मिश्च । वस्त्वन्तरप्रतियोगिकापकर्षो वस्तुपरिच्छेदः, तदभावश्चोत्कर्षः, भावान्तरस्याभावत्वात्, स च सर्वशरीरत्वादि, तदपि तदन्तर्गतमित्यर्थः । उल्लङ्घितेत्यादि । यद्यपि परिव्रढिमाप्रभुत्वम्, 'प्रभौ परिवृढ' इति निपातनात्, तथापि तस्य धर्मिद्वारानन्तत्वान्वय इत्यभिप्रेत्येदमुक्तम् । स्तोत्र भाष्ये साक्षात्प्रभुत्वगततयैवोक्तम्-'देशतः कालतो विषयतश्चे'ति । प्रभुत्वस्य ब्रह्मादिवदेकाण्डादिमात्रगतत्वाभावो देशापरिच्छेदः, एतल्लोके पुण्यपापविवेकप्रभोरपि वैवस्वतस्य 'प्रभुरहमन्यनृणां न वैष्णवाना'मिति विषयविशेषादिव सङ्कोचो विषयपरिच्छेदः, तदभावो ब्रह्मादिसर्वविषयत्वमपरिच्छेद इति तत्र भेदः । तत्र च न पौनरुक्त्यशङ्कापि, तिस्रो विधा यस्येति बहुव्रीहावन्यपदार्थत्रये समाधिकराहित्यस्य पृथक्वचनात् । संख्याया(इवो) ल्लङ्घनानन्वयात् गोबली वर्दन्यायसम्भवः । फलेति । त्रिविधा सीमा समातिशायिसम्भावना चोल्लङ्घिता येनेति विग्रहः, तत्र सम्भावनोल्लङ्घनम् फलमित्याशयः । आरम्भणेति । 'स्वत' इति स्वरूपसम्बन्धिपरिच्छेदः, स च देशकालाभ्याम्, 'परत इति गुणविभूतिभ्यां परिच्छेदः, तदभाव एव वस्त्वपरिच्छेद इति भावः । सत्यैरेवेति । सत्यैरेवापरिच्छेद उपपादयितुम् शक्यः, नासत्यैः; घटस्य सत्यात्पटादिवासत्यात् शुक्तिरजतादेरपि भेदस्य परिच्छेदरूपत्वात्, न चैतन्नाहित, परिभाषामात्रपरिशेषापत्तेः ।

अयमत्रनिष्कर्षः-त्वया वस्तुपरिच्छेदशब्देन परिभाषितोऽनन्तशब्दार्थ इति किमभिधाननकोशसिद्धम् ? उत व्यवहारसिद्धम् ? किं वा वस्तुपरिच्छेदशब्द वदनन्तशब्दोपि त्वया परिभाषितः ? आद्यौ न क्वापि दृष्टचरौ । परिभाषाम् तु न निषेधामः - परन्तु श्रुतेस्तत्परिभाषापारतन्त्र्यम् ।

ननु देशपरिच्छेदस्यात्यन्ताभावरूपत्वात् कालपरिच्छेदस्य प्रागभावध्वंसरूपत्वात् तत्र चान्तशब्दप्रयोगात् नानाशक्तिकल्पने संसर्गाभावत्वेन शक्तिकल्पने च गौरवाबाभावत्वेनैव लाघवाच्छक्तिः कल्प्यते, ततश्च भेदोऽप्यन्तशब्दार्थ इति चेत् , यद्येवं तर्हि लाघवाद्वस्तुत्वमेवान्तशब्दप्रवृत्तिनिमित्तम् ततोऽपि लाघवात् सर्वशब्देपि वा वस्तुत्वमिति किं न कल्प्यते ? व्यवहारस्य शक्तिकल्पकत्वात् तदनुसारेण तिरस्कृत्य तत्तच्छब्दानां तत्तत्प्रवृत्तिनिमित्तकल्पनमिति परिहारः प्रकृतेपि तुल्यः । [अ] भेदे अन्तशब्दप्रयोगाभावात् ।

किञ्च देशकालपरिच्छेदयोरन्तशब्दश्चरमभागार्थः , ग्रामान्तः कर्मान्त इत्यादौ तथा दर्शनात् , क्वचित्प्रयोगबलात् ध्वंसार्थोपि , तथा समीपार्थश्च; प्रागभावात्यन्ताभावान्योन्याभावेषु न क्वचिदप्यन्तशब्दप्रयोगो दृष्टचरः । कथं तर्हि सिद्धान्ते वस्तुपरिच्छेदार्थकताभिधानम् ? उच्यते, उत्कृष्टम वस्त्वपकृष्टवस्तुपरिच्छेदकतया लोकव्यवहारसिद्धम , अतः परिच्छेदशब्दार्थतामात्रेण तदपि विवक्षितुम शक्यत इत्येतावता तदङ्गीकारः, क्वचित्तदन्तर्गतस्वतन्त्रवस्त्वन्तरशून्यपरत्वाङ्गीकारश्च । अस्तु वा भेदोऽप्यन्तशब्दार्थः , अथाप्यन्तशब्दस्यानेकार्थत्वात् देशकाल परिच्छेदे तयोः प्रचुरप्रयोगाच्च अत्रापि तन्निषेध एव युक्तः । नानार्थत्वाच्च न सङ्कोचगन्धः । अस्तु वा त्वदुक्तरीत्या एकार्थत्वम् , तथापि प्रचुरप्रयोगान्मानान्तराविरोधाच्च उक्तरीत्या सङ्कोच एव युक्तः । अन्यथा "अनादिर्भगवान् कालो नान्तोस्य द्विज विद्यत" इति अन्तशब्देन कालस्यापि वस्तुपरिच्छेदाभावप्रसङ्गात् । अन्तशब्देन भेदस्याप्युक्तौ निषेधानुपपत्तिश्च , ब्रह्मणः प्रपञ्च भिन्नत्वात् । सत्यादिपदैः प्रपञ्चभेदः प्रतिपाद्यते, अनंतशब्देन भेदनिषेधः क्रियते, इदं च वाक्यं तत्त्वावेदकम , पदत्रयमपि स्वरूपलक्षकमिति कस्मादुपाध्यायादधीतोयं वृषलोद्वाहमन्त्रः ? क्षम्यताम् अयमसंदृष्टप्रलापः; पदद्वयमपि स्वरूपलक्षकमित्येतावदेवोच्यत इति चेत् , तर्हि आनन्त्यश्रुतितः कथं मिथ्यात्वसिद्धिः ? अतः पुनरावृत्तः स एव मन्त्रः । अपि च प्रपञ्चमिथ्यात्वं कथं भेदनिषेधोपपादकम् ? सत्यपदोक्तानृतव्यावृत्त्युपपादकत्वात् ।

ननु प्रपञ्चस्य सत्यत्वे तद्भेदोऽपि सत्यः स्यात् । मिथ्यात्वे तु भेदोऽपि मिथ्येति निषेधोपपत्तिरिति चेन्न—अनृतव्यावृत्तेर्मिथ्यात्वप्रसङ्गात् । सत्यादि पदानां तत्त्वावेदकत्वप्रसङ्गाच्च तेषां व्यावृत्तिपरत्वोक्तेः ।

ननु सा व्यावृत्तिः स्वरूपात्मिका , निषिध्यमानस्तु भेदः स्वरूपातिरिक्तो मिथ्येति चेत् , तर्हि सत्य एव परिच्छेद इति कथमानन्त्यसिद्धिः ? न हि स परिच्छेदो न भवतीति राजाज्ञा, अविद्याया अप्यपरिच्छेदप्रसङ्गात् । तत्रापि भेदाङ्गीकारे अनवस्थाप्रसंगेन स्वरूपात्मकतयैव भेदस्य स्वीकार्यत्वात् ।

ननु देशकालपरिच्छेदवदयमपि परिच्छेदः अभावप्रतियोगित्वात्मक एव, अभेदप्रतियोगित्वम वस्तुपरिच्छेदः; तदेवात्र निषिध्यते, न तु भेदाश्रयत्वमिति चेन्न , सदसद्विलक्षणत्वम् वदता ब्रह्मभेदस्य प्रपञ्चेऽङ्गीकारात् । स्वसमानसत्ताकभेदप्रतियोगित्वं परिच्छेद इति चेन्न ,—

प्रपञ्चमिथ्यात्वसिद्धेः प्राक् सत्ताभेदासिद्धेः। प्रातिभासिकसत्ताङ्गीकारेऽपि न विशेषणस्य प्रयोजनम् पश्यामः।

ननु भेदप्रतियोगित्वस्य ब्रह्मणि निषेधात् विद्यमानमपि भेदप्रतियोगित्वं मिथ्यैव, एवं च, तन्मिथ्यात्वस्य भेदतदाश्रयमिथ्यात्वं विनानुपपत्तेः तत्सिद्धिः, न च भेदप्रतियोगित्वस्य मिथ्यात्वमभेदप्रतियोगित्वस्य सत्यत्वेनाप्युपपन्नम्, तत्सत्यत्वं चाभेदसत्यत्वाधीनम्, तच्च प्रपञ्चसत्यत्वाधीनम्, अतः प्रपञ्चसत्यत्वेनोपपन्नम् प्रपञ्चभेदप्रतियोगित्वमिथ्यात्वं कथं प्रपञ्चमिथ्यात्वम् साधयेत्? प्रपंचसत्यत्वेनैव वा तदुपपत्तिः, भेदप्रतियोगित्वस्यासत्यत्वे अभेदप्रतियोगित्वस्य सत्यत्वावश्यंभावात्, अतोऽनन्तपदं प्रपञ्चसत्यत्वस्यैव साधकमिति वाच्यम्, जडाजडयोः पारमार्थिकाभेदासम्भवादिति चेन्न,—अभेदप्रतियोगित्वस्यापारमार्थ्ये भेदप्रतियोगित्वपारमार्थ्यस्यावर्जनीयत्वात्, ब्रह्मणोऽधिष्ठानतया प्रपञ्चस्य तदभेदाच्च। सोऽपि मिथ्येति चेत्तर्हि समानसत्ताकयोर्विरोधाङ्गीकारात्तथाविधयोरेव भेदप्रतियोगित्वाभेदप्रतियोगित्वयोरङ्गीकाराच्च पुनरावृत्तस एव मन्त्रः।

ननु सत्यभूतभेदप्रतियोगित्वस्याभाव एवाभेदः; तेनाधिष्ठानत्वोपपत्तिः, अयमेव चानन्तशब्दार्थोऽपीति चेत्, तर्हि सत्यभूतभेदप्रतियोगित्वं परिच्छेद इति घटादेः तदभावात् तेषामपि अपरिच्छिन्नत्वप्रसङ्गः। ब्रह्मणः प्रपंचभिन्नत्वात् भेदस्य च ब्रह्मस्वरूपत्वात् सत्यभूतभेदप्रतियोगित्वात् घटादेः कथं तदपरिच्छेद इति चेत्, तर्हि घटादेः घटादिभेदः परिच्छेदो न स्यात् न चेष्टापत्तिः, अविशेषात् ब्रह्मनिष्ठभेदप्रतियोगित्वस्यापि अपरिच्छेदत्वप्रसङ्गात्। आश्रयसमानसत्ताकं भेदप्रतियोगित्वं परिच्छेद इति तु दत्तोत्तरम्, समानसत्तापदवैयर्थ्यस्योक्तत्वात्।

ननु घटादौ भेदप्रतियोगित्वस्य मिथ्यात्वात् समानसत्ताकयोर्भावाभावयोर्विरोधाच्च भेदप्रतियोगित्वाभावो मिथ्याभूतो घटादौ न सम्भवति, सत्यभूतस्तु नास्त्येव। अनन्तपदेन कृत्स्नमिथ्यात्वावगमदशायामभेदप्रतियोगित्वाभावस्यापि मिथ्यात्वावगमात्। तस्मान्नापरिच्छेदप्रसङ्गो घटादेरिति चेत्, एवं तर्हि ब्रह्मणोऽपि नापरिच्छेदसिद्धिः। भेदप्रतियोगित्वस्य तत्रापि मिथ्यात्वेन मिथ्याभूततदभावस्यासम्भवात्, सत्यभूताभावासिद्धेश्च। अथोच्येत ब्रह्मणि भेदप्रतियोगित्वाभावः स्वरूपमेवेति, सिद्धम् तर्हि घटादेपरिच्छेदः, ब्रह्मणीव ब्रह्मस्वरूपस्य प्रतियोगित्वाभावस्य घटादावप्यवश्यम्भावात्, प्रतियोगित्वस्य मिथ्यात्वेन तदविरोधस्याविशेषात्, सद्वैलक्षण्यस्य मिथ्यात्वे प्रपञ्चसत्यत्वप्रसंगेन ब्रह्मण एव सद्वैलक्षण्यरूपताया वाच्यत्वेन भेदत्ववत् भेदप्रतियोतित्वाभावरूपताया अवर्जनीयत्वात्।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायाम् आनन्त्यनिरूपणं नाम षट्पञ्चाशः स्कन्धः॥

## ❀ अथ निर्विशेषब्रह्मण आनन्दत्वभङ्गवादः सप्तपञ्चाशः ॥ ५७ ॥ ❀

ब्रह्मण्ययानन्दशब्देन दर्शितां गुडजिह्विकाम् ।
निर्विशेष (षाऽऽ ?) गृहीतानां वादिनां विलुनाम्यहम् ॥

प्रसाद—अद्वैती विद्वान् ब्रह्म में आनन्द नामक धर्म को नहीं स्वीकार कर ब्रह्म को आनन्द-मात्र बतलाकर मुमुक्षु जीवों का प्रवञ्चन करते हैं, ब्रह्म की निर्विशेषता में उनका महान् आग्रह है । मैं उनकी उस प्रवञ्चना का खण्डन करता हूं ।

क्षिप्तानासुरयोनिषु प्रतिमुहुर्मूढानबोधोगता
न प्राप्यैव तु पार्थभूतपरमानन्दम् ततो निन्दतः ।
नैर्गुण्येन सतां तदाप्तियशसा दग्धान् तदा वादिनो
नीचान् भाति तुदन् सतां परिवृढस्त्रय्यन्तसद्देशिकः ॥

निरुपममिदम् वैराग्यम् वा क्षमा च वितिन्दय
प्रगुणमपि यत् ब्रह्मानन्दम् स्वतो गुणवत्तया ।
यदपि निरयं मूढा न द्विष्ट भावि वयं पुन
र्जनितभगवत्प्रेमाणः श्रीनिवासगुरूक्तिभिः ॥

श्रूयते हि-, 'विज्ञानमानन्दम् ब्रह्म', 'आनन्दो ब्रह्म खं ब्रह्म' इत्यादि । तत्र किमिदं ब्रह्मण आनन्दत्वं नाम ? सुखत्वमिति चेत् ; तदपि किमिति विचारयामः (१) किमनुकूलवेदनीयत्वम् ? (२) उतानुकुलवेदनत्वम् ? (३) अथानुकूलत्वमात्रम् ? (४) यद्वा दुःखनिवृत्तिरूपतामात्रम् ? (५) उत ज्ञानात्मकत्वमेव ? (६) किञ्चि-द्धर्मान्तरं वा ?

प्रसादः—ब्रह्म के स्वरूप का वर्णन करती हुई श्रुतियां कहती हैं—'ब्रह्म विज्ञानमय तथा आनन्दमय है ।' 'ब्रह्म आनन्दस्वरूप है ।' 'ब्रह्म कम् खम् शब्द वाच्य सुख स्वरूप है । इत्यादि । प्रश्न है कि ब्रह्म की इस आनन्दता का स्वरूप क्या है । यदि सुखत्व मानें तो भी प्रश्न है कि उस सुखत्वका स्वरूप क्या है ? (१) अनुकूल वेदनीयत्व रूप? (२) या अनुकूलवेदनत्वरूप? (३) या अनुकूलत्वमात्र? (४) या दुख निवृत्ति रूपता मात्र ? (५) या ज्ञानात्मकत्व मात्र ? (६) या कोई दूसरा धर्म ?

आनन्दत्वस्य परपक्षे असम्भवं दर्शयिष्यन् तस्येष्टापादनत्वनिरासायाह श्रूयत इति । किमिदमिति । न तावत्स्वरूपम, तथा सति हि स्वरूपमानन्दो न स्यात्, नापि धर्मः, अनिर्वचनात्, अतो दूर्निरूपमित्यर्थः ।

न प्रथमः, वेदनीयत्वस्यानभ्युपगमात् ॥ व्यावहारिकं तदस्त्विति चेत्, तर्हि ब्रह्मण आनन्दत्वं व्यावहारिकमिति ब्रह्मणोऽनानन्दत्वमेव परमार्थः स्यात् । ततश्च व्यावहारिकदशायामनुकूलत्वम्; तन्निवृत्तिदशायां तन्निवृत्तिरपीति संसारस्यैव ग्राह्यत्वं मोक्षस्य दुस्परिहरणीयत्वमिति स्यात् ॥ यदा कदाचिदनुकूलवेदनीयत्वं यावद्द्रव्यभाविन आनन्दत्वस्योपलक्षणमिति चेत्, तर्हि सांसारिकस्य सर्वस्यापि वस्तुजातस्य, 'वस्त्वेकमेव दुःखाय', 'तदेव प्रीतये भूत्वा' इति श्लोकद्वयोक्तप्रकारेण कदाचिदनुकूलवेदनीयत्वस्य सद्भावात् यावद्द्रव्यमानन्दत्वं स्यात् । ततश्च सप्रपञ्चतयैवानुभव उपादेयः स्यात्, सहस्रवतः पञ्चशतं किमधिकमिति न्यायात् ॥ विषयानुकूल्यानुभवदशायां ब्रह्मानन्दानुभवो न सिध्येदिति चेन्न, तस्य नित्यस्वयम्प्रकाशत्वाभ्युपगमात् । वैशद्यावैशद्यादिदूषणम् त्वन्यत्रैव (......) । एवं वेदितुरभावादपि वेदनीयत्वासिद्धेः व्यावहारिकदशायां तत्सद्भावमात्रमपि दत्तोत्तरमेव ।

प्रसाद—प्रथम पक्ष तो इसलिए नहीं माना जा सकता है कि आप वेदनीयत्व को स्वीकारते ही नहीं है । यदि ब्रह्म की व्यावहारिक वेदनीयता मानें तो फिर ब्रह्म के आनन्दत्व को व्यावहारिक और उसके आनन्दत्व को ही परमार्थिक मानना होगा । इस तरह मानना होगा कि व्यावहारिक दशा में ब्रह्म में आनन्दत्व रहता है; व्यवहारिक दशा के निवृत्त होने पर उसके आनन्दत्व की भी निवृत्ति हो जाती है । ऐसी स्थिति में संसार की ही ग्राह्यता तथा मोक्ष की त्याज्यता सिद्ध होगी । यदि आप कहें कि ब्रह्म की कादाचित्क अनुकूलवेदनीयता ब्रह्म में सर्वदा रहने वाले आनन्दत्व का उपलक्षण है, तो फिर सभी सांसारिक वस्तुओं में-'वस्त्वेकमेव दुःखाय' एक ही वस्तु दुखद है; 'तदेव प्रीतये भूत्वा' वही वस्तु सुख देने वाली बनकर' इन दोश्लोकों में प्रोक्त प्रकार से, अनुकूलवेदनीयता का सद्भाव रहने के कारण उन सभी वस्तुओं के शाश्वत आनन्दत्व होने का प्रसङ्ग होगा । इस तरह प्रपञ्च रूप से ही अनुभव करना 'सहस्र की अपेक्षा पाँच सौ कम ही होता हैं' इस न्याय से उपादेय होगा । यदि कहें कि विषयों की अनुकूलता के अनुभव दशा में ब्रह्मानन्द का अनुभव नहीं हो सकता है। तो यह नहीं कह सकते हैं; क्योंकि आप ब्रह्मानन्द को नित्य तथा स्वयम्प्रकाश मानते हैं । इसके वैशद्य एवम् अवैशद्य का खण्डन हमने अन्यत्र किया है । मोक्ष में तो अनुभव करने वाले का अभाव होने के कारण भी वेदनीयत्व की सिद्धि नहीं हो सकती है । व्यावहारिक दशा में आनन्दत्व का सद्भाव तो पहले ही खण्डित कर चुका हूं ।

व्यावहारिकमिति । वेद्यत्वस्य घटादाविव धर्मिसमसत्ताकत्वाभावान्नाभ्युपगमविरोध इति भावः । व्यावहारिकेति । संसारदशायामित्यर्थः । तदिति । संसारनिवृत्तिदशायामित्यर्थः । यदा प्रपंचस्य कल्पितत्वान्निष्प्रपंचत्वं ब्रह्मणः परमार्थतयाऽऽनन्दत्वस्य कल्पितत्वे तद्विपरीतमनानन्दत्वमेव परमार्थः स्यादिति भावः । एतेन वृत्तिविषयत्वमादायानुकूलवेद्यत्वमित्यपि निरस्तम् । आनन्दत्वस्येति । आनन्दात्मकस्वरूपस्येत्यर्थः । आनन्दत्वं स्यादिति । उपादेयस्वरूपम् स्यादित्यर्थः । अनुभवः-ब्रह्मानुभवः । ननु अपरिच्छिन्नब्रह्मानन्दलाभात् क्षुद्रसुख रूपप्रपंचस्य नोपादेय-

तेत्यत्राह सहस्रवत इति । अधिकम्-अपेक्षितादधिकमनपेक्षितमित्यर्थः ।

ननु अधिकब्रह्मानन्दानुभवविरोधित्वात् विषयानन्दानुभवो नोपादेय इति शङ्कते विषयानुकूल्येति । तस्येति । ब्रह्मस्वरूपस्येत्यर्थः ; तथा च तन्मात्रानन्दस्य नाप्रकाश इति भावः । यद्वा ब्रह्मानन्दस्येत्यर्थः । उक्तम् हि युष्माभिः "भासत एव परमप्रेमास्पदत्वलक्षणं सुखमिति । संसारदशायामप्यात्मनि परमप्रेमास्पदत्वप्रयोजकं सुखासाधारणं स्वरूपं भासत इति हि तदर्थः । संसारदशायामविशदब्रह्मानन्दानुभवेऽपि विशदानुभवाभावादस्त्येव विरोध इत्यत्राह वैशद्येति । व्यतिरिक्ताकारप्रकाश एव च वैशद्यम् , तस्मिन्नप्याकारे स एव सत्यत्वमिथ्यात्वविकल्प इत्यादिना जिज्ञासानुपपत्तिवादे वैशद्यदूषणमित्यर्थः । आदि शब्देनावरणानावरणारधावणत्वानवधारणत्वादिकम् तत्र तत्र दूषितमित्यर्थः । दूषणान्तरमाह एवमिति । वेदनीयत्वासिद्धेः न प्रथम इत्यन्वयः । दशेति । मोक्षदशायां वेदितुरभावेनानानन्दत्वापत्त्येत्यर्थः ।

नापि द्वितीयः, वेदनरूपत्वातिरिक्तानुकूलत्वाभ्युपगमे निर्विशेषवादोपक्रमात् । तदनभ्युपगमे व्यर्थविशेषणत्वात् ; पर्यायत्वादिप्रसङ्गाच्च । भिन्नार्थत्वे विशेषणत्वाभावे च घटः पट इतिवत् अनन्वयात् ।

न तृतीयः , आनुकूल्यस्याऽऽपेक्षिकत्वेन किञ्चिदपेक्ष्येत्यभ्युपगम्यत्वात् भवतश्च तदयोगात् ॥ स्वात्मानं प्रति इदमानुकूल्यमिति चेन्न , प्रतिसम्बन्धित्वलक्षणस्वभावविशेषाभ्युपगमेऽपसिद्धान्तात् , अनभ्युपगमे तदुपाधिकानुकूलत्वस्यापि विनिवृत्तेः ॥ अविद्याशबलितं स्वात्मानं प्रतीति चेत्—तर्हि तन्निवृत्तिप्रसङ्गः प्रागेव ।

प्रसाद—दूसरा विकल्प भी नहीं माना जा सकता है , क्योंकि अनुकूलत्व को वेदन स्वरूप से भिन्न मानने पर निर्विशेषवाद का ही खण्डन हो जायेगा । यदि उसे वेदन स्वरूप से भिन्न मानें तो अनुकूलत्व जो ज्ञान के विशेषण रूप से अभिमत है, वह व्यर्थः होगा । किञ्च स्वरूपानतिरिक्त विशेषण मानने पर पर्यायत्वदि दोष होंगे । विशेषण व्यतिरिक्त होते हुए अनुकूलत्व को भिन्नार्थक मानें तो उसका घटः पटः के समान अन्वय नहीं होगा । न तृतीयः इत्यादि—तीसरा पक्ष इसलिए नहीं माना जा सकता है , कि अनुकूलत्व सापेक्ष होता है, अनुकूलता किसी अनुभव कर्ता के प्रति होती है। अद्वैत मत में कोई भी अनुकूलानुभव कर्ता नहीं है । यदि कहेंकि स्वयं ब्रह्म इस अनुकूलता का अनुभव करता है । ब्रह्ममें आनुकूल्य प्रतिसम्बन्धित्व रूप धर्म को मानने पर अपसिद्धान्त होगा । यदि उसे नहीं मानें तो प्रतिसम्बन्धित्व प्रयुक्त अनुकूलत्व की भी सिद्धि नहीं हो सकती है । यदि अविद्याशबलित ब्रह्म के द्वारा आनुकूल्य अनुभूति को मानें तो , फिर अविद्या की निवृत्तिकाल में अनन्दत्व की निवृत्ति हो जायेगी ।

वेदनेति । वेदनस्वरूपातिरिक्तानुकूलत्वाभ्युपगम इत्यर्थः । व्यर्थेति । विशेषणवाचित्वाभिमतमनुकूलपदं विशेषणाभावाद्व्यर्थमित्यर्थः। पर्यायत्वादीति । अनुकूलवेदनपदयोरुभयोरपि स्वरूपप्रवृत्तिनिमित्तकत्वे पर्यायत्वम् , अन्यथा तु प्रवृत्तिनिमित्तान्तरस्याप्यभावादबोधकत्वमेव स्यादित्यर्थः ।

ननु वेदनानुकूलपदयोर्भिन्नार्थत्वान्न पर्यायत्वम् , नचैवं सविशेषत्वं तद्गतविशेषण-वाचित्वाभावादित्यत्राह भिन्नार्थत्व इति । विशेषणवाचित्वाभावे विशेष्यतो भिन्नार्थम् वाच्यम् , तथा च न सामानाधिकरण्येनान्वयः-घटः पट इतिवदिति भावः । आपेक्षिकत्वेन--पुरुषविशेषापेक्षत्वेनेत्यर्थः । विनिवृत्तेरिति । स्वरूपे प्रतिसम्बन्धित्वानभ्युपगमे तदघटितानुकूल्यस्यप्यभावादित्यर्थः ।

नापि चतुर्थः, औपनिषदमर्यादाबहिष्कारात् । अभावात्मकत्वप्रसङ्गाच्च ॥ ब्रह्मणो दुःखनिवृत्तिरेव सुखशब्दवाच्यं भावान्तरमिति चेन्न , उदासीनावस्थायाः सर्वसम्मतत्वात् ; पूर्वं निदुःखस्यापि शर्करादि रस स्वादजन्यसुखानुभवदर्शनाच्च । अन्यथा सुखनिवृत्तिरेव दुःखमिति वदन्तं प्रति किमुत्तरं भवेत ? अभ्युपगम एवोत्तरमिति चेन्न ; द्वयोरपि भावरूपत्वासिद्धिप्रसङ्गात् ॥ भावान्तराभाववादिना नैवं चोदनीयमिति चेन्न , भिन्नोपाधिक्रोडीकारेणोदासीनावस्थासङ्ग्रहसिद्धेः ; स्वरूपतः एव निरूपण (णा) सिद्धेश्च । किञ्च समस्तदुःखनिवृत्तिरूपां सुषुप्त्यवस्थामुद्दिश्य , 'नाहमत्र भोग्यं पश्यामि' इति वदन्तम् प्रत भोग्यात्मस्वरूपोपदेशदर्शनात् दुःखनिवृत्त्यतिरिक्तसुखस्वरूपमात्मस्वरूपमिति ज्ञायते ।

प्रमाद—आनन्दत्व को दुःखनिवृत्ति रूपतामात्र इसलिए नहीं माना जा सकता है कि ऐसा मानने पर औपनिषद मर्यादा का बहिस्कार होगा । किञ्च आनन्दत्व को अभावात्मक मानना होगा । यह भी नहीं कहा जा सकता है कि ब्रह्म के दुःख की निवृत्ति ही सुख शब्द वाच्य और भावान्तररूप है , क्योंकि ब्रह्म की उदासीनावस्था सर्व सम्मत है, जो पहले दुख का अनुभव नहीं किया है; उसको भी चीनी आदि के रस के अस्वाद से जन्य सुख उत्पन्न होते देखा जाता है । उदासीनावस्था को नही स्वीकारने पर सुख की निवृत्ति को ही दुख मानने वाले को आप कौन सा उत्तर देंगे ? यह भी नहीं कहा जा सकता है कि उदासीनावस्था स्वीकारने पर ही उत्तर सम्भव है . क्योंकि दोनों सुख निवृत्ति तथा दुख निवृत्ति दोनों की भावरूपता की सिद्धि नहीं हो सकती है । क्योंकि दोनों का निरूपण प्रतियोगी के निरूपण के विना नहीं हो सकती है । यदि कहें कि अभाव को भावान्तर रूप मानने वाले आप को इस तरह की बात नहीं करनी चाहिए । तो यह भी नहीं कह सकते हैं, क्योंकि न तो हम दुखाभाव को सुखाभाव को दुखरूप मानते हैं, किन्तु उसे हम विभिन्न देश एवम् काल विशिष्ट अभावान्तर रूप मानते है । अत एव उदासीनावस्था सिद्ध होती है । भिन्न अवस्थाओं को स्वीकार करने से तो उदासीनाव था की सिद्धि हो नहीं सकती है । किञ्च उदासीनावस्था का स्वरूपतः निरूपण असम्भव है । किञ्च सभी दुखों की निवृत्ति रूप सुषुप्ति अवस्था को लेकर, इस अवस्था में मुझे किसी प्रकार के भोग की उपलब्धि नहीं होती है , यह कहने वाले को श्रुतियाँ भोग्य रूप से आत्मा के स्वरूप का उपदेश करती हैं । अतएव सिद्ध होता है कि आत्मा दुःख निवृत्ति से भिन्न सुख स्वरूप है ।

औपनिषदेति । दुःखनिवृत्तेः पुरुषार्थत्व इत्यर्थः । वैशेषिकाद्यविशेष इति भावः । सुखरूपं भावान्तरमेव दुःखनिवृत्तिः, अतो नाभावात्मकमिति शङ्कते ब्रह्मण इति । उदासीनेति ।

कदाचिद्दुःखावस्था अन्यदा तु दुःखनिवृत्त्यात्मकसुखावस्था इत्यवस्थाद्वयमेव स्यात् , नोपेक्षावस्थेत्यर्थः । इतोऽपि दुःखनिवृत्तिः सुखमित्याह पूर्वमिति । अन्यथा उदासीनावस्थानङ्गीकार इत्यर्थः । द्वयोरिति द्वयोरपि प्रतियोगिनिरूपणनियतनिरूपकत्वादिति भावः । भावान्तरेति । भावान्तराभाववादिना भावयोरेव सुखदुःखयोः परस्पराभावात्मकत्वस्य वक्तव्यत्वात् उदासीनावस्थासंग्रहाभावतौल्यात् , अन्यथा सुखनिवृत्तिरित्यादिचोदनद्वाद्वयोरपीत्यादिचोदनञ्च न सम्भवतीत्यर्थः । भिन्नोपाधीति । न वयं सुखत्वेन दुःखाभावत्वं दुःखत्वेन सुखाभावत्वं वा ब्रूमः , किन्तुतत्तद्देशकाल विशिष्टाभावान्तरत्वेन: अत उदासीनावस्था सिध्यतीत्यर्थः । एवमुदासीनावस्थासंग्रहाभावप्रतिबन्दी पराकृता; द्वयोरपि भावरूपत्वासिद्धिप्रसङ्गप्रतिबन्दीमप्युद्धरति स्वरूपत इति । किंचेति । 'नाहमत्र' त्यत्र अत्र शब्देन सुषुप्त्यवस्था परामृश्यते, सा च ज्ञानेच्छादुःखादिसकलवृत्तिनिवृत्तिरूपा; ततश्च दुःखाभावे ज्ञायमानेऽपि 'नाहमत्र भोग्य' मित्युक्तेर्दुःखाभावस्य भोग्यत्वाभाव उक्तः उत्तरे चात्मनो भोग्यत्वमुक्तम् ; अतो भोग्यत्वेनोक्तस्यात्मनोऽभोग्यत्वेनोक्त दुःख निवृत्तिमात्रत्वम् दुर्वचनमिति भावः ।

नापि पञ्चमः , 'विज्ञानमानन्दं ब्रह्म' इति सहप्रयोगेण व्यतिरेकसिद्धेः , न हीदं निघण्टुवत् पर्यायबोधनोपक्षीणं सङ्कीर्तनरूपं वा वाच्यम् , येन सहप्रयोगः सह्येत । यावता च विज्ञानत्वं ब्रह्मणः समर्थितम् ; तावतैव हि भवताऽप्युपरन्तव्यम् । किमानन्दत्वोपपादनप्रयासेन ॥ अपर्यायताबोधनिवृत्त्यर्थोऽयं प्रयास इति चेन्न ; तथाविधविवादाभावात् ! तत्सद्भावेऽपि महता प्रयासेनापि सर्वलोकप्रसिद्धस्यापर्यायत्वस्यापि दुरपह्नवत्वात् । दुःखरूपाणि च कानिचित् विज्ञानान्युपलभ्यन्ते , तदपि ज्ञानमात्रस्य सुखरूपत्वे विरुद्धम् ॥ भ्रान्त्या तदुपलम्भ इति चेन्न , विरोधिनि विज्ञानात्मकत्वे प्रकाशमाने तद्विरोधिनो दुःखरूपत्वस्यारोपासम्भवात् । न हि सुखरूपतया प्रकाशमाने दुःखरूपत्वं कदाचिदध्यस्यति ।

नापि षष्ठः , बहिष्कृतानुकूलस्य तस्याऽऽनन्दशब्दवाच्यत्वायोगात् । तत्प्रतीकारे उक्तदूषणानुवृत्तेरेव दुष्टत्वात् । ज्ञानात्मकत्वातिरेकविकल्पेनापि दत्तमेवोत्तरं मन्तव्यमिति । अतो न कथञ्चिदपि निर्विशेषचिन्मात्रवादिनस्तदानन्दत्वसिद्धिरिति ॥

॥ इति शतदूषण्यां निर्विशेषब्रह्मण आनन्दत्वभङ्गवादः सप्तपञ्चाशः ॥५७॥



प्रसाद—आनन्दत्व को ज्ञानात्मकत्व इसलिए माना जा सकता है, क्योंकि 'विज्ञानमानन्दंब्रह्म' इस वाक्य में विज्ञान और आनन्द इन दोनों पदों का एक साथ प्रयोग होने से विज्ञान और आनन्द ये दोनों ब्रह्म के विशेषण भी सिद्ध होंगे। यह वाक्य कोश के समान पर्याय बोधन के समान नाम सङ्कीर्तन रूप नहीं है। जिससे कि विज्ञान और आनन्द इन दोनों पदों का सहप्रयोग उपपन्न हो सकेगा। आपको भी उतना ही प्रयास करना चाहिए जितने प्रयास से ब्रह्म का विज्ञानत्व सिद्ध हो, ब्रह्म के आनन्दत्वोपपादन के प्रयास से आपको कौन सा लाभ है? यह भी नहीं कह सकते हैं कि आनन्द आदि पद ज्ञानके पर्याय वाची मात्र नहीं हैं, यही सिद्ध करने के लिए हम यह प्रयास कर रहे हैं; क्योंकि पर्यायता के विषयमें कोई भी विवाद नहीं है। पर्यायता के रहने पर भी इस महान् प्रयास के द्वारा भी सर्वलोक प्रसिद्ध पर्यायत्व का आप अपलाप नहीं कर सकते हैं। किञ्च कुछ विज्ञान दुःखरूप से उपलब्ध होते हैं, सम्पूर्ण ज्ञान को सुख स्वरूप मानने पर उन उपलब्ध दुःखरूप ज्ञानों का भी विरोध होगा। यदि कहेंकि ज्ञानों की दुःख रूप से उपलब्धि भ्रान्तिरूप है, तो यह भी नहीं कह सकते हैं, विरोध विज्ञानात्मकता के प्रकाशित होते रहने पर, विज्ञान में विरोधी दुःख रूपता का आरोप असम्भव है। सुखरूपता की प्रतीति होते रहने पर ज्ञान में दुःखरूपता का अध्यास असम्भव है। छठा पक्ष इसलिए नहीं माना जा सकता है कि आनुकूल्य रहित उस वस्तु को आनन्द शब्द से नहीं अभिहित किया जा सकता है। यदि उसमें अनुकूलता मानें तो उपर्युक्त दोष अवश्य होंगे। किञ्च प्रश्न है कि वह वस्तु ज्ञानात्मक है या नहीं। इन दोनों पक्षों में होने वाले दोषों को ऊपर ही प्रदर्शित किया गया है। इस तरह निर्विशेष ज्ञान मात्र ब्रह्म की किसी भी प्रकार आनन्दत्व की सिद्धि नहीं हो सकती है।

इस तरह शतदूषणी के सत्तावनवें 'निर्विशेष ब्रह्मणः आनन्दत्व भङ्ग' नामक वाद का प्रसाद समाप्त हुआ॥



किञ्च ज्ञानत्वस्यैव आनन्दत्वरूपत्वे ज्ञानत्वं प्रसाध्यापि पुनरानन्दत्वसाधनप्रयासात्मकत्वप्रवृत्तिव्याघात इत्याह यावतावेति। अपर्यायतेति। ज्ञानस्यानन्दशब्दवाच्यत्वमेव साध्यत इत्याशयः। तथाविधेति। आनन्दस्यानन्दशब्दवाच्यत्वे अविप्रतिपत्तेः, ज्ञानत्वानन्दत्वयोरभेदे ज्ञानेऽपि न तद्विप्रतिपत्तिरिति भावः। किंच न ज्ञानत्वमानन्दत्वं गतत्वादित्याह दुःखेति। दुःखादिकमपि ज्ञानविशेष इति स्वमतेनेदमुक्तम्। तदुपलम्भ इति। ज्ञाने दुःखत्वोपलम्भ इत्यर्थः ज्ञानत्वस्य विरोधित्वाभावादारोपसम्भव इत्यत्राह नहीति तथाच ज्ञानत्वमेव सुखत्वमित्युक्तत्वात् ज्ञानत्वे प्रकाशमाने दुःखत्वारोपो न सम्भवतीत्यर्थः।

अस्तु यत्किञ्चिदानन्दत्वम्; आनन्दत्वेनाभिमतस्यानुकूल्यमस्ति न वा? द्वितीये दोषमाह बहिष्कृतेति। आद्ये दोषमाह तत्प्रतीकार इति। आनुकूल्याङ्गीकारेण तत्प्रतीकार इत्यर्थः। उक्तेति। तृतीय पक्षोक्तदूषणेनेत्यर्थः।

ज्ञानात्मकत्वेति। तदानुकूल्यं ज्ञानात्मकत्वमेव? अतिरिक्तम् वा? अतिरेक निर्विशेषवादापक्रमाद्द्वितीयपक्षोक्तदोषः प्रसज्येत, अनतिरेके सहप्रयोगादुपपत्त्यादिः पंचमपक्षोक्तदोषः प्रसज्येदिति भावः।

यदाह नवीनः—

सुखत्वं हि सुखपदप्रवृत्तिनिमित्ततयानुगतव्यवहारविषयतया व्यावृत्तावेव कल्प्यते, न तु सुखरूप आत्मनि, तत्र तत्कल्पने प्रमाणाभावात्, श्रुतौ सुखपदस्य वृद्धव्यवहारे वृत्त्यवच्छिन्नचैतन्यात्मनि सुखे व्युत्पन्नस्य ज्ञानादिपदवल्लक्षणया आत्मनि प्रयोगात्, ननु यद्यात्मनि न सुखत्वं तह्यात्मा न सुखम्, तस्यैव तत्स्वरूपलक्षणत्वादिति चेन्न,—न सुखत्वं सुखस्य स्वरूपलक्षणम्, तस्य ततोन्यत्वात्, अन्यस्यान्यस्वरूपत्वायोगात्। किंच सुखत्वाश्रयव्यक्तौ विशेषोऽस्ति न वा? न चेत्कथं सुखत्वव्यवस्था? व्यक्तिविशेषं विना सुखत्वस्यैव धर्म इति नियन्तुमशक्यत्वात्, प्रथमेऽपि स विशेषो न धर्मः, तत्रापि व्यवस्थापकाभावात्, व्यक्ति स्वरूपातिरिक्तधर्मा निरूपणाच्च। ततः सुखस्वरूपमेव विशेषः; तदेव तल्लक्षणम्-गोत्वादेरिव तत्स्वरूपम्।

नचैवं ज्ञानानन्दपदयोः पर्यायत्वमेकार्थत्वादिति वाच्यम्,— तत्तद्वृत्ति विशेषशबलस्य तदुपहितस्य वा ज्ञानानन्दपदवाच्यत्वात् प्रवृत्तिनिमित्तभेदेनापर्यायत्वात्। नचैवमानन्दपदलक्ष्यत्वादात्मा नानन्दः स्यादिति वाच्यम्,— लक्षिणः छत्रिपदलक्ष्यत्ववदनौपाधिकप्रीतिविषयतया आनन्दस्यैव आत्मन आनन्दपदलक्ष्यत्वेनानन्दत्वानपायात, तस्मादनौपाधिकप्रीतिविषयो यच्चैतन्यं तदेव सुखम्, तच्च दुःखानुभवदशायामपि स्वासाधारणरूपेण प्रतीयत इति न तदा प्रमानुपपत्तिः। एतेन यदि चैतन्यमेव सुखलक्षणं तदा चैतन्यस्य परेणाप्यभ्युपगामत तदतिरिक्तस्य सिद्धान्तेऽप्यभावाच्चैतन्यं सुखमिति नाममात्रं न अर्थविशेष इति प्रत्युक्तम्, आत्मातिरिक्तम् सुखमिति वदतामप्यनौपाधिकप्रीतिविषयत्वमेव तल्लक्षणम्। आत्मापि चेत्तादृशः कथम् नात्मा सखम् वा न परमताद्विशेषः? प्रमाणंत्वत्रात्मासुखरुपेनिरुपाधिकप्रेमगोचरत्वाद्व्यतिरेकेणानात्मवत।

नन्वत्र न सुखत्वाश्रय इति प्रतिज्ञार्थः, केवल आत्मनि तदभावात्, अतएव न सुखत्वविशिष्टाभिन्न इत्यर्थः, केवलस्य सुखत्वविशिष्टाभेदे केवलेऽपि तत्प्रसङ्गात्, नापि दुःखान्यत्वं साध्यम्; सिद्धसाधनात्, नापि दुःखविरोधित्वं दुःखात्यन्ताभावत्वेनार्थान्तरत्वादिति चेन्न; निरवयवसुखपदवाच्याभेदस्य साध्यत्वात्, अत्र स्वमते वृत्तेरपि सुखपदवाच्यत्वादभेदसाधने बाध इति निरवयवेत्युक्तम्, वस्तुतस्त्वेतद्विशेषणं विनापि बाधितसखपदवाच्यांशम विहायाबाधितस्वरुपसुखभेदाभावमादाय साध्यं सिध्यति, तथा च न बाधपरिहाराय विशेषणम्, किन्तु सुखपदवाच्यवृत्तिभेदस्य साध्यव्यतिरेकस्यात्मनि सत्वेऽपि हेतुव्यतिरेकाभावात् तत्र व्यतिरेकव्यभिचारपरिहाराय, न च निरवयवसुखपदवाच्यसुखत्वभेदोऽप्यात्मन्यस्तीति व्यतिरेकव्यभिचारस्तदवस्थ इति वाच्यम्, वृत्तिविशेषानुगतात्मस्वरुपसुखस्यैव सुखानुगतबुद्धिविषयतया सुखत्वरूपत्वेन तस्य तद्भेदाभावात्, यद्वा परमप्रेमास्पदताप्रयोजकरूपाभेदः साध्य इति।

तदसत् परमते हेतोः स्वरुपासिद्धेः अहं भूयासमित्यत्राहमर्थस्यैव निरुपाधिकप्रेमगोचरत्वदर्शनात् सुखं मे भूयादित्यत्राप्युपपत्त्यादिमतो लोकप्रसिद्धस्य सुखत्वाश्रयस्यैव निरुपाधिकप्रेमगोचरत्वदर्शनात्। नचोभयत्रापि सुखस्वरुपचैतन्याभेदादेव प्रेमेति वाच्यम्, अद्यापि त्वदभिमतात्मनः सखत्वासिद्धेः संदिग्ध व्यभिचारात्। अत एवाहमर्थ व्यभिचारः।

किञ्च—सुखपदवाच्या हि वृत्तिरेव ; तस्यामेव प्रवृत्तिनिमित्तयोगस्य त्वयाभिधानात, चैतन्यस्य प्रवृत्तिनिमित्तयोगाभावात, सुखवृत्तितादात्म्यमात्राध्यासाद्योगाभावात, सुखवृत्तितादात्म्याध्यासात सुखपदवाच्यत्वे शुक्तेरपि रजत पदवाच्यताप्रसङ्गात, तथा च साध्याप्रसिद्धिः ; सखरुपत्वासिद्धावपि सुखरुपत्वासिद्धावपि सुखत्वरुपत्वसिध्या अर्थान्तरत्वञ्च । द्वितीयसाध्यमप्यनुपपन्नम्, परमप्रेमास्पदताप्रयोजक रुपाभेदेऽपि परमप्रेमास्पदत्वासिद्धे रर्थान्तरत्वात ।

किंच-मोक्षदशायां ब्रह्मणः उपादेयत्वसिध्यर्थं हि श्रतिरानन्दत्वं प्रतिपादयति, तत्रापि स्वरुपमात्रस्य स्वप्रकाशादिसिद्धत्वात तावन्मात्रप्रतिपादनेऽप्युपादेयत्वासिद्धेः सत्यज्ञानादिपदैस्तत्सिद्धेश्च न तस्य प्रतिपाद्यता । धर्मप्रतिपादने चाद्वैतहानिः । धर्मस्य मिथ्यात्वे तु कल्पितप्रपंचाधिष्ठानस्य ब्रह्मणः परमार्थतो निष्प्रपंचस्वरुपत्वात कल्पितानन्दत्वपरमप्रेमास्पदताकस्य ब्रह्मणः तद्विपरीतस्वरुपं परमार्थः स्यात् । तदिदमुक्तम् प्रथमविकल्पदूषणे "ब्रह्मणोऽनानन्दत्वमेव परमार्थः स्या" दिति । यच्च सुखत्वाश्रयव्यक्तौ विशेषोऽस्ति नवेत्यादि, तन्न, तत्र विशेषो यदि भेदः, सोस्त्येव, सत्स्वरुपस्य तदितरसमस्तभिन्नत्वात, यदि सुखत्वाश्रयप्रयोजको धर्मविशेषः, स नास्त्येव न चैवं सुखत्वाव्यवस्थापत्तिः, स्वरुप विशेषेऽपि तत्पर्यनुयोगस्य सुशकत्वात् । यच्च ज्ञानानन्दपदयोरपर्यायत्वसाधनम् ; तदपि न सुखात्मकवृत्तौ ह्यनुगतव्यवहारनिमित्तमानन्दत्वमधिष्ठानसुखस्वरुपमेवेति त्वयोक्तम्, तथा ज्ञानत्वमपि । अतो ज्ञानत्वानन्दत्वयोरभेदात्स्यादेव पर्यायत्वम । "विज्ञानमानन्द" मित्यादौ आनन्दपदलक्ष्यत्वेऽनानन्दत्वापत्तिश्च । न च छत्त्रिपदलक्ष्यत्वेऽप्यानन्दस्वरुपानपायः ; तत्र छत्त्रिणोऽपि गमनस्य प्रमाणान्तरसिद्धत्वादजहल्लक्षणा, अत्र तु न स्वरुपमानन्द इत्यत्र प्रमाणान्तरमस्ति ।

किंच आनन्दत्वस्य वृत्तिगतप्रवृत्तिनिमित्ततया तव वृत्तेरेव विशेष्यत्वात जहल्लक्षणैव न च तदभेदाध्यासाच्चैतन्यमपि वाच्यम ; दुःखपदेपि वृत्त्यवच्छिन्न चैतन्यस्य वाच्यत्वापत्तिः । अजहल्लक्षणाया मुख्यत्वात्तत्सिध्यर्थमेव सुखपदवाच्यं वृत्त्यवच्छिन्नचैतन्यमिति चेन्न, लक्षणामुख्यत्वाय शक्तिगौरवस्यान्याय्यत्वात् । किंच एवं शक्तिकल्पनायामपि आनन्दत्वं वृत्तावेव न चैतन्य इति कथं तदानन्द स्वरुपम् ?

एतेन लाघवेनानन्दपदस्य विशेष्यस्वरूपलक्षकत्वात्तदेव ब्रह्मानन्दस्वरूपमित्यत्र प्रमाणमिति निरस्तम् । यच्चानौपाधिकप्रीतिविषयत्वमेव सुखलक्षणम तच्चात्मन्यपीति, तन्न, अनौपाधिकत्वं यद्यन्येच्छानधीनत्वं तदा तवाहङ्कारेति व्याप्तिः । यद्यन्यसम्बन्धानधीनत्वम, तदा चैतन्ये असम्भवः; अहमर्थसम्बन्ध प्रयुक्तत्वात्तत्र प्रेम्णः, सर्वेषामपि हि अहं भूयासं मम सुखं भूयादिति स्वान्तःकरणावच्छिन्नचैतन्ये स्वसम्बन्धिसुखे च निरुपाधीच्छा भवति, न तु देवदत्तो भूयात तत्सुखं भूयादिति ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपाद सेवासमधिगतपरादरतत्त्वयाथात्म्येन

तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषण्यां व्याख्यायां चण्डमारुताख्यायां निर्विशेषब्रह्मण आनन्त्यभङ्गः सप्तपञ्चाशः स्कन्धः ॥५७॥



## ॥ अथ निर्विशेष ब्रह्मणो नित्यत्वभङ्गवादः अष्टपंचाशः ॥५८॥

पूर्ववृत्तचतुष्केऽपि पूर्वत्वेनोपवर्णिते । नित्यानित्यविवेकेऽत्र नित्यत्वं वो निरस्यते ॥

प्रसाद—अद्वैती विद्वान् ब्रह्म जिज्ञासा के पूर्ववृत्त रूप से साधन चतुष्टय को मानते हैं । उस साधन चतुष्टय में भी वे नित्यानित्यविवेक को सर्वप्रथम मानते हैं । नित्य ब्रह्म और अनित्य तद्व्यतिरिक्त वस्तुओं के स्वभाव का ज्ञान ही नित्यानित्यविवेक है । वाद में अद्वैताभिमत निर्विशेष ब्रह्म के नित्यत्व का खण्डन किया जा रहा है ।

पूर्ववृत्तेति । मुमुक्षापर्यन्तम् हि साधनचतुष्टयान्तर्गतं सर्वं नित्यानित्यवस्तुविवेकसाध्यम् , अतो नित्यत्वसिद्धावेव नित्यानित्यवस्तुविवेकपूर्वकं पूर्ववृत्तचतुष्कं सिद्धयति, तच्च नित्यत्वं त्वन्मते न सम्भवतीति शास्त्रारम्भ एवोच्छिद्य तेति भावः ।

श्रूयते हि–; 'नित्यं विभुं सर्वगतम्' ; 'नित्यो नित्यानाम्' ; इत्यादिभिरात्मतत्त्वनित्यत्वम् । तत् भवत्पक्षे नोपपद्यते , ब्रह्मव्यतिरिक्तमविद्याकालादिकं स्वरूपतोऽपि सर्वमनित्यं ब्रह्मैकमेव नित्यमिति हि वः सिद्धान्तः । तदेतत् ब्रह्मासाधारणनित्यत्वम् (१) किं सर्वकालसत्तारूपम् (२) उत कालावच्छेदनिवृत्तिरूपम् , (३) अथवा प्रध्वंसरहितत्वम् , (४) आहोस्विदबाधितत्वम् ; [५] उत निर्विकारत्वम् , [६] यद्वा उभयावधिरहितत्वम् , [७] किञ्चिद्धर्मान्तरं वा ?

प्रसाद––ब्रह्म के स्वरूप का वर्णन करते हुए श्रुतियाँ बतलाती हैं कि; ब्रह्म नित्य, विभु एवम् सर्वव्यापक है । नित्यो नित्यानाम्' श्रुति ब्रह्म की नित्य आत्माओं की अपेक्षा भी नित्य बतलाती है । इन श्रुतियों से आत्मा के नित्यत्व की सिद्धि होती है । अद्वैत मत में आत्मा की नित्यता उपपन्न नहीं होती हैं । आपके मत में केवल ब्रह्म ही नित्य है; ब्रह्म से भिन्न अविद्या तथा काल आदि सबके सब अनित्य हैं । प्रश्न है कि ब्रह्म की नित्यता (१) सभी कालों में सत्ता रूप हैं ? (२) या काल की सीमा की निवृत्ति रूप हैं ? (३) या प्रध्वंस रहितत्व रूप है ? (४) या बाधितत्व रूप हैं ? (५) या निर्विकारत्व रूप है ? (६) या आद्यन्तरहितत्व रूप है ? (७) या कोई धर्मान्तर रूप हैं ?

श्रूयतेहीति । तथा च श्रुतिसिद्धत्वान्नित्यत्वानुपपत्तौ नेष्टप्रसङ्ग इति भावः । वक्ष्यमाणाविद्याकालातिव्याप्त्यादिदूषणोपयोगितया वा ब्रह्मव्यतिरिक्तमिति । ब्रह्मणोऽपि तत्तद्रूपत्व-

च्छिन्नसंविद्रूपेणानित्यत्वात्तद्व्यावृत्त्यर्थं माह स्वरूपतोपीति । च: सिद्धान्त इति । नित्यानित्यविवेकपूर्ववृत्तत्ववादिनां च इत्यभिप्रायेण च इत्युक्तम् ।

नाऽऽद्यः, अविद्याया अपि नित्यत्वप्रसङ्गात् । साऽपि हि सर्वेण कालेन सम्बध्यत एव, सर्वस्यापि कालस्य तत्कार्यत्वाभ्युपगमेन तदसम्बन्धानुपपत्तेः ॥ साऽपि कदाचिन्निवर्तिष्यत इति चेत्, किमनेन, तन्निवृत्तौ तदुपादानकालावस्थानायोगात् तदसम्बद्धकालासिद्धेः ॥ सर्वकालसम्बन्धे सत्यपि सर्वकालसत्ता नास्तीति विशेष इति चेत्–तर्हि नित्यत्वलक्षणे सर्वकालपदवैयर्थ्यम्, सत्त्वे नित्यत्वमित्येतावतैव ब्रह्मव्यतिरिक्त सर्वव्यवच्छेदात् । न चैवमस्त्विति वाच्यम्, सच्छब्दनित्यशब्दयोरपर्यायत्वेनैव प्रसिद्धेः । अतः सर्वस्मिन् काले स्वरूपलाभमात्रमेव नित्यत्वं वक्तव्यम्; तच्चाविद्यायामपि समानमिति न ततो विवेकः ।

प्रसादः—उसे सर्वकाल सत्ता रूप मानें तो अविद्या के भी नित्यत्व का प्रसङ्ग होगा, क्योंकि अविद्या का भी सभी कालों से सम्बन्ध होता है । क्योंकि सम्पूर्ण काल अविद्या के कार्य हैं, अतएव उसका सभी कालों से सम्बन्ध होगा ही । यदि कहेंकि उसकी भी कभी न कभी निवृत्ति होती ही है' तो इस कथन से आपको कोई भी लाभ इसलिए नहीं हैं, कि अविद्या की निवृति होने पर अविद्योपादानक काल की भी निवृत्ति हो जाने से, ब्रह्म से सम्बद्ध काल की भी सिद्धि नहीं हो सकती है । यदि कहें कि सभी कालों से सम्बन्ध रहने पर भी सभी काल में उसकी सत्ता नहीं रहती । तो फिर नित्यत्व के लक्षण में सर्वकालपद का प्रयोग व्यर्थ होगा । सत्ता ही नित्यता है, इतने मात्र से उसका ब्रह्मव्यतिरिक्त सभी वस्तुओं से व्यवच्छेद हो जायेगा । किन्तु आप ऐसा भी इसलिए नहीं स्वीकार सकते हैं कि-सत् शब्द नित्य शब्द का पर्याय है । अतएव सभी कालों में स्वरूपतः रहना ही नित्यता है । और इस प्रकार की नित्यता आपके अभिमत अविद्या में भी है । अतएव अविद्या से ब्रह्म का भेद पूर्वक ज्ञान नहीं हो सकता है ।

तत्कार्यत्वेति । तदुपादेयत्वाभ्युपगमेनेत्यर्थः ।

नन्वविद्यानिवृत्तिरपि कदाचिद्भविष्यति, तत्काले च नाविद्येति न सर्वकालसम्बन्धित्वमिति शङ्कते सापीति । किमनेनेति । कदाचिन्निवर्तिष्यत इति वचनमपार्थमित्यर्थः । तन्निवृत्ताविति । उपादानोपादेययोरभेदादिति भावः ।

न च तयोस्तादात्म्यमेव, तच्च भिन्नत्वेसत्यभिन्नसत्ताकत्वमिति वाच्यम्, भेदाङ्गीकारेऽवयविवादप्रसङ्गात्, तादात्म्यस्य निरस्तत्वाच्च । किञ्च यद्यविद्यानिवृत्त्यनन्तरम् तदधीनकालस्य निवृत्तिः, तदा कालनिवृताधिकरणकालान्तरस्वीकारप्रसङ्गः ।

नन्वविद्यानिवृत्त्यनन्तरकाले कालनिवृत्ति न ब्रूमः किन्त्वविद्यानिवृत्तिदशायामपि कालो वर्तते निवर्तते चेत्येवं ब्रूमः इति चेत्, यद्यविद्यानिवृत्तिजन्या कालनिवृत्तिर्न स्यात् तदाविद्यया सहैव कालस्तत्त्वज्ञानान्निवर्तेत, नैव वा निवर्तेत, यथविद्यानिवृत्तिजन्या तदा तदुत्तरकालोऽवश्य-

मङ्गीकर्तव्यः, उत्तरकालं विना तदसम्भवात् । किंच अविद्यासम्बद्धावरणादेर्नित्यत्वप्रसङ्गः सर्वथा दुस्तरः । न सर्वकालसत्त्वेत्यनेन सर्वकालसम्बन्धो विवक्षितः, किन्तु सर्वकालसत्यत्वमिति शङ्कते सर्वकालेति । नित्यत्वलक्षणे-नित्यत्वात्मके ब्रह्मासाधारणधर्म इत्यर्थः ।

ननु सत्तामात्रे विवक्षिते नित्य इति व्यवहाराभावात् सन्नित्यशब्दयोः पर्यायत्वप्रसङ्गाच्च सर्वकालसत्त्वमेव नित्यशब्दार्थः, अतो न वैयर्थ्यमपीत्यत्राह अतः सर्वस्मिन्निति । व्यवहारापर्यायत्वाभ्यां सर्वकालप्रवेशे आवश्यके सत्यत्वांशो न प्रवेश्यो गौरवात्, तदप्रतिसन्धानेऽपि नित्यत्वव्यवहाराच्चेति भावः ।

न द्वितीयः, कालस्यापि तत्सद्भावेन ततो विवेकासिद्धेः । न कालः कालान्तरेणावच्छिद्यते, तथा सति अनवस्थानात् । नापि स्वेन; कर्मकर्तृविरोधात् । न च स्वतः पूर्वापरभावेनावस्थितैः स्वांशैरवच्छिद्यत इति वाच्यम्, तथा सति वस्तूनामिव कालस्यापि क्षणिकत्वादिप्रसङ्गात् ॥ समस्तस्वांशसमुदायावच्छेदान्न दोष इति चेत्-तत्र कोऽयमवच्छेदो नाम ? किं तत्सम्बन्धित्वमात्रम्, किं वा तत्पूर्वोत्तरकालयोरविद्यमानत्वम्, उत तत्समकालभावित्वम् यद्वा तदात्मकत्वमेवेति । आद्ये ब्रह्मणोऽप्यनित्यत्वप्रसंगः, तत्सम्बन्धस्यावर्जनीयत्वात्, तन्मिथ्यात्वात् तत्परिहारे घटादेरपि नित्यत्वप्रसंगात् । द्वितीये पूर्वोत्तरकालशब्दार्थासिद्धिः । न हि कालात्पूर्वं पश्चाच्च 'कालोऽस्ति' इति बालिशोऽपि ब्रूयात् । एवं नास्तीति न ब्रूयादेव, स्ववचनविरोधप्रसंगात् । अतएव च कालस्यानाद्यन्तत्वसिद्धिरिति कुतस्ततो विवेकः ? तृतीयेऽपि कालान्तराभावेन समकालशब्दार्थासिद्धिः चतुर्थे तु घटादेर्नित्यत्वप्रसंगः, कालांशतादात्म्यलक्षणकालावच्छेदाभावात् ।

प्रसाद—कालावच्छेदरहितत्व रूप भी नित्यत्व को नहीं माना जा सकता है, क्योंकि नित्यत्व के लक्षण में काल का सदभाव बना रहता है । अतएव काल से ब्रह्म का विवेक (भेद पूर्वक ज्ञान) नहीं हो सकता है । एक काल दूसरे काल के द्वारा अवच्छिन्न ( व्यावर्तित ) नहीं होता है । एक काल को दूसरे का अवच्छेदक मानने पर अनवस्था दोष होगा । काल स्वयम् भी अपना अवच्छेदक नहीं होता, क्योंकि समान क्रिया में एक ही वस्तु का कर्तृत्व एवम् कर्मत्व व्याहत है । यह भी नहीं कहा जा सकता है कि एक ही काल स्वयम् पूर्वकाल में विद्यमान एक अंश के द्वारा अपने दूसरे अंश से उत्तर काल में रहकर व्यवच्छिन्न होता है, क्योंकि ऐसा मानने पर अन्य वस्तुओं के समान काल के भी क्षणिकत्व का प्रसङ्ग होगा । यदि कहें कि काल में यह दोष समस्त अपने अंश समुदाय से अवच्छिन्न होने के कारण नहीं है, तो प्रश्न है कि; यह अवच्छेद पदार्थ क्या है ? (१) क्या तत् सम्बन्धित्व मात्र ? (२)या उसके पूर्व एवम् उत्तर काल में अविद्यमानता ? (३) या तत्समकाल भावित्व ? (४) या तदात्मकत्व ? आद्ये इत्यादि—तत्सम्बन्धित्व मात्र मानने पर ब्रह्म की भी अनित्यता का प्रसङ्ग होगा । ब्रह्म का काल से सम्बन्ध होना अनिवार्य है । यदि काल सम्बन्ध को मिथ्या मानकर ब्रह्म के अनित्यत्व का परिहार करें

तो घटादि की भी नित्यता का प्रसङ्ग होगा । यदि दूसरा विकल्प मानें तो पूर्वकाल एवम् उत्तरकालकी सिद्धि ही नहीं हो सकती है । कोई मूर्ख भी नहीं कह सकता है कि काल रहता है। इस तरह स्ववचन विरोध के प्रसङ्ग के ही कारण वहाँ काल हो ही नहीं सकता है । इसीलिए तो काल को अनादि और सान्त माना जाता है । अतएव काल से ब्रह्म का विवेक कैसे हो सकता है? तीसरा पक्ष मानें तो कालान्तर का अभाव होने के कारण समकाल शब्द के अर्थ की सिद्धि ही नहीं हो सकती है । चौथे पक्ष में तो कालात्मक होने के कारण घटादि के भी नित्यत्व का प्रसङ्ग होगा । क्योंकि कालावच्छेद कालांश के तादात्म्य रूप नहीं है ।

स्वांशनामपि पौर्वापर्यार्थं कालान्तरापेक्षां परिहरति स्वतइति । क्षणिकत्वादीति । क्षणकालवादिनां सूक्ष्मस्थूलतरादिकालानां प्रत्येकमवच्छेदकत्वे ततः सूक्ष्मादि कालमात्रस्थायित्वं स्यादित्यर्थः ' प्रत्येकं स्वांशानामवच्छेदकत्वे ह्ययं दोषः. समस्तांशसमुदायस्यावच्छेदकत्वे तु न दोष इति शङ्को समस्तस्वांशसमुदायेति । तत्सम्बद्धस्य-समस्तस्वांश सम्बद्धस्येत्यर्थः . वस्तुतस्तु समस्त कालांशसम्बन्धो नित्यत्वमेव नानित्यत्वमिति बोद्धव्यम् तन्मिथ्यात्वादिति . पारमार्थिककाल संबन्धस्याभावो नित्यत्वमित्यभिप्रायः द्वितीय इति कालांशसमुदायापेक्षया पूर्वोत्तरकालयोरभावादित्यर्थः नहीति अंशापेक्षयाकालौ दृश्यपेक्षयापीति वक्तव्यम ,अंशी चात्र कालः, तदपेक्षया च पूर्वोत्तरकालौ न संभवतः कालान्तराभावात्, अभेदे तु पौर्वापर्यासम्भवादिति भावः । कालांशसमुदायेनावच्छेदो नाम तत्पूर्वोत्तरकालयोः कालस्याविद्यमानत्वम् , तत्र तत्पूर्वोत्तरकालयोरुक्तस्य सम्भव उक्तः। अथ तत्र कालस्याविद्यमानत्वोक्तेरप्यसम्भवमाह एवमिति । अतएवेति । पूर्वोत्तरकालाभ्यां तत्राविद्यमानत्वाच्चेत्यर्थः । पूर्वोत्तरकालौ तत्रा विद्यमानत्वं च यतो व्याघातान्न सम्भवति तत एव कालस्यानाद्यन्तभावस्त्वयावाच्य इति कालाद्विवेको ब्रह्मणो न सिद्ध्यतीत्यर्थः ।

प्रध्वंसरहितत्वं नित्यत्व पक्षं दूषयति न च तृतीय इति । ननु प्रध्वंसस्यापि प्रध्वंसस्तत्वज्ञानाद्भवति, अनवस्था तु ब्रह्मण एव तत्प्रध्वंसत्वेन परिहृता, अतएव मुक्तावपि ध्वंसप्रवाहानन्त्यकल्पनादपि प्राथमिक ध्वंस एवानन्तोऽस्त्विति शङ्का च परिहृतेति चेत् , तर्हीदानीन्तनघटादिप्रध्वंसोपि ब्रह्मैव स्यादिति ध्वंसोच्छेदः । न च मुद्गराद्यनन्तरभावित्वान्न तथेति वाच्यम्-तत्वज्ञानाविद्यानिवृत्त्यनन्तरभावित्वेन ध्वंसध्वंसस्यापि ब्रह्मातिरेकित्वात । अनन्तप्रध्वंसेति , अनन्तपदमसंख्यपरम । परमतेऽबाधितत्वासम्प्रतिपत्तेरुक्तं लोकाभिमतेष्विति । न च बाधेति । यदि नित्यत्वमबाधितत्वम , तर्हि बाधितत्वेन ज्ञात एवानित्यशब्द प्रयुज्येत , घटादिषु नचैवं दृश्यत इत्यर्थः । विकारः परिणामो वा कादाचित्कापृथक्सिद्धधर्मो वा इति विकल्पमभिप्रेत्य प्रथमं दूषयति विकाराणामिति । सर्वलोकेति । पूर्वद्यु: पिण्डात्मनावस्थिता मृदादीनां घटीभूय तिष्ठतीति द्रव्यनित्यस्थैर्यं विकारास्थैर्यं च लोकसिद्धमित्यर्थः । प्रथमपक्षे दोषमाह ब्रह्मणश्चेति । तत्तदुपाध्यवच्छिन्नस्य व्यावहारिकभेदवद्ध कादाचित्कतया उत्पत्तिरप्यस्त्येवेत्यभिप्रायेणाह व्यावहारिकेति । ननु स्वसमानसत्ताकोभयान्तयोरभावो नित्यत्वमिति चेन्न,-अविद्याया अपि नित्यत्वापत्तेः तस्या अपि अन्तद्वयाभावात् । ब्रह्मैव अविद्याध्वंस इति चेत , एवं सत्यविद्यैव ब्रह्मप्रागभाव इति

ब्रह्मापि नित्यं न स्यात् ।

नन्वविद्याया ब्रह्मसमानसत्ताकत्वाभावात् न ब्रह्मणो नित्यत्वहानिरिति चेन्न,-ब्रह्मणोऽप्यविद्यासमानसत्ताकत्वाभावात् तस्या अपि नित्यत्वप्राप्तेः ।

ननु स्वासमानकालीनत्वमप्यन्तविशेषणम् , अविद्या च ब्रह्मसमानकालीनेति न ब्रह्मण्यसम्भव इति चेन्न,-ब्रह्माप्यविद्यासमकालमित्यविद्याया अपि नित्यत्वप्रसङ्गात् । किञ्च यद्यविद्याध्वंसो ब्रह्म, तदा अविद्यैव ब्रह्मध्वंस इति किं न स्यात् ? उत्पत्तिमदभावत्वप्रागभावान्यप्रतियोग्यसमानकालाभावत्वादेर्ब्रह्मण्यपि दुर्वचत्वात् । न च प्रागभावप्रतियोग्यभावत्वं ध्वंसत्वम् , अविद्यैव ब्रह्मप्रागभाव इति वाच्यम् , ब्रह्मण एवाविद्याप्रागभावत्वापत्तेः प्रतियोग्यसमानकालीनानाद्यभावत्वादेरविद्यायामपि दुर्वचत्वात् । ध्वंसप्रतियोगित्वम् प्रागभावत्वमित्यत्रान्योन्याश्रयात् ।

ननु साध्याभावत्वं ध्वंसत्वम् ; ब्रह्म च तत्त्वज्ञानसाध्यम् , यस्मिन्सत्यग्रिमक्षणे यस्य अविद्याव्यतिरेकात्मनो ब्रह्मणः सत्वं यद्व्यतिरेके तस्य ब्रह्मणो व्यतिरेकोऽविद्येत्येवं साध्यत्वलक्षणयोगादिति चेन्न,-अविद्याया अपि तत्त्वज्ञानप्रागभाव साध्यत्वस्य त्वद्रीत्या सत्त्वात् , तथा अविद्यानिवृत्तिप्रतिबन्धकमावरणमिति त्वन्मते अविद्यायास्तदधीनाया उक्तरूपावरणसाध्यत्वसत्वाच्च ।

एतेन उभयान्तवत्वमुभयान्तवत्वप्रतियोगित्वम् ; तच्च यद्यपि व्यावहारिकम् ब्रह्मणोऽस्ति तथापि तत्र तदभावोऽप्यस्ति, अधिष्ठानस्य कल्पितप्रतियोगिकाभावाश्रयत्वात् , अविद्यायाम् तु न तदभावः, तस्या अनधिष्ठानत्वादिति परास्तम् , ब्रह्मणो ध्वंसत्वासिद्धेरुक्तत्वात् ।

ननु पारमार्थिकत्वं राहित्यविशेषणं न प्रतियोगिविशेषणम् , घटादौ च स्वरूपस्य मिथ्यात्वाद्राहित्यमपि बाधितमिति शङ्कां निराकरोति अत एवेति । घटादौ हि उभयान्तवत्वम् व्यावहारिकं तद्राहित्यं च न प्रातिभासिकम् , अप्रतीतेः, समानसत्ताकप्रतियोगिविरोधाच्च न व्यावहारिकम् , अतः परिशेषात् परमार्थ इत्यर्थः । न च घटादौ तद्राहित्यमेव नास्तीति वाच्यम् अबाधितत्वविशेषण वैयर्थ्यादिति भावः ।

ननु माभूदत्राबाधितत्वविशेषणमिति चेन्न , तथापि प्रतियोगिनोपरमार्थत्वे प्रपञ्चे उभयान्तवत्वाभावस्यावश्यंभावादिति । आद्य इति । लोके सर्वकालसम्बन्धित्वादेरेव प्रवृत्तिनिमित्ततयाग्रह इत्यर्थः ।

न च तृतीयः, प्रध्वंसस्य प्रध्वंसाभावेन नित्यत्वप्रसङ्गात् । ततः किमिति चेत् ब्रह्मव्यतिरिक्तानन्तप्रध्वंसनित्यत्वेन ब्रह्मैकमेव नित्यमिति निर्बन्धानुपपत्तिः । नापि चतुर्थः, अबाधिततया लोकाभिमतेषु सत्यर ( म्यग्र) जतादिषु नित्यशब्दप्रयोगादर्शनात । न च लोकमन्तरेण शब्दार्थसम्बन्धसिद्धिः । । न च बाधबुद्ध्या घटादिष्वनित्यशब्दप्रयोगो दृश्यते भवदीयमुपदेशमविदुषां लौकिकानां तेषु तद्बुद्ध्यभावात् । नापि पञ्चमः , विकाराणाम् निर्विकारत्वेन नित्यत्वप्रसङ्गात् । तेषामपि सविकारत्वे नवस्थानात । विकारान्तरोपादा-

न्त्वे च तेषां द्रव्यत्वप्रसङ्गाच्च । ततश्च द्रव्याणामनित्यत्वं तद्विकाराणां नित्यत्वमिति सर्व लोकविरोधादिप्रसंगः । ब्रह्मणश्च निर्विकारत्वानुपपत्तिः स्वावसरे द्रष्टव्या । नापि षष्ठः ; व्यावहारिकोभयान्तवत्त्वस्य संविदात्मके ब्रह्मण्यपि समानत्वात । पारमार्थिकस्य तस्य प्रपञ्चेऽप्यभावेन तस्यापि नित्यत्वप्रसंगात । अत एवाबाधितमुभयान्तराहित्यमित्यपि निरस्तम् , प्रपञ्चगतोभयान्तराहित्यस्याप्यबाधितत्वात् । नापि सप्तमः , तत् किं नित्यशब्दप्रवृत्तिनिमित्ततया लोकव्युत्पत्तिसिद्धम् , उत नेति विचारणीयम् । आद्ये लोक एव प्रतिपक्षः । द्वितीये तु ब्रह्मण औपचारिकनित्यत्वमेव वा पारिभाषिकं वा नित्यत्वमिति अनित्यतायामेव पर्यवसानम् । तथा च कुतो नित्यानित्यवस्तुविवेकः ?

प्रसाद—नित्यत्व को प्रध्वंसरहितत्व रूप भी नहीं माना जा सकता है, क्योंकि प्रध्वंस स्वयम् प्रध्वंस रहित होता है, अतएव प्रध्वंस की ही नित्यतापत्ति होगी । यदि पूछें कि तो इससे क्या हुआ ? तो इसका उत्तर है कि ब्रह्म से भिन्न अनन्त प्रध्वंसों की नित्यता के कारण, आप यह नहीं कह सकते हैं ; कि केवल ब्रह्म ही नित्य है । नित्यत्व को अबाधितत्व रूप भी नहीं माना जा सकता है, क्योंकि लोकमें सत्य रजत को कोई भी नित्य नहीं कहता है ; किन्तु सत्य रजत अबाधित है । शब्द एवम् अर्थ का सम्बन्ध लोक से ही होता है । किञ्च घट आदि में जो अनित्य शब्द का प्रयोग देखा जाता है , वह घटादि के बाधित होने के कारण नहीं, क्योंकि अद्वैत सिद्धान्त में अनिपुण व्यक्ति घटादि को बाधित नहीं मानता । निर्विकारत्व को भी नित्यत्व नहीं कहा जा सकता है, क्योंकि विकार तो स्वयम् निर्विकार होते हैं और निर्विकार होने के कारण उनके भी नित्यत्व का प्रसङ्ग होगा । विकारों का सविकार मानने पर अनन्तापेक्षकत्वरूप अनवस्था होगी । यदि विकारों का उपादान कारण दूसरे विकार को मानें तो उनकी द्रव्यत्वापत्ति होगी , क्योंकि जो उपादान होता है, वह द्रव्य अवश्य होता है । इस तरह द्रव्यों को अनित्य और उनके विकारों का नित्य मानने का प्रसङ्ग होगा , जो सर्वलोक विरुद्ध है । ब्रह्म के निर्विकारत्व की अनुपपत्ति का प्रतिपादन हम करेंगे । आद्यन्तरहितत्व को भी नित्यत्व इसलिए नहीं माना जा सकता है कि जिस तरह व्यावहारिक वस्तुएँ सादि एवम् सान्त होती हैं, उसी तरह ज्ञान स्वरूप ब्रह्म का भी सादित्व एवम् सान्तत्व देखा जाता हैं । पारमार्थिक सादित्व एवम् सान्तत्व का प्रपञ्च में भी अभाव होने के कारण, उभयावधिराहित्य के कारण प्रपञ्च के भी नित्यत्व का प्रसङ्ग होगा । इस तरह प्रपञ्चगत पारमार्थिक उभयान्तराहित्य के सद्भाव कारण यह अबाधित उभयान्तराहित्य रूप छठा पक्ष भी खण्डित हो गया । किसी धर्मान्तर को नित्यत्व इसलिए नहीं माना जा सकता है; कि प्रश्न है कि वह धर्मान्तर नित्य शब्द के प्रवृत्ति निमित्त रूप से लोक व्युत्पत्ति सिद्ध है ? या नहीं ? प्रथम विकल्प मानें तो फिर लोक में तो सर्वकाल सम्बन्धी को ही नित्य कहा जाता है । और इस पक्ष का खण्डन हम कर चुके हैं । दूसरा विकल्प को मानें तो वह ब्रह्म की परिभाषिक अथवा औपचारिक नित्यता होगी । और उसका पर्यवसान अनित्यता में ही होगा । इस तरह आपके मत में नित्यनित्यविवेक कैसे सम्भव है ?

किञ्च संविदनित्येति वदतः सौगतादीन् प्रति किं लोकोपलम्भसिद्धाया विषयग्राहिण्या एव संविदस्त्वया नित्यत्वं साध्यते ? उत लोकोत्तीर्णायाः कस्याश्चित् ? आद्ये

प्रत्यक्षादिविरोधः, विषयनित्यत्वप्रसङ्गश्च। अस्मदादिप्रत्यक्षज्ञानं तावत् घटादिकं स्वसत्ताकाले सन्तं साधयति, न पुनः पूर्वोत्तरकालसत्तां विद्यमानामपि गृह्णाति। तत् कस्य हेतोः ? स्वकालकलितवस्त्ववभासित्वनियमात्। ततश्च यदि स्वयं कालानवच्छिन्ना संवित् स्यात्, विषयस्यापि कालानवच्छेदेन प्रकाशप्रसङ्गः। तेनैवाबाधितेन तन्नित्यत्वमवर्जनीयम्। यदि पुनर्विषयिकालानवच्छेदेन विषयो गृह्यत इति मन्यसे, तथाऽप्येकयैव अस्मदाद्यैन्द्रियकसंविदा विषयस्य यावत्सत्त्वं प्रकाशप्रसंगो दुर्वारः। एवं वर्तमानतया वस्तु गृह्णन्तीष्वनुमानादिसंवित्स्वपि विषयनित्यत्वप्रसंगः समानः। याश्चातीततयाऽनागततया च स्वसंवेद्यं गृह्णन्ति, ता अपि स्वकालापेक्षयाऽतीततयाऽनागततया च वस्तु गृह्णन्तीति स्वयं कालानवच्छेदे स्वविषयाणामप्यतीतत्वागामित्वलक्षणकालावच्छेदो न स्यात्। द्वितीये त्वाश्रयासिद्धिः॥ शास्त्रसिद्धा सेति चेन्न; नित्यतया तत्सिद्धौ अनुमाननैरपेक्ष्यात्, अनित्यतया तत्सिद्धौ तु बाधात्। संविन्मात्रस्य च लोकसिद्धत्वेन शास्त्रागोचरत्वात्।

प्रसाद—किञ्च संवित् को अनित्य मानने वाले बौद्धादिकों के प्रति आप किस संवित् की नित्यता सिद्ध करते हैं, लोक में उपलब्ध तथा विषयों को ग्रहण करने वाली संवित् की ? या किसी लोकोत्तर संवित् की ? प्रथम पक्ष को मानें तो प्रत्यक्ष आदि का विरोध होता है; क्योंकि उस बुद्धि की नित्यता स्वीकारने पर बुद्धि के विषयों की भी नित्यता का प्रसङ्ग होगा। हम लोगों के प्रत्यक्ष ज्ञान के द्वारा घटादि विषयों की वर्तमान काल में सत्ता सिद्ध होती है; उससे घटादि की अतीत एवम् अनागत काल में रहने वाली भी सत्ता की सिद्धि नहीं होती। यह क्यों होता है ? इसलिए कि बुद्धि अपने काल में विद्यमान वस्तु का ही प्रकाशन करती हैं। यदि संवित् स्वयम् नित्य हो तो उसके द्वारा विषयों के भी नित्य प्रकाश का प्रसङ्ग होगा। उस अबाधित ज्ञान के ही द्वारा विषयों के नित्यत्व का प्रसङ्ग होगा। यदि कहें कि विषयों का ग्रहण विषयी के कालावच्छिन्न रूप से नहीं होता है, तो भी हमारे एक ही इन्द्रिज ज्ञान के द्वारा विषय की सत्ता काल पर्यन्त तो प्रकाश अवश्य होना चाहिए। इस तरह से वर्तमान रूप से विषयों का ग्रहण करने वाली अनुमानादि ज्ञानों के भी विषयों के नित्यत्व का प्रसङ्ग होगा। और अपने विषयों का अतीत एवं अनागत रूप से ग्रहण करने वाले बुद्धियाँ भी अपने काल से ही अतीत कालिक रूप से तथा अनागत कालिक रूप से विषयों का ग्रहण करती हैं, यदि वे स्वयम् कालनवच्छिन्न होतीं तो कैसे विषयों को अपने काल से अतीत कालिक एवं अनागत कालिक रूप से ग्रहण करतीं ? यदि आप अलौकिक बुद्धि में नित्यत्व प्रतिपादन करें तो फिर आश्रया सिद्धि होगी। उस अलौकिक बुद्धि को शास्त्रसिद्ध नहीं कहा जा सकता है, क्योंकि यदि वह बुद्धि नित्य है तो, उसको अनुमानादि की अपेक्षा नहीं होगी, यदि अनित्य है तो फिर बाध होगा। किञ्च सभी ज्ञान लोकसिद्ध हैं; अतएव उन्हें शास्त्र का विषय नहीं बतलाया जा सकता है।

नित्यत्वं साध्यत इति। अनुमानेनेति शेषः। उत्तरत्र "नित्यतया तत्सिद्धावनुमाननैरपेक्ष्या" दिति वक्ष्यमाणत्वात्। अस्मदादीति। परोक्षज्ञाने स्वकालीनत्वेन ग्राहकत्वनियमाभा-

वात् प्रत्यक्षेत्युक्तम् । लौकिकप्रत्यक्षं हि स्वाधिकरणतया यावान्काल उभयसम्प्रतिपन्नः तावत्कालीनतया विषयं गृह्णाति, तत्कालपूर्वोत्तरकालीनत्वं विद्यमानमपि न गृह्णाति; तत्र किञ्चित्प्रयोजकम् वाच्यम्, नचान्यदुपलभामहे, अतोऽस्य यावत् स्वकालमात्रावच्छिन्नवस्त्ववभासित्वस्वभावः तत्प्रयोजकः कल्प्यः, ईदृशस्वभावं चेत् ज्ञानं नित्यं स्यात् यावत्पूर्वोत्तरकालावच्छिन्नतया विषयमवभासयेत्, तावत्कालीनत्वम् चाबाधितमिति विषयोऽपि नित्यः स्यात् । न च पूर्वोत्तरकालयो घटोनास्तीति प्रतीत्या बाधस्तदया सुवचः ज्ञानभेदानङ्गीकारात् । स्वेनैव स्वस्य बाधायोगात्; बाधकत्वाभिमतज्ञानान्तरस्यापि नित्यत्वेन परस्परविरोधेन द्वयोरप्येकत्रासम्भवाच्च; सर्वदा अस त्त्वग्रहप्रसंगेन नित्यत्वात्यन्तासत्त्वयोरापत्तेश्चेति भावः । यदि पुनरित्यादि । ज्ञानेन तत्कालावच्छिन्नतया विषयो न गृह्यते किन्तु स्वरूपतः, नचैवमपि नित्यप्रकाशप्रसङ्गः, विद्यमानस्यैव वस्तुनः प्रत्यक्षे भाननियमादिति यदुच्यते तथापि भासकज्ञानस्य नित्यत्वेन यावत्सत्त्वम् विषयः प्रकाशेतेत्यर्थः । क्वचित् पुरुषान्तरसंविदा धारावाहिकादिसंविदा च विषयस्य यावत्सत्त्वम् प्रकाशेनेष्टापादनत्वात्तदर्थं एकये त्युक्तम् । एवमिति । वर्तमानत्वप्रकारिकानुमितिः नित्या चेत् तत्तत्स्वकालावच्छिन्नतयैव विषयम् गृह्णीयादिति विषयस्य नित्यत्वम् स्यादित्यर्थः । याश्चेति ।

किञ्च नित्यत्वं किं स्वरूपम्, उत धर्मः ? पूर्वत्र स्वप्रकाशेनैव नित्यमित्युपलम्भप्रसङ्गः । धर्मत्वेऽपि किं स्वप्रकाशैकवेद्यम्; उत ज्ञानान्तरवेद्यम् ? पूर्वत्र स एव प्रसङ्गः । उत्तरत्रापि किं संविन्निष्ठतया ग्राह्यम्, उतान्यथा ? आद्ये संविदोऽपि ज्ञानान्तरवेद्यत्वसधर्मत्वादिप्रसंगः । अन्तिमे संविन्नित्यत्वासिद्धिः । न हि नित्यत्वम् कस्यचित्सिद्धमित्येतावता संविदो नित्यता सिध्येत् । तथासति अविशेषेण सर्वेषामपि नित्यत्वप्रसंगः एवमानन्दत्वादिधर्मेष्वपि विकल्पदूषणानि निपुणैरनुसन्धेयानि ।

एवं च सति संविन्नित्या अनुत्पन्नत्वात्; यदनित्यम् तदुत्पन्नं यथा घट इत्यनुमानमपि निरस्तम्, प्रागभावेनानैकान्त्यात् । भावत्वे सतीति विशेषणेऽपि भवदभिमताविद्यायामनैकान्त्यम् दुर्वारम् । सा ह्यनादिरन्तवती च भवन्मते ।

प्रसाद-किञ्च प्रश्न है कि नित्यता ब्रह्म का स्वरूप है? या धर्म? स्वरूप मानने पर उसके स्वयं प्रकाश होने के कारण ही उसके नित्योपलब्धि का प्रसङ्ग होगा । यदि धर्म मानें तो प्रश्न है कि वह स्वप्रकाशैकवेद्य है ? या ज्ञानान्तर वेद्य ? स्वप्रकाशैकवेद्य मानने पर उसके नित्योपलब्धि का प्रसङ्ग होगा और ज्ञानान्तरवेद्य मानने पर भी प्रश्न है कि नित्यता का ग्रहण संवित् निष्ठरूप से होता है ? या किसी अन्य प्रकार से ? संविन्निष्ठरूप से नित्यत्व के ग्राह्य होने पर संवित् में भी ज्ञानान्तर वेद्यत्व तथा सधर्मत्व आदि का प्रसङ्ग होगा । यदि अन्य प्रकार से उसको ग्राह्य मानें तो फिर संवित् के नित्यत्व की सिद्धि नहीं हो सकती है । किसी की नित्यता के सिद्ध होने मात्र से संवित् की नित्यता नहीं सिद्ध हो सकती है । यदि सिद्ध हो सकती है तो फिर उसी तरह सबों के नित्यत्व की सिद्धि होगी । इस तरह निपुण लोगों को चाहिए कि वे आनन्दत्व आदि को धर्म मानने पर अद्वैतमत में होने वाले दोषों का

अनुभव करें। इस तरह संवित् नित्य है; क्योंकि वह उत्पन्न नहीं होती, जो उत्पन्न होता है वह घट के समान अनित्य होता है, यह अनुमान भी खण्डित हो गया। क्योंकि प्रागभाव तो उत्पन्न नहीं होता फिर भी वह नित्य नहीं होता। यदि कहें कि भावपदार्थ होने के साथ ही अनुत्पन्न होने के कारण संवित् नित्य है, तो भी आपके अभिमत भावरूपा तथा अनादि अविद्या में यह हेतु अनैकान्तिक है।

ननु स्वापेक्षया अतीतत्वग्रहणं माभूत ; भोजनादितत्तत्क्रियान्तरापेक्षयातीत्वं गृह्णात्विति चेत्, भोक्ष्यमाणः स्नास्यामि भोक्ष्यमाणः स्नामि भोक्ष्यमाणोऽस्नासिषमित्यत्र स्नानस्य भोजनपूर्वकाले सर्वत्र गृहीते भूतभविष्यद्वर्तमानव्यवस्थाया ज्ञानापेक्षया ज्ञानसमानकालक्रियापेक्षया वा वाच्यत्वात्तस्य नित्यत्वात्। उत धर्म इति। अत्र धर्मत्वं स्वरूपातिरिक्तत्वम् विवक्षितम्, न ब्रह्मधर्मत्वम्, उत्तरत्र संविन्निष्ठतया ग्राह्यत्वपक्षे सधर्मत्वापादनात्। धर्मत्व इति। स्वरूपातिरिक्तत्व इत्यर्थः। स एवेति। स्वरूपातिरिक्तस्य स्वप्रकाशवेद्यत्वे तद्धर्मत्वमेव वक्तव्यम्, अतो नित्यमित्युपलम्भप्रसङ्ग इत्यर्थः। नित्यत्वग्राहिज्ञानत्वाबाधितत्वे नित्यत्वस्य सत्यत्वात् सधर्मत्वम् स्यादित्याह सधर्मत्वेति। बाधितत्वेऽनित्यत्वप्रसङ्ग आदिशब्दार्थः। एवम्चेति। संविदो ज्ञानान्तरावेद्यत्वात नित्यत्वानिरूपणाच्चेत्यर्थः।

किञ्च संविच्छब्देन किम् अहमिति प्रत्यक्त्वेन प्रतीयमानमात्मस्वरूपं पक्षीक्रियते, उत सकललोकप्रसिद्धा विषयग्राहिणी वित्तिः, उत सैव सकलविषयाश्रयविरक्ता भवद्भिः सह प्रव्रज्यां गतेति। न प्रथमः; सिद्धसाधनात्। न द्वितीयः, सकललोकविरोधात्; हेतोश्च स्वरूपासिद्धेः करणानां चेन्द्रियादीनाम्, एतस्य चानुमानप्रयोगप्रयासस्य निष्प्रयोजनत्वप्रसंगात्॥ तदभिव्यक्त्यर्थं तदपेक्षेति चेत्, नित्यमभिव्यक्तत्वाभ्युपगमे तदभिव्यक्तेस्तदनपेक्षणात्, अन्यथाऽस्मन्मतप्रसंगात्॥ भवदभिमतनित्य स्वयम्प्रकाशात्मस्वरूपस्यैव संविद्वैशद्यार्थं तदपेक्षेति चेन्न, वैशद्यासम्भवात्, ( ) स्थलान्तरे तस्यानुसन्धेयत्वात्। न च तृतीयः, आश्रयासिद्ध्यादेः प्रागेवोक्तत्वात्॥ अनेनैवानुमानेन तत्सिद्धिरिति चेन्न, अन्योन्याश्रयणात्—तादृशसंवित्सिद्धौ तत्पक्षीकारेणैतदनुमानप्रवृत्तिः तत्प्रवृत्तौ च तादृशसंवित्सिद्धिरिति। अनेनैव न्यायेन, 'अनुत्पन्नत्वात् निर्विकारा' इत्यादिसाध्यप्रयोगो दूषणीयः।

तदेवं ब्रह्मासाधारणनित्यत्वासिद्धेर्न नित्यानित्यवस्तुविवेकः। नित्यमुपादेयमिति सामान्य विवेकमात्रमपि निपुणनिरूपणेन निष्फलमापन्नमिति॥

श्लो—आनन्त्यानन्दनित्यत्वप्रभृतीनां स्वरूपतः।
विभागे सविशेषत्वविभागे त्वसत्यता॥

वस्तु कुछ भी नहीं है, इस श्रुति के आलोक में और उसके अनुसारी सूत्र के स्वारस्य से तत्त्वज्ञ पुरुष ब्रह्म की निर्विशेषता का निश्चय करते हैं। अनेक सूत्रों तथा उनके विषयभूत श्रुतियों में एक वचनान्त निर्देश होने के कारण आत्मा की एकता सिद्ध होती है। उस आत्मा की निर्गुणता की सिद्धि–'न स्थान तोऽपि परस्योभयलिङ्गं सर्वत्र हि' अर्थात् एक ही वस्तु परस्पर विरुद्ध आकार वाली नहीं हो सकती है स्थानादि उपाधियों से भी परब्रह्म में उभयलिङ्गता असत्य है अतएव सर्वत्र अशब्दमस्पर्शमित्यादि श्रुतियाँ ब्रह्म को निर्विशेष बतलाती है। इसी तरह 'भेदादिति चेन्न प्रत्येकमतद्वचनात्' अर्थात् 'विशेषात्मक भेद के कारण निर्विशेष नहीं है; यह नहीं कहा जा सकता है, क्योंकि प्रत्येक विशेषयुक्त में स्वाभाविक निर्विशेष का वर्णन किया गया है।' 'अरूपवदेव तत् प्रधानत्वात्' अर्थात् श्रुतियाँ चूंकि प्रधान रूपसे ब्रह्मको अरूपः वत् बतलाती है अतएव उसका रूपादि विशेषों से रहित रूप से ही निश्चित करना चाहिए।' 'आह च तन्मात्रम्' अर्थात् श्रुति ब्रह्म को चैतन्यमात्र बतलाती हैं' इत्यादि कई अधिकरणोंमें ब्रह्मके विशेषों का निरास किया गया है। ब्रह्म व्यतिरिक्त वस्तुओं की पूर्ण रूप से अनभिव्यक्त स्वरूपता का प्रतिपादन करते हुए सूत्र कहता हैं 'मायामात्रं तु कात्स्र्न्येनानभिव्यक्त स्वरूपत्वात्।' अर्थात् ब्रह्म से भिन्न सम्पूर्ण जगत् मिथ्या है, क्योंकि उसका स्वरूप पूर्ण रूप से अनभिव्यक्त है। 'सम्पद्याविर्भावस्स्वेन शब्दात्' सूत्र में कहा गया है कि 'स्वेनरूपेणाभिनिष्पद्यते' इस श्रुति के 'स्वेन' शब्द से सिद्ध होता है कि परंज्योति को प्राप्त करके जीव का अपना ही स्वरूप आविर्भूत होता है। इस सूत्र में मुक्त जीव के स्वरूपाविर्भाव का प्रतिपादन करके 'अविभागेन दृष्टत्वात्' अर्थात् मुक्तावस्था में जीव का स्वरूप ब्रह्म से अभिन्न रहता है; यह श्रुतियों में देखा जाता है। इस सूत्रमें मुक्त जीवके स्वरूप का ब्रह्म से अविभाग ही फल रूप से निर्दिष्ट है। इस तरह समग्र शारीरक शास्त्र के अनेक सूत्रों में, निष्प्रपञ्च के प्रतिपादन तथा निर्विशेष ब्रह्म की आत्मा से अभेद की प्रतीति होने से उदाहृत कुछ सूत्र व्यतिरिक्त सूत्र भी ब्रह्म की निर्विशेषता का प्रतिपादन करते हैं, यह शास्त्रज्ञों का निर्णय है। और जो वाक्य सगुणब्रह्म का प्रतिपादन करते हैं; उन वाक्यों का तात्पर्य 'गरुडमात्मानम् विजानीयात्' अर्थात् गरुड को ही आत्मा जाने इस वाक्य की भांति उपासना परक हैं और ब्रह्म के कल्पिताकार वाले विशिष्ट ब्रह्म को बतलाते हैं। और क्रमशः मुक्ति की तरह परम्परातः मोक्ष का प्रतिपादन करते हैं। कहीं पर तो कल्पित आकार के द्वारा, शाखा चन्द्रोपदेश न्याय से उपल– क्षण रूप से देखे जाने के कारण सूत्र ब्रह्म के स्वरूप का उपदेश करते हैं। व्यास ही हमारे आदि गुरु हैं, अतएव उपनिषदों के अनुसार चलने वाले हम सब लोगों को उनका ही अनुसरण करना चाहिए। प्रमाणों से विरोध होने के कारण ब्रह्मसूत्रों का अप्रामाण्य अथवा अन्यार्थ परत्व नहीं स्वीकारा जा सकता है, क्योंकि ब्रह्मसूत्र विरोधी ही प्रमाण अप्रामाणिक हैं। किञ्च परस्पर में उन प्रमाणों का ब्रह्म सूत्र के आभि मानिक प्रामाण्य से विरोध भी होगा। तत्–तत् सिद्धान्तों में स्वीकृत प्रमाणों का प्रामाण्य भी आभिमा– निक ही है। अन्यथा अपने सिद्धान्त के ही प्रमाणों के अप्रामाण्य से विरोध होगा। इस तरह प्रमाणों से विरोध होने तथा अविरोध होने, दोनों दशाओं में, ब्रह्मसूत्रों के स्वारस्यानुकूल निर्गुण सिद्धान्त होने से यही बादरायण का सिद्धान्त है; यह निश्चित हो जाने पर अपने हृदय को कोशते हुए आप निर्गुण सिद्धान्त को अपनालें अथवा उसको त्याग हृदय पर हाथ रखकर औपनिषद भिन्न किसी दूसरे पक्ष को स्वीकार कर लें।

अत्रोच्यते, 'अथातो ब्रह्मजिज्ञासा' इति सूत्रमेव तावत् अद्वैतिनां न घटते, चिन्मात्रस्य स्वप्रकाशत्वेन ज्ञानाविषयतया जिज्ञास्यत्वायोगात्। आरोपितगुणविग्रहादि-

विशिष्टस्याविद्यापरिणतिरूपत्वेन सुतरां जिज्ञास्यत्वायोगात् ; ब्रह्मशब्दार्थानुपपत्तेः प्रागेव प्रपञ्चितत्वाच्च। तथा, 'जन्माद्यस्य यतः' इति सूत्रमपि ब्रह्मस्वरूपलक्षणोपदेशपरम्। लक्षणं चासाधारणधर्मः। स कथं निर्विशेषे संघटते ? उपलक्षणत्वेऽपि सुतरां सविशेषत्वमेव। उपलक्षणाकारोपलक्ष्याकारपूर्वप्रतिपन्नाकारविभागविरहात् निर्विशेषस्योपलक्ष्यत्वमपि न सम्भवतीति प्रागेव प्रपञ्चितम्। सामानाधिकरण्यस्य सविशेषार्थनिष्ठत्वस्य न्यायप्राप्तत्वात् सत्यज्ञानादिवाक्ये स्वरूपलक्षणवर्णनापटाटोपोऽप्युत्पाटनीय इत्युक्तं प्रागेव। शास्त्रयोन्यधिकरणमपि शास्त्रगम्यत्वाभावादेव निरस्तम्। तद्गम्यत्वे वा प्रमाणविषयत्वात् दृश्यत्वमेव पाणिं गृह्णाति। व्यावहारिकशास्त्रगम्यत्वं तु व्यावहारिकानुमानगम्यत्ववत् अपध्वस्तम्। भवता च प्रमाणप्रमेय खण्डनात् शास्त्रप्रामाण्यमपि पाषण्डवादैः सपिण्डीकृतमेव। वेदान्तशास्त्रस्यापि तर्कात्मकत्वात् तर्काणां स्वरूपलक्षणादिखण्डनप्रचण्डत्वनेव शरणयतां कस्तर्कं, किं वा तदधीनार्थतत्त्वव्यवस्थापनम् ; कथं च तत्त्वाऽऽवेदकता तत्त्वमस्यादिवाक्यानामिति परिपश्य। तथाच सर्वशास्त्रदुर्भिक्षमिमाध्यमिकोक्तिरेव विजयते, समन्वयसूत्रं च समन्वयमेव हेतुत्वेनोपादत्ते। अन्वयस्तु भेदस्य प्राणबन्धुरिति सर्वलोकविदितमेतत्। ईक्षत्यधिकरणेऽपि तदेवानुविदधाति ; ईक्षणादिगुणयोगस्य मुख्यतयाऽभिधानात्। आनन्दमयाधिकरणे प्राचुर्यार्थमयट्प्रयोगादानन्दाभ्यासस्य हेतुत्वेनोपादानाच्च भेदवाद एव साम्राज्यमाटीकते। आकाशप्राणाधिकरणयोरपि ब्रह्मलिङ्गमेव पुरस्क्रियते। लिङ्गम् पुनरसाधारणधर्मः। निर्विशेषे किं लिङ्गं किं च वा साध्यमिति स्वयमेव विचारय / ज्योतिरधिकरणे चरणाभिधानं मरणायते मृषावादस्य। निर्विशेषस्य कश्चरणः, का वा दीप्तिरनुत्तमेषु लोकेषु ? इन्द्रप्राणाधिकरणेऽपि, 'प्राणस्तथानुगमात्' इत्युपक्रमोपसंहारादिषड्विध तात्पर्यलिङ्गोपेतमहावाक्यसामर्थ्यादिन्द्रान्तर्यामिणो महापुरुषस्यैव प्रसाधनात् सविशेषपरत्वमेव। वाक्यं तावत् अन्विताभिधानेऽपि, अभिहितान्वयेऽपि सविशेषपरमेवेति तत्रतत्र क्रियासमभिहारेण साधितम्/ वाक्यार्थोऽपि प्राणेन्द्रादिवैशिष्ट्यात्मकत्वात् सविशेषरूप एवेति (ह ?)निरूपितः।

एवं शारीरोपक्रमसूत्राणां सगुणब्रह्मैदम्पर्ये समर्थिते त्रिपाद्यामपि अनेनैव न्यायेनार्थतत्त्वं निर्णेतव्यमधिगुणैरन्तेवासिभिः ; स्थालीपुलाकन्यायानुसारस्य न्याय्यत्वात्।

अविरोधाध्यायस्त्राणामादिमाध्यायशेषत्वान्न पृथगभिधेयं तात्पर्यमवशिष्यते। वैराग्येऽस्य लिंगपादयोः संसरतो जीवस्य संसारनिवर्तकस्य च परमात्मनो मिथो वैषम्यमुच्यते। स एव भेदवादः। गुणोपसंहारपादस्य नामैव निर्गुणवादस्य हृदयशूलम्। अंगांगिभावपादोऽपि तस्यैव कर्णज्वरः। तेन त्रिभिरध्यायैः सगुणमेव निर्णीयते। फलाध्याये तु फलनिर्देश एव निर्गुणवादिनां निष्फलं प्रलापमाविष्करोति। परमात्मसेविनो जीवस्यैव सांसारिकफलसाधनपुण्यपापरूपकर्मश्लेषविनाशौ देहादुत्क्रमणमर्चिरादिना देवयानेन गमनं परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पत्तिरपुनरावृत्तिश्चेति। शारीरकचतुष्कमाध्याये निर्गुणम्-शरीरमलक्षितकल्पपरिवारकमविभूतिकं चिन्मात्रमिति पारिभाषिकं ब्रह्म प्रतिपाद्यताम्।

प्रसाद—उपर्युक्त प्रकार का पूर्वपक्ष उपस्थित होने पर सिद्धान्ती कहते हैं-अद्वैती विद्वानों के मत में 'अथातो ब्रह्मजिज्ञासा' सूत्र ही नहीं समन्वित होता है क्योंकि उनका अभिमत ब्रह्म ज्ञानमात्र तथा स्वयंप्रकाश है; अतएव वह ज्ञान का विषय नहीं बन सकता, फलतः वह जिज्ञास्य नही हो सकता है। आरोपित गुणों तथा विग्रहों से विशिष्ट ब्रह्म भी अविद्या का परिणाम होने के कारण जिज्ञास्य नहीं हो सकता है। किञ्च पहले ही मैं कह चुका हूँ कि अद्वैत मत में ब्रह्मशब्द का अर्थ अनुपपन्न है। किञ्च-'जन्माद्यस्य यतः' सूत्र भी ब्रह्म के स्वरूप लक्षण को बतलाता है। वस्तु का असाधारण धर्म ही उसका लक्षण होता है। वह निर्विशेष ब्रह्म में नही हो सकता है। यदि उस धर्म को ब्रह्म का उपलक्षणभी मान लिया जाय तो भी ब्रह्म की सविशेषता सिद्ध होती है। यह मै पहले ही विस्तार के साथ कह चुका हूँ कि निर्विशेष ब्रह्म उपलक्ष्य भी नहीं हो सकता है क्योंकि उपलक्षण के आकार का उपलक्ष्यभूत वस्तु के आकार की भिन्नता की प्रतीति पूर्वप्रतीत वस्तु के आकार से नहीं होती है। यह न्याय प्राप्त अर्थ है कि सामानाधिकरण्य वाक्य सविशेषनिष्ठ होता है. अतएव 'सत्यम् ज्ञानम्' इत्यादि वाक्य में स्वरूप लक्षण वर्णन का आडम्बर भी खण्डनीय है यह भी मैं कह चुका हूँ।

शास्त्रयोन्यधिकरण अद्वैतमत में इसलिए नही उपपन्न होता है कि अद्वैतमत में ब्रह्म को शास्त्रगम्य नहीं माना जाता है। यदि वे ब्रह्म को शास्त्रगम्य मानें तो फिर प्रमाण का विषय होने से ब्रह्म को दृश्य मानना होगा। व्यावहारिक शास्त्रगम्यता का खण्डन व्यवहारिकानुमान के समान ही हो जाता है। अद्वैती विद्वान् प्रमाण एवं प्रमेय का खण्डन करते हैं अतएव वे शास्त्र की प्रामाणिकता का भी पाषण्डियों के समान खण्डन करते ही हैं। वेदान्त शास्त्र भी तर्कात्मक हैं; तर्कों की स्वरूपलक्षण खण्डन विषयक प्रचण्डता स्वीकार करने वाले अद्वैती विद्वानों का कौन सा तर्क है? अथवा तर्काधीन वे अर्थों की कैसी व्यवस्था मानते हैं? और 'तत्त्वमसि' आदि वाक्यों में तत्त्व अवेदकता आप कैसे स्वीकार कर सकते हैं? और ऐसा होने पर सभी शास्त्रों का खण्डन करने वाले माध्यमिकों की उक्ति को ही प्रामाणिक मानना होगा। समन्वय सूत्र ब्रह्म की जगत् कारण प्रतिपादकता में समन्वय को ही हेतु बतलाता है। अन्वय भेद के बिना हो नहीं सकता है। ईक्षत्यधिकरण में भी ब्रह्मके ईक्षण नामक गुणका ही मुख्य विधान किया जा रहा है। अतएव यह भी सविशेष ब्रह्मपरक ही अधिकरण है। आनन्दमयाधिकरण में भी प्राचुर्य अर्थ में ही मयट् प्रत्यय के होने तथा आनन्द का अनेक बार अभ्यास किये जाने के कारण इस

अधिकरण में भी भेदवाद का ही साम्राज्य है। आकाशाधिकरण तथा प्राणाधिकरण में भी ब्रह्म के चिह्नों का हीं वर्णन है। लिङ्ग असाधारण धर्म को कहते हैं। आप ही विचारें कि निर्विशेष में कौन सा चिह्न तथा कौन सा साध्य हो सकता है? ज्योति अधिकरण में तो ब्रह्म का चरणाभिधान हीं मृषावाद को मार डाले जा रहा है। निर्विशेष का कौन सा चरण होगा? उसका सर्वोत्तम लोकों में कौन सा प्रकाश हो सकता है? इन्द्रप्राणाधिकरण में भी 'प्राणस्तथानुगमात्' इस सूत्र में उपक्रम तथा उपसंहार आदि षड्विधतात्पर्यलिङ्गों से युक्त महावाक्य के सामर्थ्य से इन्द्र के अन्तर्यामी महापुरुष की सिद्धि की जाने के कारण ब्रह्मकी सविशेषता सिद्ध होती है। अन्विताभिधानवाद तथा अभिहितान्वयवाद दोनों में स्थान-स्थान पर सिद्ध किया गया है कि क्रिया समभिव्याहार के कारण वाक्य सविशेष वस्तु का ही प्रतिपादक होता है। उस वाक्य का वाक्यार्थ भी प्राण इन्द्र आदि से विशिष्ट होने के कारण सविशेष ही है।

इस तरह शारीरक मीमांसा के प्रथम पाद के सूत्रों का सविशेष ब्रह्म के ही प्रतिपादन में तात्पर्य है, यह सिद्ध कर दिए जाने पर योग्य शिष्यों को चाहिए कि वे स्थाली पुलाक न्याय से इसी तरह इस अध्याय के शेष तीन पादों को भी सविशेष ब्रह्म परक सिद्ध करें। अविरोधाध्याय के भी प्रथम अध्याय का शेष होने से उसका भी तात्पर्य सविशेष ब्रह्म के ही प्रतिपादन में मानना चाहिए। वैराग्य पाद तथा उभयलिङ्ग पाद इन दो पादों में संसारी जीव से संसार निवर्तक ब्रह्म की भिन्नता बतलाकर भेदवाद का प्रतिपादन किया गया है। गुणोपसंहार पाद तो निर्गुणवाद के लिए कर्णशूल के समान है और अङ्गादि भाव वाद निर्गुणवाद रूपी हाथी के लिए घातक कर्णज्वर है। इस तरह शारीरक शास्त्र के तीन अध्यायों में सगुण ब्रह्म का ही प्रतिपादन किया गया है। फलाध्याय का फलनिर्देश ही निर्गुणवादियों के प्रलाप को निष्फल सिद्ध करता है। परमात्मक भक्त जीव के ही सांसारिक फल के साधनभूत पुण्यपापरूपी कर्मों का श्लेषाभाव और विनाश, देह से उत्क्रमण करने के पश्चात् अर्चिरादि देवमार्ग से गमन, परब्रह्म को प्राप्त करने के बाद आविर्भूत गुणाष्टक होना तथा उनकी अपुनरावृत्ति बतलायी गयी है। अतएव अद्वैती विद्वानों को चाहिए कि वे शारीरक शास्त्र के स्वकल्पित पाचवें अध्याय के द्वारा निर्गुण शरीर रहित लक्ष्मी तथा परिवार से रहित विभूति हीन, अपने पारिभाषिक चिन्मात्र ब्रह्म का प्रतिपादन करें।

यदुक्तं जिज्ञास्यतया प्रकान्तं ब्रह्मैव; 'नात्मा श्रुतेः' इत्यादावपि प्रतिपाद्यत इति, तदसत्, 'ज्ञोऽत एव', 'कर्ता शास्त्रार्थवत्त्वात्', 'परात्तु तच्छ्रुतेः' इत्यादिभिस्तत्रत्यैस्सूत्रैरात्मशब्दनिर्दिष्टस्य तस्य ज्ञातृत्वकर्तृत्वपरमात्मायत्तत्वादिप्रतिपादनात्, तस्य च परिशुद्धस्वरूपस्य त्वदभिमतेऽस्मदभिमते वा ब्रह्मण्यसंभवात्। भ्रान्त्या संभवतीति चेन्न, परिशुद्धस्वरूपोपदेशदशायां प्रतिपक्षप्रतिक्षेपपूर्वकस्य भ्रान्तिसिद्धाकारसमर्थनस्य विरुद्धत्वात्। अन्यथा उत्पत्तिविनाशयोरेव समर्थनप्रसंगात्। यदि तत्र 'नात्मा श्रुतेः' इत्यधिकरणेऽपि यथालोकमुत्पत्तिविनाशयोरेव समर्थनप्रसंगात्। यदि तत्र लोकसिद्धाकारप्रतिषेध उपचिक्रंसितः; तदा लोकसिद्धं कर्तृत्वादिकमपि नास्तीत्येवोपदेष्टुं युक्तम्। यदि तत्रैव सूत्राणां तात्पर्यमिति मनुषे, तदा प्रारब्धं त्वयैव सूत्रान्यथाकरणम्॥ अप्रस्तुतमात्मान्तरमिह कथं परीक्ष्यत इति चेन्न, 'अथातो ब्रह्मजिज्ञासा'

इत्यत्रैव विषयतया ब्रह्मण इव अधिकारितया मुमुक्षोः प्रकृतत्वात्, तस्य च स्वरूपज्ञानावश्यम्भावित्वेन क्वचित्स्वरूपस्यावश्योपदेष्टव्यत्वात् / व्यवच्छेद्यतया प्रधानमिव प्रथमाध्याये सर्वत्र प्रकृतः। यदि विषयत्वेनाप्रकृतत्वादपरीक्षणीयता, तदा वियत्प्राणादेरप्यपरीक्षणप्रसंगः।

श्लो–धर्मं जिज्ञासमानस्य तत्सम्बन्धिनिरूपणम्। यथैवं ब्रह्मजिज्ञासेर्युक्तं जीवनिरूपणम् ॥

प्रसाद—अद्वैती विद्वानों ने यह जो कहा है कि ब्रह्मसूत्रों के जिज्ञास्य भूत ब्रह्म का ही 'नात्माश्रुतेः' इत्यादि सूत्र में प्रतिपादन किया गया है, उनका यह कहना भी ठीक नहीं है, क्योंकि वहाँ के 'ज्ञोऽत एव' अर्थात् जीव ज्ञानवान है, 'कर्ता शास्त्रार्थवत्त्वात्' अर्थात् शास्त्र चूँकि तत्–तत् कर्मों का विधान करता है अतएव वह कर्ता है; 'परात्तु तच्छ्रुतेः' अर्थात् श्रुतियाँ चूँकि परमात्मा को सम्पूर्ण जगत् का नियामक बतलाती हैं, अतएव उसकी सारी क्रियाएँ परमात्माधीन हैं। इन सभी सूत्रों का अर्थ न तो आप के अभिमत है और न तो आपके अभिमत ब्रह्म में अन्वय हो सकता है। यदि कहें कि भ्रम के द्वारा उनका ब्रह्म में अन्वय सम्भव है तो यह भी नहीं कह सकते हैं; परिशुद्ध स्वरूप के उपदेश की दशा में अपने विरोधी पक्ष का खण्डन पूर्वक भ्रान्ति सिद्ध आकार का समर्थन नहीं किया जा सकता है। अन्यथा 'नात्माश्रुतेः' इस अधिकरण में भी लोकानुसार आत्मा की भी उत्पत्ति और विनाश का प्रसङ्ग होगा। यदि आत्माधिकरण में आत्मा के लोक सिद्ध आकार का प्रतिषेध का प्रारम्भ किया गया है तो फिर यहाँ पर आत्मा के लोक सिद्धकर्तृत्व आदि के निषेध का ही उपदेश मानना होगा। यदि उसी अर्थ में सूत्रों का तात्पर्य आप मानते है तो आपने ही अपने अनभिमत अर्थ में सूत्रों का तात्पर्य मानना प्रारम्भ कर दिया। यदि कहें कि यहाँ पर अप्रस्तुत आत्मा की परीक्षा कैसे स्वीकार की जा सकती है? तो इसका उत्तर है कि अथातो ब्रह्मजिज्ञासा सूत्र में ही ब्रह्म के समान ही ब्रह्म ज्ञान का अधिकारी भी विषय रूप से प्रस्तुत है। उस अधिकारी का स्वरूप ज्ञान आवश्यक होने के कारण उसके स्वरूपोपदेश करना उचित ही है। प्रथम अध्याय में भी सर्वत्र जिस तरह ब्रह्म से भिन्न प्रधान को बतलाया गया है, उसी तरह जीव को भी यदि विषय रूप से आनुक्त वस्तु अपरीक्षणीय होती तो फिर आकाशादि तथा प्राणादि की भी परीक्षणीयता उपपन्न नहीं हो सकती है। अतएव 'धर्मं जिज्ञासमानस्य इत्यादि, अर्थात् जैसे–धर्म जिज्ञासु के लिए धर्माङ्गों का भी उपदेश दिया जाता है; उसी तरह ब्रह्म जिज्ञासा के लिए ब्रह्म जिज्ञासा के अधिकारी का भी निरूपण आवश्यक है।

किञ्च, 'असम्भवस्तु सतोऽनुपपत्तेः' इत्यत्रैव सच्छब्दवाच्यस्य परस्य ब्रह्मण उत्पत्त्यादिप्रतिषेधात्, 'नात्मा श्रुतेः' इति निरर्थकः पुनरारम्भः। अतो नात्र जिज्ञास्यतया प्रक्रान्तं ब्रह्म आत्मशब्दनिर्दिष्टम्, अपितु जिज्ञासाकर्तृतया प्रस्तुतो जीवः। यत् पुनः उक्तं एकवचनान्तनिर्देशादात्माद्वैतस्वारस्यमिति; तदपि न, 'अदृष्ट इत्यादिसूत्रेष्विव जात्यैक्यविवक्षया तत्प्रयोगसम्भवात्। तदुक्तमंशाधिकरणे; 'नात्मा श्रुतेरित्यत्राप्येकवचनं जात्यभिप्रायम्' इति। याश्च तत्सूत्रविषयतया; 'नित्यो नित्यानां चेतनश्चेतना-

नाम्' इत्यादि श्रुतय उपादीयेन्ते ; ताभिरपि सौत्रस्यैकवचनस्य जात्यभिप्रायत्वं व्यक्तम् यदि उद्देश्यगतत्वेन बहुत्वमविवक्षितम् ; य एक इति निर्दिष्टमेकत्वं किं विवक्ष्यते ॥ अतएव; 'अजो नित्यः' इत्यादिश्रुत्यन्तरमपि निर्व्यूढम् ।

प्रसाद--किञ्च 'असम्भवस्तु सतोऽनुपपत्तेः' अर्थात् परमकारण भूत सत् शब्द वाच्य ब्रह्म की उत्पत्ति नहीं होती है, क्योंकि उसकी उत्पत्ति अनुपपन्न है, इस सूत्र में ही सच्छब्द वाच्य ब्रह्म की उत्पत्ति आदि का निषेध होने के कारण 'नात्मा श्रुतेः' सूत्र में पुनः आत्मा की उत्पत्त्यादि के निषेध का प्रक्रम व्यर्थ है । अतएव जिज्ञास्य रूप से प्रक्रान्त ब्रह्म को यहाँ आत्मा शब्द से नहीं अभिहित किया गया हैं, अपितु जिज्ञासा के कर्ता जीव की उत्पत्त्यादि का निषेध इस सूत्र में किया गया है । यह जो कहा गया है कि एकवचनान्त निर्देश के कारण आत्माद्वैत में ही ब्रह्मसूत्रों का स्वारस्य है तो यह भी कहना ठीक नहीं है, क्योंकि 'श्रेष्ठश्च' इत्यादि सूत्रों के समान यहाँ भी जाति की विवक्षा में एकवचनान्त प्रयोग उप पन्न होता है । इसीलिए अज्ञाधिकरण में कहा गया है कि 'नात्मा श्रुतेः' सूत्र में भी एकवचनान्त प्रयोग जाति की दृष्टि से किया गया है । नात्माश्रुतेः सूत्र के विषय रूप से जिन 'नित्यो नित्यानाम् चेतनश्चे-तनानाम्' इत्यादि श्रुतियों को लिया गया है ; उन श्रुतियों के द्वारा भी सूत्र के एकवचनान्त प्रयोग की जात्याभिप्रायता ही स्पष्ट होती है । यदि उद्देश्यगत होनेके कारण सौत्र बहुत्व अविवक्षित होता तो फिर 'य एकः' इस वाक्य में निर्दिष्ट एकत्व से आपको क्या विवक्षित है ? इस तरह 'अजो नित्यः' श्रुति के भी एकत्व निर्देश की व्याख्या हो गयी ।

यत्तूभयलिंगाधिकरणे समस्तविशेषशून्यत्वं प्रत्यपादीति-तदप्यसत्, तत्र हेयगुण-निषेधेन समस्तमङ्गलगुणविशिष्टस्यैव प्रतिपिपादयिषितत्वात्, तदाह—'सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति' इति ॥ वाक्यस्थोभयलिंगशब्दानादरेणासन्निहितदोषस्य निषेध्याध्याहारो न युक्त इति चेन्न-स्ववाक्यस्थस्यापि गुणस्य स्वरूपत एव निषेधानुपपत्तेः । न हि गुणो गुणत्वादेव निषेध्यः ; वैपरीत्यात् । न च दोषकोटिनिक्षेपेण तन्निषेधः, सर्वज्ञत्वादेर्दो-षत्वस्य प्रमाणाभावात् । अतः पारिशेष्यात् दोष एव निषेध्य इति नियते; जागरितस्व-प्नाद्यवस्थासु जीवस्य ये दोषाः पूर्वेष्वधिकरणेषु प्रकृताः त एवात्र निषेध्यतया सूत्रकृद-भिप्रेता इति स्पष्टमेव ज्ञातुः । ततश्च ; 'भेदादिति चेन्न प्रत्येकमतद्वचनात्' इत्यादिसूत्रे-ष्वपि नाप्रस्तुतानुपयुक्तत्वदभिमतार्थसिद्धिः । अन्यथा ; 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' इति समनन्तरसूत्रविरोधः । न हि तत्र प्रकृतं प्रतिषेधतीत्युक्तम्, अपितु प्रकृतैतावत्त्वमिति । एतेन निषेधानां सर्वेषां विहितानुरोधेन विषयव्यवस्था कर्तव्येति दर्शयति ।

श्लो—सामान्यस्य निषेधस्य विहितव्यतिरेकतः । निर्वाहः सुप्रसिद्धश्च निगमेष्वपि दृश्यते ॥

प्रसाद—उभयलिङ्गाधिकरण में अद्वैती विद्वानों ने ब्रह्म की निर्विशेषता का प्रतिपादन अनुचित ढङ्ग से किया है ; क्योंकि—'न स्थानतोऽपि परस्योभयलिङ्गशून्यत्वात् सर्वत्र हि' सूत्र का तात्पर्य ब्रह्म में हेय गुणों के निषेध पुरस्सर समस्त कल्याण गुणों से विशिष्ट रूप से प्रतिपादन में हैं । इसीबात को श्रीभाष्यकार ने कहा है कि—उभयलिङ्गाधिकरण में सूत्रकार ब्रह्मको सभी कल्याण गुणों से विशिष्ट रूप से प्रतिपादित करेंगे । यहाँ पर अद्वैती विद्वान् यह नहीं कह सकते हैं कि वाक्य के उभयलिङ्गशब्द का अनादर करके असन्निहित दोषों का निषेध करना उचित नहीं है; क्योंकि शाङ्कर भाष्य के वाक्यस्थ गुणों का भी निषेध नहीं किया जा सकता है । गुण होने मात्र से गुणों का निषेध करना विपरीत हैं, गुणों को दोष कोटि में भी रखकर उनका निषेध नहीं किया जा सकता है, क्योंकि सर्वज्ञता आदि गुणों के दोष होने में कोई भी प्रमाण नहीं है । फलतः दोष ही निषेध के योग्य हैं , यह निश्चित होने पर जागर एवम् स्वप्नादि अवस्थाओं में जीवों में जो दोष पाये जाते हैं; जिनका पहले के अधिकरणों में दोष रूप में वर्णन भी है, ज्ञाता जीव के उन्हीं गुणों का निषेध यहाँ किया जा रहा है । अतएव 'भेदादिति चेन्न प्रत्येकमतद्वचनात्' सूत्र का अर्थ अप्रकृत आपके अभिमत न होकर; यह है कि–यह नहीं कहा जा सकता है कि अवस्था भेद के कारण परमात्मा में भी जीव के ही समान दोष होते हैं, क्योंकि 'यः पृथिव्यां तिष्ठन्' इत्यादि प्रत्येक अन्तर्यामी श्रुतियों में ब्रह्म को अमृत कहा गया है अन्यथा आगे के 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' सूत्र से विरोध होगा । इस सूत्र के द्वारा कहा जाता है कि–'नेति नेति' श्रुति ब्रह्म के मूर्तत्वामूर्तत्व रूप सीमितत्व का निषेध न करके उसकी असीमितरूपता का प्रतिपादन करती है । अतएव 'नेति नेति' श्रुति प्रकृत गुणों का निषेध नहीं करती अपितु उनकी इयत्ता का निषेध करती है । अतएव सूत्रकार कहते हैं कि विहित गुणों को दृष्टि पथ में रखकर निषेध वाक्यों को हेय गुणपरक मानना चाहिए । वेदार्थों के पर्यालोचन से स्पष्ट है कि-सामान्य निषेध वाक्यों का निर्वाह ब्रह्म के विहित गुणों से भिन्न दोषों के निषेध रूप से करना चाहिए ।

अतएव सन्ध्याधिकरणेऽपि, 'मायामात्रं तु' इत्यादिना न प्रपञ्चमिथ्यात्वं विवक्षितमिति गम्यते । मायाशब्दस्य च न मिथ्यात्ववाचित्वमिति स्थलान्तरे (४८) विशदं द्रष्टव्यम् । आह च–'मायामात्रं त्विति च स्वाप्नानामप्यर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्यमात्रेण मायामात्रत्वमुच्यते' इत्यादि । 'मेघोदयस्सागरसन्निवृत्तिः (देशः), इत्यारभ्य 'विष्णोर्विचित्राः प्रभवन्ति मायाः' इत्यादिषु मायाशब्दस्य विचित्रसृष्टि [कर ?] विशेषपरत्वमेवेति सुव्यक्तमुपपादितम् । अस्तु वाऽस्य मिथ्यार्थवाचित्वम् , तथाऽप्यस्मिन् सूत्रे स्वाप्नार्थानामेव मिथ्यात्वमुच्यते ; 'सन्ध्ये सृष्टिराह हि' 'निर्मातारं चैके पुत्रादयश्च' इति पूर्वपक्षसूत्राभ्यां स्वाप्नार्थानामेव प्रकृतत्वस्य भवद्भिरपि व्याख्यातत्वात् ॥ सत्यं स्वाप्नार्थमिथ्यात्वमधिकरणसाध्यम् ; तत्र कैमुत्यलाभाय जागरितानामपि मिथ्यात्वम् , कार्त्स्न्येनाभिव्यक्तस्वरूपत्वात्' इत्यनेन प्रदर्श्यत इति चेन्न , विश्वमिथ्यात्वसिद्धौ स्वाप्नार्थस

यत्त्वपूर्वपक्षानुत्थानात् । अथ विश्वमिथ्यात्वमेव स्वाप्नार्थमिथ्यात्वप्रदर्शनद्वारा अत्रैव प्रसाध्यत इति मन्यसे, तदप्यसत्; प्रपञ्चमिथ्यात्वं स्वाप्नार्थनिदर्शनस्योचितत्वात् । प्रथमसूत्र एव विश्वमिथ्यात्वप्रसाधनमुखेन विश्वस्य ज्ञानबाध्यतया ज्ञानप्रधान शास्त्रमारम्भणीयमिति भवद्भिस्समर्थनाच्च ॥ अथ वक्ष्यमाणोपजीवनेन शास्त्रारम्भमात्रं तत्र समर्थ्यत इति पश्यसि, तदा नीतिनिबन्धनात्मकस्य सूत्रस्य व्युत्पाद्यमतिमन्दं स्यात् । किञ्च 'कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इत्यत्र न जागरगन्धं पश्यामः । कार्त्स्न्यशब्देन तस्यापि संग्रह इति चेन्न प्रकृतैकदेशाबहिष्कारे तस्य व्युत्पत्तेः । ततश्च स्वाप्नार्थानां सर्वेषामेव मिथ्यात्वं विवक्षितं स्यात्; अन्यथा स्वाप्नार्थमिथ्यात्वं प्रतिज्ञाय जागरितार्थानामनभिव्यक्तस्वरूपत्व हेतुरुच्यत इति व्यधिकरणं स्यात् । अतः स्वाप्नार्थमिथ्यात्वसाधनाय तन्निष्ठमेवानभिव्यक्तस्वरूपत्वं हेतुतया सूत्र्यत इति नात्रापि विश्वमिथ्यात्वप्रतिपादनकथाऽपि ।

प्रसाद—अतएव सन्ध्याधिकरण में भी 'मायामात्रं तु' इत्यादि सूत्र के द्वारा भी प्रपञ्च का मिथ्यात्व प्रतिपादन अभिप्रेत नहीं है । मैंने अन्यत्र विशदरूपसे स्पष्ट किया है कि माया शब्द मिथ्यात्व का वाचक नही है । श्रीभाष्यकार ने कहा है 'मायामात्र तु' इस सूत्र में स्वाप्न पदार्थों के जागरावस्था में अनुभूत पदार्थो से विलक्षण होने के कारण उनको माया मात्र कहा गया है । विष्णुपुराण में भी 'मेघोदय: सागरसन्निवेश:' से प्रारम्भ करके 'विष्णोर्विचित्रा: प्रभवन्ति माया:।' इत्यादि वाक्यों में भी स्पष्ट रूप से मायाशब्द को विचित्र सृष्टि विशेष का वाचक बतलाया गया है । माया शब्द को मिथ्या अर्थ का वाचक मानने पर भी; इस सूत्र में स्वाप्न पदार्थो को ही मिथ्या कहा है । क्यों कि अद्वैती विद्वान् भी मानते हैं कि-'सन्ध्ये सृष्टिराहहि' तथा 'निर्मातारं चेके पुत्रादयश्च' इत्यादि पूर्वपक्ष के सूत्रों में स्वाप्न पदार्थों का ही वर्णन किया गया है । यदि अद्वैती विद्वान् कहें कि इस अधिकरण में स्वाप्न अर्थो का मिथ्यात्व सिद्ध किया गया हैं, किन्तु कैमुत्यन्याय से अधिकरण के 'कार्त्स्न्येनाभिव्यक्तस्वरूपत्वात्' सूत्र से जागरितपदार्थों के भी मिथ्यात्व की सिद्धि की जाती है। तो यह कथन इसलिए उचित नहीं है कि सम्पूर्ण प्रपञ्च के मिथ्यात्व की सिद्धि हो जाने पर पूर्वपक्ष में स्वाप्न प्रपञ्च के सत्यत्व का कोई प्रश्न ही नहीं उठ सकता है । यह भी नहीं कहा जा सकता है कि इस सूत्र में ही स्वाप्न पदार्थों के मिथ्यात्व समर्थन के द्वारा सम्पूर्ण प्रपञ्च के मिथ्यात्व की सिद्धि की जा रही है, क्योंकि विश्वप्रपञ्च मिथ्यात्व को कहकर स्वाप्न पदार्थों का मिथ्यात्व ही उदाहरण रूप से प्रस्तुत करना उचित है । किञ्च अद्वैती विद्वान् प्रथम 'अथातो ब्रह्मजिज्ञासा' सूत्र में ही सम्पूर्ण प्रपञ्चके मिथ्यात्व प्रसाधन के द्वारा सम्पूर्ण प्रपञ्च के ज्ञान बाध्य होने के कारण ज्ञान प्रधान शास्त्र का आरम्भण करना चाहिए, यह मानते हैं । यदि कहें कि वक्ष्यमाण को उपजीव्य बनाकर वहा शास्त्रारम्भ मात्र का समर्थन किया गया है, तो नीति निबन्धनात्म-सूत्र के लिए यह अत्यन्त मन्द उपपादन होगा। किञ्च 'कार्त्स्न्येनाभिव्यक्त स्वरूपत्वात्' सूत्र में जागरावस्था की गन्ध भी नहीं है । यदि कहें कि सूत्र के कार्त्स्न्य शब्द के द्वारा जाग्रत का भी संग्रह हो जाता है तो यह भी नहीं कहा जा सकता है । क्योंकि प्रकृत स्वाप्न पदार्थों के एक अंश का वहिष्कार किये बिना

उक्त अर्थ की सिद्धि नहीं हो सकती है। इस तरह सम्पूर्ण स्वाप्नार्थों का ही मिथ्यात्व विवक्षित होता है। अन्यथा स्वाप्निक अर्थों के मिथ्यात्व की प्रतिज्ञा करके, जागरित वस्तुओं के अनभिव्यक्त स्वरुपता को हेतु रूप से उपन्यस्त करने पर हेतु और साध्य में वैयधिकरण्य दोष होगा। इस सूत्र में भी स्वाप्नार्थों के मिथ्यात्व सिद्धि हेतु यहाँ उनकी ही अनभिव्यक्त स्वरुपता ही बतलायी गयी है, अतएव इस सूत्र में विश्वमिथ्यात्व की चर्चा नहीं है।

यत्पुनः मोक्षोपायोपदेशदशायाम्, 'आत्मेति तूपगच्छन्ति' इति ब्रह्मात्मैक्यानुसन्धानं सूत्रितमिति; तदपि न पश्यामः, आत्मशब्दस्य नानार्थरूढत्वात्, शरीरप्रतिसंबन्धिनि रूढिप्रकर्षाच्च। ततः शरीरीत्यनुसन्धानं संवितं स्यात्। युक्तं चैतत, ब्रह्मणः सर्वशरीरित्वेनान्तर्यामिब्राह्मणादिषु प्रपञ्चितत्वात्। यद्यपि स्वपर्यायोऽयमात्मशब्दो भाष्येऽन्वारूढः, तथाऽप्यन्ततोऽयमेवार्थः प्रपञ्चयिष्यते। अत्राप्यधिकरणे वक्ष्यति; 'इदमेव शरीरात्मभावलक्षणं तादात्म्यम्, आत्मेति तूपगच्छन्तीति वक्ष्यति' इति। विपरीतश्चायं व्यपदेश आयुष्मतः, 'अहं ब्रह्मास्मि' इत्यनुसंधानं ह्यत्र व्याख्यायते। तच्च भ्रान्तिरूपमिति भवता एष्टव्यम्, विलुप्ताहंभावादिविध्वस्तसंविन्मात्ररूपत्वाभ्युपगमात ब्रह्मणः। ततश्च मोक्षोपायतया भ्रान्तिरेव सूत्रितेत्यायातम्। शालामालादिन्यायेन विवक्षितपर्यवस्थापनं तु सूत्रकारस्योपन्यासदशाविरुद्धम्। किञ्च, इतिकरणस्वारस्यादत्र दृष्टिविधिसूचनमेव स्वरसम्। तथैव हि श्रुतिरपि; 'आत्मेत्येवोपासीत' इति। वाक्यं च, 'आत्मेत्येव तु गृह्णीयात्' इति। प्रसिद्धश्चायमर्थः स्मृतिष्वपि, 'ब्रह्माहमिति भावयेत्' इत्यादिषु, तन्त्रेषु च, 'देवोऽहमिति भावयेत्' इति। अतोऽत्र इतिकरणस्वारस्यात्; 'मनो ब्रह्मेत्युपासीत' इत्यादाविव दृष्टिविधित्वमात्रसिद्धौ उपास्यस्य दृष्टिविशेषणस्य चात्यन्तभेदस्य सार्वत्रिकत्वात् अत्रापि जीवब्रह्मणोर्भेद एवानन्तरंसूत्रितस्स्यादिति नात्र भवतः कश्चिदवकाशः।

प्रसाद—अद्वैती विद्वानों ने यह जो कहा है कि मोक्ष के उपाय के उपदेश की दशा में 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इस सूत्र में ब्रह्मात्मैक्यानुसन्धान को बतलाया गया है, वह भी उचित नहीं है, क्योंकि आत्माशब्द नानार्थक है और उसकी शरीर सम्बन्धी आत्मा के अर्थ में रुढि है, अतएव इस सूत्र में शरीर शब्दसे आत्माका ही निर्देश है। यह कथन इसलिए भी उचित है कि अन्तर्यामी ब्राह्मण आदि में ब्रह्म को सर्वशरीरक बतलाया गया है। यद्यपि आत्माशब्द स्व के पर्याय रुप में आया है फिर भी आत्माशब्द का यही अन्तिम अर्थ है; इस बात को श्रीभाष्यकार विस्तार से प्रतिपादित करेंगे। इस अधिकरण में वे आगे कहेंगे कि इस शरीर शरीरीभाव रूप तादात्म्य सम्बन्ध को 'आत्मेत्युपगच्छन्ति' इस सूत्र में बतलाया जायेगा। यह अर्थ अद्वैती विद्वानों के विपरीत है, आपके अनुसार तो 'अहं ब्रह्मास्मि' की ही यहाँ व्याख्या की जा रही है। किन्तु उस अनुसन्धानको आपको अन्तिम रूप मानना चाहिए। क्यों

कि आप तो मानते हैं कि ब्रह्म संवित् मात्र है; उसमें अहम् भाव रहता ही नहीं है । इस तरह आपके अनुसार तो इस सूत्र में मोक्षमात्ररूप से भ्रान्ति ही बतलायी गयी है । यदि कहें कि जिस तरह माला कहना चाहकर भी कोई शाला उच्चारण कर देता हैं , उसी तरह यहाँ भूल से सूत्रकार ने ऐसा कह दिया तो आपका यह कथन सूत्र के स्वारस्य के विपरीत है । किञ्च इतिकर्तव्यता के स्वारस्य से यहाँ पर दृष्टिविधि की सूचना ही अभिप्रेत है । श्रुति भी ऐसा ही कहती है । 'आत्मेत्युपासीत' अर्थात् आत्मा रूप से उपासना करे । वाक्य ग्रन्थमें भी कहा गया है कि आत्मा ही मानना चाहिए । स्मृतियों में भी यह अर्थ प्रसिद्ध है । जैसे-'ब्रह्माहमिति भावयेत्' अर्थात् मैं ब्रह्म हूं इस तरह की भावना करनी चाहिए । तन्त्रों में कहा गया है कि—'मैं देवता हूँ' इस तरह की भावना करे । अतएव यहाँ पर 'मन को ब्रह्म रूप से उपासना करे ।' 'मनोब्रह्मेत्युपासीत्' इत्यादि वाक्यों के समान दृष्टि विधि मात्र की सिद्धि होने पर दृष्टि के विशेषण उपास्य का उससे अत्यन्त भेद सर्वत्र देखा जाता है । अन्ततः यहाँ भी जीव और ब्रह्म का भेद ही सूत्राभिप्राय सिद्ध होता है । अतएव यहाँ अद्वैती विद्वानों के लिए कोई भी अवसर नही हैं ।

यत्तु फलदशायाम् ; 'अविभागेन दृष्टत्वात्' इत्यविभागानुभवस्सूत्रित इति ; तदपि मन्दम् , अविभागशब्दस्य स्वरूपैक्यनियतत्वाभावात् । विभागो हि परस्परसम्बन्धपरिपन्थिधर्मविशेष इति विदुषां प्रसिद्धिः ; तेनाविभागोऽप्यपृथक्सिद्धिरेवेति सिध्यति ; न पुनः स्वरूपैक्यम् , तत्र तद्व्यवहारश्चौपचारिकः । अस्तु वा मुख्यः , तथाऽप्यनियतत्वादन्यथासिद्धः , वाङ्मनः प्रभृतिसंपत्तिवदवस्थाविशेषमात्रविवक्षया; 'अविभागोवचनात्' इत्यसूत्रयत् ; अत्र तु यथाप्रमाणमपृथक्सिद्धत्वविवक्षयाऽयमविभागशब्दः , अन्यथा प्रमाणविरोधादुपपत्तिविरोधाच्च । प्रयुञ्जते च मध्यस्था दण्डो देवदत्ताद्विभक्तः जातिगुणादिकन्त्वविभक्तमिति च । यद्वा विभागो भेद एवास्तु, अविभागश्च भेदनिवृत्तिः, तथापि स्वरूपभेदोऽत्र निषिध्यत इत्यत्र न प्रमाणं पश्यामः प्रत्युत पूर्वापरसूत्रशतपरामर्शात् , भोगमात्रसाम्यलिङ्गाच्च' इति उपान्त्यसूत्रसम्वादाच्च किञ्चिज्ज्ञत्वसर्वज्ञत्व-परिमितसुखत्वानिरतिशयानन्दत्वादिविधर्म्यलक्षणभेद एव निषिध्यत इति स्वरसतः प्रतीयते । तत्क्रतुन्यायोऽपि कृशोदरीनीडनिहितकीटस्य आदिभरतमृगत्वादिवच्च साम्यादन्यैव सङ्गमयितुं शक्यः । अन्यथा दृष्टान्त एव तत्र प्रतिदृष्टान्ततामश्नुते ।

प्रसाद--अद्वैती विद्वानों ने यह जो कहा है कि फलाध्याय में 'अविभागेन दृष्टत्वात्' सूत्र में आत्मा ब्रह्म के अभेदानुभव को सूत्रित किया गया है , वह मन्द कथन है; क्योंकि अविभाग शब्द सर्वत्र स्वरूपैक्य का प्रतिपादन नहीं करता है । विद्वानों में यह प्रसिद्धि है कि परस्पर सम्बन्ध का विरोधी धर्म विशेष है अतएव अविभाग शब्द अपृथक् सिद्धि मात्र को बतलाता है । स्वरूप की एकता को नहीं । स्वरूप की एकता में अविभाग शब्द का औपचारिक प्रयोग होता है । स्वरूपैक्य में अविभाग शब्द को

मुख्य मानने पर भी उसका उस अर्थ में अनियत होने के कारण यह अर्थ अन्यथासिद्ध है। वाणी, मन आदि की सम्पत्ति के समान अवस्था विशेष की विवक्षा से इस सूत्र में अविभाग शब्द का प्रयोग हुआ है। यहाँ पर तो प्रमाणानुसार अपृथक् सिद्धि को बतलाने के लिए अविभाग शब्द प्रयुक्त है। अन्यथा प्रमाण तथा उपपत्ति का विरोध होगा। मध्यस्थ पुरुष प्रयोग भी करते हैं कि दण्ड देवदत्त से विभक्त होता है तथा उसकी जाति तथा उसके गुण उससे अविभक्त रहते हैं। अथवा विभाग को भेद का वाचक माना जाय और भेद की निवृत्ति को अविभाग वाच्य फिर भी यहाँ पर ब्रह्म एवम् जीव के स्वरूप का निषेध किया जा रहा है, इस कथन में कोई भी प्रमाण नहीं है। अपितु आगे तथा पीछे के अनेक सूत्रों के परामर्श से तथा 'भोगमात्र साम्यलिङ्गाच्च' इस सूत्र से एक वाक्यता होने के कारण सिद्ध होता है कि मुक्तावस्था में जीव और ब्रह्म में होने वाला सर्वज्ञत्व एवम् अल्पज्ञत्व, परिमित सुखत्व एवं अपरिमित सुखत्व आदि भेद नहीं रह जाते हैं, यही उक्त सूत्र का स्वाभाविक अर्थ है। यहाँ पर भृङ्ग के बिलमें रहने वाले कीट जैसे-भृङ्ग हो जाता है, तथा जैसे आदि भरत मृग हो गये उसी तरह तत्क्रतुन्याय से ब्रह्मोपासक जीव भी ब्रह्म के सदृश भोगों तथा ऐश्वर्यों वाला हो जाता है। अन्यथा वहाँ दृष्टान्त ही विरोधी दृष्टान्त (प्रतिदृष्टान्त) बन जायेगा।

तदेव भूयसांन्यायमसन्तमिव कृत्वा त्वदुपन्यस्तानि कतिपयानि सूत्राणि त्वदभिमतप्रतीपानि निदर्शितानि। तत्तथान्यपरानन्यपरविभागोऽपि विलीनः। अत एवान्येषां भूयसां सूत्राणां कल्पिताकारपरत्वमुपलक्षणपरत्वं वा नोत्प्रेक्षितं शक्यम्। अन्यानि तु सूत्राणि सगुणं सविभूतिकं च ब्रह्म प्रतिपादयन्तीत्ययमर्थस्त्वयाऽपि दुरपह्नवः।

श्लो—अर्थवत्त्वेऽपि सूत्राणामन्योन्यार्थविभागतः।
सगुणं ब्रह्म वेद्यं स्यान्न चेत् सूत्रकथा मुधा॥

प्रसाद—इस तरह भूयसां न्याय की अवहेलना करके कुछ सूत्रों को उपन्यस्त करने वाले आप के अभिमत सूत्रों को ही मैंने आपके विपरीत सिद्ध कर दिया इस तरह अन्यार्थ का प्रतिपादक आप का अभेद विभाग भी खण्डित हो गया। अतएव दूसरे अनेक सूत्र की उत्प्रेक्षा (कल्पना) न तो कल्पिताकार परक की जा सकती है और न तो उपलक्षण परक रूप से की जा सकती है। दूसरे सूत्र तो सगुण एवं विभूति विशिष्ट ब्रह्म का प्रतिपादन करते हैं, इस बात का अपलाप आप भी नहीं कर सकते हैं। किञ्च सूत्रों को सार्थक मानने पर भी एक सूत्र के अर्थ दूसरे सूत्र के अर्थ से भेद होने के कारण, उनसे सगुण ब्रह्म वेद्य सिद्ध होता है, अन्यथा सूत्रों की चर्चा ही समाप्त हो जायेगी।

आह च जन्माद्यधिकरणे—'ये तु निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति, तन्मते, 'ब्रह्मजिज्ञासा', 'जन्माद्यस्य यतः' इत्यसङ्गतं स्यात्, निरतिशयबृहत् बृंहणं च ब्रह्मेति निर्वचनात् / तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च, एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु च ईक्षणाद्यन्वयदर्शनात् सूत्राणि सूत्रोदाहृताः श्रुतयश्च न तत्र प्रमाणम्' इत्यादि। अयमभिप्रायः—प्रथमाध्याये सर्वत्र, 'ईक्षतेर्नाशब्दम्' 'आनन्दमयोऽभ्यासात्,

'अतस्तद्धर्मोपदेशात्' इत्यादिषु ब्रह्मणस्तद्धर्मविशेषैर्वैशिष्ट्यं प्रतिपाद्यते, एवं जीवादिभ्यो भेदश्च प्रतिपाद्यते। 'भेदव्यपदेशाच्चान्यः'; 'कर्मकर्तृव्यपदेशाच्च' 'उभयेऽपि हि भेदेनैनमधीयते' 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' 'भेदव्यपदेशात्' 'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इत्यादिषु सूत्रेषु तत्तच्छ्रुतिगतो भेदनिर्देश एव स्वशब्देन रूच्यते। 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' 'न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च' 'नानुमानमतच्छब्दात् प्राणभृच्च' 'जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम्' इत्यादिषु प्रधानादिवत् जीवः स्वशब्देनोपादाय व्यवच्छिद्यते 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इत्यादिषु [ च भेदः ? ] स्फुटः। अतः प्रथमाध्याये सर्वत्र जिज्ञास्यतया प्रक्रान्तं ब्रह्म आनन्दगुणविशिष्टं प्रकृतेरिव पुरुषादपि विलक्षणं च प्रत्यपादि। अयमेवार्थः–स्थूणानिखननन्यायेन द्वितीयाध्याये स्थिरीकृत इति सोऽपि तद्विषय एवेत्युक्तम्। तत्र च; 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' इति जीवैक्यव्यपदेशमूलानेकदोषान् आशङ्क्य, 'अधिकं तु भेदनिर्देशात्' 'अश्मादिवच्च तदनुपपत्तिः' इति सूत्राभ्यां पर्यहार्षीत्। तत्र चाभाष्यत–'ये पुनरस्यैव जीवस्याविद्यावियुक्तावस्थामभिप्रेत्य इमं भेदं वर्णयन्ति; तेषामिदं सर्वमसङ्गतं स्यात्। न हि तदवस्थस्य सर्वज्ञत्वं सर्वेश्वरत्वं समस्तकारणत्वं सर्वात्मत्वं सर्वनियन्तृत्वमित्यादीनि सन्ति। अनेनैव रूपेण ह्याभिः श्रुतिभिः प्रत्यगात्मनो भेदः प्रतिपाद्यते, तत् सर्वं ह्यविद्यापरिकल्पितं त्वन्मते। न चाविद्यापरिकल्पितस्याविद्यावस्थायां शुक्तिकारजत–मारीचिकाजलादिभेदवत् परस्परभेदोऽत्र सूत्रकारेण, 'अधिकं तु भेदनिर्देशात्' इत्यादिषु प्रतिपाद्यते। ब्रह्मजिज्ञासा कर्तव्येति जिज्ञास्यतया प्रक्रान्तस्य ब्रह्मणो जगज्जन्मादिकारणस्य वेदान्तवेद्यत्वं तस्य च स्मृतिन्याय विरोधपरिहारश्च क्रियते' इति स्पष्टम्। अतोऽध्यायद्वयं विशिष्टपरमिति स्थितम्।

प्रसाद—श्रीभाष्यकार ने जन्माधिकरण में कहा भी है कि–जो लोग निर्विशेष ब्रह्म को जिज्ञास्य मानते हैं उनके मत में 'अथातो ब्रह्मजिज्ञासा' तथा 'जन्माद्यस्य यतः' ये दोनों सूत्र व्यर्थ सिद्ध हो जायेंगे। किञ्च ब्रह्म शब्द की व्युत्पत्ति निरतिशय बृहत् रूप है। किञ्च वही बृहत् जगत् के जन्म आदि का कारण है यह 'यतो वा' इत्यादि वाक्य बतलाती हैं। इसी तरह आगे के सूत्रों तथा सूत्रोदाहृत श्रुतियों में ईक्षणादि क्रिया रूपी विशेषों का अन्वय होने से वे सूत्र तथा सूत्रोदाहृत श्रुतियाँ निर्विशेष ब्रह्म में प्रमाण नहीं बन सकती हैं। इस श्रीभाष्य वाक्य का अभिप्राय है कि प्रथम अध्याय के 'ईक्षतेर्नाशब्दम्' अर्थात् श्रुतियों में ईक्षण क्रिया देखे जाने के कारण शब्द प्रमाण रहित प्रधान जगत् कारण नहीं हो सकता है।

'आनन्दमयोऽभ्यासात्' अर्थात् बारबार उसी का उपदेश दिये जाने के कारण आनन्द प्रचुर ब्रह्म ही जगत् का कारण है। 'अन्तस्तद्धर्मोपदेशात् ।' अर्थात् आदित्य तथा नेत्रों के अन्तर्यामी रूप से हिरण्मयपरमात्मा ही श्रुतियों में अभिहित किए गये हैं, क्योंकि उन्हें श्रुति पापरहित बतलाती है। इन सूत्र में ब्रह्म को तत् तत् धर्मविशेष से विशिष्ट बतलाया गया है। इस तरह ब्रह्म जीवादि से भिन्न भी सिद्ध होता हैं। निम्न सूत्र ब्रह्म का जीवादि से होने वाले श्रौत भेद का ही प्रतिपादन करते हैं। वे है-'भेद व्यपदेशाच्चान्यः' अर्थात् 'य आदित्ये तिष्ठन्' श्रुति में आदित्यान्तर्यामी रूप से प्रोक्त ब्रह्म सूर्य तथा उससे भिन्न जीवों से भिन्न है। 'कर्मकर्तृव्यपदेशाच्च' अर्थात्। 'अहं प्रेत्याभिसम्भवानि' श्रुति में कर्म तथा कर्ता का अभिधान होने से उपासक जीव और उपास्य ब्रह्म में भेद सिद्ध होता है। 'उभयेऽपि हि भेदेनैनमधीयते' अर्थात् माध्यन्दिन एवं काण्व दोनों शाखा के आध्येता अन्तर्यामी ब्रह्म से शारीर के समान आत्मा को भी भिन्न बतलाते हैं। 'विशेषण भेद व्यपदेशाभ्यां च नेतरौ ।' अर्थात् विशेषण तथा भेद व्यपदेश के कारण जीव तथा प्रधान; ब्रह्म नहीं है। 'भेद व्यपदेशात्' अर्थात् 'यदा पश्यत्यन्यमीशम्' इत्यादि श्रुति द्वारा जीव से ब्रह्म की भिन्नता बतलाने के कारण जीव ब्रह्म नहीं हो सकता है। 'आकाशोऽर्थान्तरत्वादि व्यपदेशात्' अर्थात् नामरूप निर्वोढा आदि रूप से कहे जाने के कारण 'आकाशो हवै' श्रुति में आकाश शब्द वाच्य ब्रह्म ही है। 'सुषुप्त्युत्क्रान्त्योर्भेदेन' अर्थात् सुषुप्ति तथा उत्क्रान्ति दशा में जीवात्मा का परमात्मा से भेदाभिधान होने के कारण जीवात्मा से भिन्न ही ब्रह्म सिद्ध होता है। निम्न सूत्रों में सूत्रकार प्रधान के ही समान जीव को भी स्ववाचक शब्द से प्रस्तुत करके उसका ब्रह्म से भेद बतलाते हैं। वे सूत्र हैं-जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात्' अर्थात् जीवलिङ्ग तथा मुख्यप्राण लिङ्ग को देखते हुए यह नहीं कहा जा सकता है कि इस प्रकरण में ब्रह्म का वर्णन हुआ है; तो यह कहना उचित नहीं है; क्योंकि तीन प्रकार की उपासना (परमात्मा का स्वाकार द्वारा, जीवशरीरक रूप से तथा प्राणशरीरक रूप से) का उपदेश करने के लिए विभिन्न शब्दों से अभिधान किया जाता है और यहाँ भी उस प्रकार का अभिधान उचित है। 'नचस्मार्तमतद्धर्माभिलापाच्छारीरश्च' अर्थात् प्रधान और जीव अन्तर्यामी नहीं हो सकते क्योंकि उनमें स्वाभाविक रूप से स्वेतर समस्त नियामकत्व आदि गुण नही हो सकते है। 'नानुमानमतच्छब्दात् प्राणभृच्च ।' अर्थात् प्रतिपादक शब्द के अभाव में प्रधान के ही समान प्राणाश्रय आत्मा भी द्युलोक तथा भूलोक का आश्रय नहीं हो सकता है। 'जीव मुख्य प्राणलिङ्गान्नेति चेत् तद्व्याख्यातम्' अर्थात् यह नहीं कहा जा सकता है कि जीव लिङ्ग तथा मुख्य प्राणलिङ्ग के कारण अन्तर्यामी ब्रह्म को नहीं माना जाता सकता है, क्योंकि ब्रह्म के अन्तर्यामित्व की व्याख्या हम इन्द्र प्राणाधिकरण मे कर चुके हैं। गुहां प्रविष्टावात्मानो हि तद् दर्शनात्' अर्थात् श्रुतियाँ बतलाती हैं कि हृदय गुफा में आत्मा और परमात्मा का निवास है। सूत्र में भी जीवात्मा का परमात्मा से भेद स्पष्ट है। अतएव प्रथम अध्याय के सभी सूत्रों में जिज्ञास्य रूप से उपक्रान्त ब्रह्म को आनन्दगुण विशिष्ट तथा प्रकृति के ही समान पुरुष (जीव) से विलक्षण प्रतिपादित किया गया है। स्थूणानिखनन न्याय से इसी अर्थ का स्थिर प्रतिपादन दूसरे अध्याय में किया गया है। इस अध्याय के 'इतर व्यपदेशाद्धिता करणादिदोषप्रसक्तिः ।' अर्थात् यदि तत्त्व मस्यादि वाक्यों से जीव का ब्रह्म से अभेद बतलाया गया है तो सर्वज्ञादि गुण सम्पन्न में अपने अकल्याणार्थं प्रवृत्ति रूप दोष होगा। इस तरह जीव और ब्रह्म में अभेद पक्ष में अनेक दोषों को उद्भावित करके एकत्व शङ्का का परिहार 'अधिकं तु भेदनिर्देशात्' अर्थात् ब्रह्म जीव अध्यात्मिकादि दुःख भाजन जीव से भिन्न है; इस बात का निर्देश श्रुतियाँ करती हैं। तथा 'अश्मादिवच्च तदनुपपत्तिः' अर्थात् पत्थर आदि जड़ वस्तुओं के ही समान तापत्रयभाक् जीव ब्रह्म के अखिल कल्याण गुणा करत्व आदि गुणों

को नहीं प्राप्त कर सकता है । इन दो सूत्रों में किया गया है । इसी सूत्र के श्रीभाष्य में उन्होंने कहा कि–जो लोग इस जीव की अविद्या वियुक्त अवस्था को लेकर इस भेद का वर्णन करते हैं; उनके मत में ये सभी सूत्र समन्वित नहीं होते हैं; क्योंकि अविद्या वियुक्तावस्था में भी तो वे जीव को सर्वज्ञ, सर्वेश्वर सर्वकारण , सर्वात्मा तथा सर्वनियन्ता नहीं मानते हैं, किन्तु श्रुतियाँ जीव से ब्रह्म का इसी प्रकार का भेद बतलाती हैं । किन्तु अद्वैती मत में तो सर्वज्ञत्व आदि सभी गुण अविद्या कल्पित हैं । सूत्रकार अविद्या परिकल्पित जीव की अविद्यावस्था में शुक्ति तथा रजत ; मरीचिका एवं जल आदि में होने वाले भेद के समान भेद का वर्णन; 'अधिकं तु भेद निर्देशात्' इत्यादि सूत्रों में नहीं करते हैं । अपितु जिज्ञास्य तथा जगज्जन्मादिकारण ब्रह्म को वेदान्त वेद्य तथा इस मान्यता का स्मृतियों में प्रोक्त न्यायों से अविरोध यहाँ बतलाया गया । इस तरह निश्चित हो गया कि ब्रह्म सूत्रों के दो अध्याय विशिष्ट ब्रह्म परक ही हैं ।

तृतीयाध्यायेऽपि वैराग्यपादे तावत् प्रतिनियतकर्मफलभोक्तॄणामनन्तानां कर्मिणां गमनागमनप्रकारचिन्तनादात्मभेदोऽर्थलब्धः । उभयलिङ्गपादे तु शोध्यं शोधितम् । शिष्टमपि विशिष्टानुगुणमेव । गुणोपसंहारपादस्तु तत्तद्विद्यानियतानियतगुणोपाधिकविद्याभेदाभेदचिन्तनात् कार्त्स्न्येन गुणविशिष्टपर इति स्वरूपतोऽपि सुप्रसिद्धम् न केवलं नाममात्रेण । पुरुषार्थपादोऽपि विद्याया वर्णाश्रमधर्मेतिकर्तव्यताकत्वप्रतिपादनाद् विशेषात्माद्वैत वाक्यार्थविज्ञानपक्षप्रतिपक्षः । तद्वत् आवृत्तिपादेऽपि , असकृदावृत्तोपासनादिप्रतिपादनेन फलाङ्कुरस्यैवोपपादनात् । उत्क्रान्तिपादेऽपि स्थूलदेहादुत्क्रान्तिरूपफलप्रादुर्भावप्रपञ्चनम् । अर्चिरादिपादेऽपि तथेति सगुणब्रह्मोपासकानां तत्प्राप्त्यर्थमिति भवद्भिरेव व्याख्यातम् । फलपादेऽपि स्वरूपाविर्भावपूर्वकं परब्रह्मसमानस्वच्छन्दभोगप्रपञ्चनं व्यक्तमिति न बादरायणस्य क्वचिदपि त्वदभिमतानुपपन्नार्थविवक्षां प्रत्यक्षामहे । उक्तं च भास्कराचार्यैः— ,'सूत्राभिप्रायसंवृत्या स्वाभिप्रायनिवेशनात (प्रकाशनात्) । व्याख्यातं यैरिदं सूत्र(शास्त्रं) व्याख्येयं तन्निवृत्तये ॥" इति । तदभिप्रायेण भाष्यकारैरप्युक्तम्—'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः ; तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति ।

विभिन्न प्रकार के कर्मों के फल को भोगनेवाले

प्रसाद--तीसरे अध्याय के वैराग्यवाद में भी विभिन्न प्रकार के कर्मों के फल को भोगनेवाले
सांसारिक जीवों के तत्-तत् लोकों में गमन तथा वहाँ से आगमन का विचार होने से , यह पाद भी
आत्मा के भेद परक ही है । उभयलिङ्ग पाद के शोधनीय पदार्थ का शोधन हम कर चुके हैं । इसके
अतिरिक्त भी उभयलिङ्गपाद का अवशिष्ट अंश विशिष्ट ब्रह्म का ही प्रतिपादक हैं । गुणोपसंहारपाद में
भी विभिन्न विद्याओं में होने वाले अनिश्चित गुणोपाधिक विद्याओं के भेद तथा अभेद का विचार किये
जाने के कारण पूर्णरूप से ब्रह्म के गुण विशिष्टता का ही प्रतिपादक है, यह पाद । अतएव यह स्वरूपतः

एवम् नामतः दोनों प्रकार से सगुण ब्रह्म का प्रतिपादक है। पुरुषार्थपाद भी विद्या के वर्णाश्रम धर्म की इति कर्तव्यता का प्रतिपादन करता है। अतएव यह पाद निर्विशेषात्माद्वैत का विरोधी है। आवृत्तिपाद भी असकृत् आवृत्त उपासना का प्रतिपादक होने के कारण फलाङ्कुर का उपपादक है। उत्क्रान्तिपाद में भी, स्थूल शरीर से उत्क्रमण फल के प्रादुर्भाव का विस्तार रूप है। अद्वैती विद्वान् भी मानते हैं कि अचिरादिपाद में उसी प्रकार से सगुण ब्रह्म के उपासकों की ब्रह्म की प्राप्ति की हेतु का ही विस्तार है। फलपाद में भी स्वरूपाविर्भाव पूर्वक परब्रह्म के सदृश स्वच्छन्द भोग का विस्तार है, इस तरह बादरायण की कहीं भी आप के अभिमत अर्थ की विवक्षा नहीं है। भास्कराचार्य ने भी कहा है-सूत्र के अभिप्राय को छिपाकर तथा उसमें अपने अभिप्राय को निविष्ट करके जिन लोगों ने ब्रह्मसूत्र की व्याख्या की है, उनके ही खण्डनार्थ यह हमारी व्याख्या है। इसी अभिप्राय से श्रीभाष्यकार ने भी कहा है कि-भगवान् बोधायन द्वारा प्रणीत विस्तृत ब्रह्म सूत्रवृत्ति को पूर्वाचार्यो ने संक्षिप्त किया उन्हीं के मतानुसार हम ब्रह्म सूत्र के अक्षरों की व्याख्या करेंगे।

यत्पुनः उक्तं प्रमाणाविरुद्धत्वेन सूत्रार्थानामन्यथाकथनमयुक्तमिति–तन्नूनंश्रुतिरव–सिद्धान्तेनोक्तम्, सूत्राण्यपि यथाकथञ्चिद्योजयितव्यानीति क्वचित् भवत्कूटस्थैर्व्याख्यानात् दृश्यते च जैमिनि पतञ्जलिकणभक्षाक्षपादादिसूत्रेष्वपि तत्तद्व्याख्यातृभिरध्याहारादिक–ल्पना। तदाह; 'लोके येष्वर्थेषु प्रसिद्धानि यानि पदानि तानि सति सम्भवे तदर्था–न्येव सूत्रेष्वपि' (मी. मा. १) इति। अध्याहारादिभिः स्वाभिमतार्थपरतया निर्वाहो वेद-सम्प्रदायस्त्ववैदिकपरिग्रहविशेषादिभिराप्तोक्तत्वनिश्चये मन्वादिप्रणीतधर्मशास्त्रादिष्वपि। क्वाचित्कवेदविरोधादेर्यथाकथञ्चिदुपशमयितव्यत्वात्। अत एवाह सति सम्भव इति। श्रुतिसूत्रयोरविरोधे सूत्रेऽध्याहारादिकमन्याय्यम्। विरोधप्रसंगे पुनः अध्याहारादिभिस्सूत्रं श्रुत्यनुगुणतया नेतव्यम्। न चासौ विभ्रम इति शङ्कितुमपि शक्यम्; सकलवेदशाखा-प्रवर्तनाधिकृतत्वात् क्वचिदपि प्रमाणविरुद्धार्था दर्शनात् परिग्रहातिशयाच्च। अतस्तदु–क्तेषु सूत्रेषु यत्र क्वचित् प्रमाणविसम्वादे यथाकथञ्चित् समाधातव्यम्, न चास्ति विसं-वाद इति दर्शितमिति॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचा–र्यस्य कृतिषु शतदूषण्यां परमते सूत्रस्वारस्यभङ्गवादः षट्षष्ठितमः॥६६॥



प्रसाद—जिन अद्वैती विद्वानों ने अपने सिद्धान्त का श्रवण नहीं किया है वे लोग ही कहते है कि प्रमाण का विरोध होने मात्र से सूत्रों का दूसरा अर्थ करना अनुचित है । क्योंकि आपके ही कूटस्थ पुरुषों ने कहीं पर कहा है कि सूत्रों के अन्वय का किसी तरह निर्वाह करना चाहिए । किञ्च-जैमिनि ; कनाद तथा गौतम सूत्रों के व्याख्याकारों ने अपेक्षित अध्याहार किया है यह देखा जाता है । कहा भी गया है—लोक में जिन अर्थों में जो पद प्रसिद्ध हैं जहाँ तक सम्भव हो सूत्रों के भी तत्-तत् पदों को उन्हीं अर्थों में लेना चाहिए । अध्याहार आदि के द्वारा अपने अभिमत अर्थ का निर्वाह, वेद संवाद भूयस्त्व तथा वैदिक परिग्रह विशेष आदि के द्वारा आप्तोक्ततत्व का निश्चय करने के लिए मन्वादिधर्म शास्त्रों में भी देखा जाता ह । क्योंकि कहीं-कहीं पर होने वाला वेद का विरोध भी किसी तरह करना ही चाहिए । इसी लिए कहा गया है कि-'सति सम्भवे' । श्रुति तथा सूत्र में विरोध होने पर सूत्रों में अध्याहार करना अन्याय है । बिरोध का प्रसङ्ग होने पर अध्याहार आदि के द्वारा सूत्रों को श्रुति के अनुकूल बनाया जाता है । इसे विभ्रम इसलिए नहीं माना जा सकता है कि बादरायण महर्षि सम्पूर्ण वेद की शाखा का प्रवर्तन करने के लिए अधिकृत हैं, कहीं भी बादरायण प्रोक्त सूत्रों के अर्थ प्रमाणों के विरुद्ध नहीं है तथा बादरायण का सब लोग अत्यन्त समादर करते हैं । अतएव बादरायण प्रोक्त सूत्रों में जहां कहीं भी प्रमाणों से विरोध होता है, वहाँ पर किसी प्रकार समाधान करना चाहिए । किञ्च मैने स्पष्ट किया है कि ब्रह्म सूत्रों का प्रमाणों से कहीं भी विसम्वाद नहीं है ।

इस तरह शतदूषणी के परमतेसूत्रस्वारस्यभङ्गवाद नामक छियासठवें वाद का हिन्दी प्रसाद सम्पूर्ण हुआ ।।





❀ तत्त्वमुक्ताकलापप्रकाशनसंघ के संस्थापक एवं संचालक ❀

**भारतीय वसुन्धरा के सिद्धसन्त, योगिसम्राट् श्रीदेवराहा बाबा**

संघ के उद्देश्यः—विशिष्टाद्वैत दर्शन के सर्वश्रेष्ठ व्याख्याकार सर्वतन्त्रस्वतंत्र कवितार्किकसिंह श्रीमद्वेङ्कटनाथ वेदान्तदेशिक प्रणीत ग्रन्थों का हिन्दी अनुवाद के साथ प्रकाशन।

❀ संघ के अन्य प्रकाशन ❀

१-- सर्वार्थसिद्धि समलंकृत तत्त्वमुक्ताकलाप नायकसर ( हिन्दी-अनुवाद के साथ )

२-- सर्वार्थसिद्धि समलंकृत तत्त्वमुक्ताकलाप बुद्धिसर ( हिन्दी अनुवाद के साथ )

३-- हिन्दीश्रीभाष्य १४ भागों में।

४-- तत्त्वत्रयम् हिन्दी तथा संस्कृत व्याख्या के साथ।

५-- वेदान्तदेशिक भाष्य समलंकृत ईशावास्योपनिषद् ( हिन्दी व्याख्या युक्त )।

६-- अतिमानुषस्तव एवं श्रीस्तव ( हिन्दी व्याख्या युक्त )।

७--चण्डमारुत समलंकृत शतदूषणी प्रथम ( हिन्दी अनुवादयुक्त )

८--चण्डमारुत समलङ्कृत शतदूषणी द्वितीय भाग।

९-- चण्डमारुत समलंकृत शतदूषणी तृतीयभाग।





